संस्कृतविद्यापीठग्रन्थमालायाः पञ्चाधिकशततमं पुष्पम्

# वैदिकऋषिदृष्टिसमीक्षा

प्रधानसम्पाकः

**प्रो. रमेशकुमारपाण्डेयः**

कुलपतिः

लेखकः

**डॉ. सुन्दरनारायणझाः**

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-16**

# नैवेद्यम्

यान्यपि ज्ञानविज्ञानानि सर्वेषामस्माकं समक्षं विद्यमानानि सन्ति तेषां समेषामाविष्कारका: सन्त्यस्माकं पूर्वजा वेदानां तात्त्विकार्थोपदेशका: परमवैज्ञानिका: करुणार्द्रहृदया: ब्रह्मसाक्षात्कृता ऋषय:। तथा च स्मर्यते-

**युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षय:।**
**लेभिरे तपसा पूर्वमनुज्ञाता: स्वयम्भुवा:।।**

प्रलयकाले यदा सर्वे वेदा: साङ्गा: सरहस्या: सेतिहासाश्च परब्रह्मण्यन्तर्हिता भवन्ति, तदानीं पुनस्तेषामत्रोपदेशाय परमकारुणिका ऋषयस्तपोबलाद्ब्रह्मसायुज्यमवाप्य तांस्तान् वेदान् याथातथ्येन स्वप्रातिभ-चक्षुषाऽवलोक्य स्वशिष्येभ्योऽवरेभ्य ऋषिभ्यस्तदुपदिशन्ति। तेषामृषीणां दृष्टि: कथं लोककल्याणकारिकेत्यस्माकमाचार्या बहुविधं चिन्तितवन्त-स्तेषामाचार्याणाञ्चिन्तनं सङ्कलय्य गवेषणात्मिकया बुद्ध्या श्रीलालबहादुर-शास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य वेदविभागस्य सहायकाचार्येणायुष्मता डॉ. सुन्दरनारायणझोपाख्येन **वैदिकऋषिदृष्टिसमीक्षा** नाम्नो ग्रन्थो नवस्वध्यायेषु ग्रथित:।

ग्रन्थेऽस्मिन् ये विषया: समाकलितास्तेषामाधारेणेदं वक्तुं शक्यते यदयं ग्रन्थो गवेषकाणामध्येतृणाञ्च कृते महदुपकारको भविष्यतीति। ग्रन्थोऽयं लोकप्रतिष्ठामवाप्य ग्रन्थकर्तुर्यशोवर्द्धनेऽपि साहाय्यं विधास्यति। अग्रेऽप्येतादृशाणामाकरग्रन्थानां लेखनसम्पादनादिना लोकोपकारकरणे प्रवृत्तोऽयं भविष्यतीत्यहमाशासे।

शुभाशिष: शतश: सहस्रश:।

**प्रो. रमेशकुमारपाण्डेय:**
कुलपति:
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-110016

# पुरोवाक्

जगति विद्यमानस्य सकलस्यापि ज्ञानविज्ञानस्याधारग्रन्थोऽस्ति वेदः। स्वरूपभेदाद्वेदास्सन्ति त्रिविधः संहिताभेदाच्च चत्वार इति। चतसृष्वपि संहितासु ये मन्त्रास्सन्ति तेषां विभाजनं ज्ञानकाण्ड-कर्मकाण्ड-उपासनाकाण्डेषु विहितमस्माकमाचार्यैः। त्रिष्वपि काण्डेषु ज्ञानकाण्डस्य महत्त्वं वरीवर्ति। तथा चावादि कृष्णः- **न हि ज्ञानेन सदृशं पवित्रमिह विद्यते** (गीता) इति।

एवं सर्वत्र ज्ञानविज्ञानयोर्महत्त्वं वर्णितमस्ति। अस्त्युभयोः पार्थक्यं यथोक्तमपि- **ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषत** (गीता) इति। तेनेदं स्फुटम्भवति यज्ज्ञानं सर्वसाधारणमपि भवितुमर्हति परं विज्ञाने त्वस्ति किञ्चिद्वैशिष्ट्यम्। शिल्पशास्त्रादिषु विज्ञानस्य चमत्कारो दृश्यते। शिल्पस्त्वात्मसंस्कृत्यात्मको भवतीति श्रौतादेशः।

तदनु ज्ञाने विज्ञाने चोभयत्र कुशलाश्चासन् ब्रह्मसाक्षात्कार-कर्त्तारोऽस्माकमृषयस्ते याथातथ्येन मन्त्राणां दर्शनं कृत्वा स्वशिष्येभ्यः समुपदिष्टवन्तः। तत्र तेषामृषीणां दृष्टिः कथं जगत्कल्याणकारिकेत्य-स्मिन्विषयेऽप्यस्माकमाचार्यैर्बहुविधं चिन्तनं कृतम्।

यद्यप्याचार्याणां चिन्तनं भिन्न-भिन्नग्रन्थेषु वर्तते परमस्ति तेषां समेषामपि चिन्तनानामेकत्रीकरणस्यावश्यकतेति मत्वा श्रीलालबहादुर-शास्त्रीराष्ट्रियसंस्कृतविद्यापीठीयवेदविभागीयसहायकाचार्येण डॉ.सुन्दरनारायणझोपाह्वेन महता परिश्रमेण नवस्वध्यायेषु **वैदिकऋषिदृष्टिसमीक्षा** नाम्नो ग्रन्थस्य ग्रथनं विहितम्।

अत्र ये विषयाः सङ्कलितास्ते जनसामान्येभ्यो गवेषकेभ्योऽध्ययन-कर्मनिरतेभ्यश्चोपकारकाः भविष्यन्तीति मे मतिः।

शुभाशीर्वादसहितम्।

**प्रो. हरेरामत्रिपाठी**
शोध-प्रकाशनविभागाध्यक्षः

**प्रो. विद्येश्वरझा:**
**प्राचार्य:/विभागाध्यक्ष:**
**स्नातकोत्तरवेदविभाग:**
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालय:,
कामेश्वरनगरम्, दरभङ्गा

# अनुशंसनम्

विदन्त्येव वेदविदो मनीषिणो यदस्य चराचरात्मकस्य जगत: समुत्पत्तिस्तस्मादेव सर्वहुत: परमेश्वराद्बभूव। तथोक्तमुपनिषदि-

**यथोर्णनाभि: सृजते गृह्णते च**
**यथा पृथिव्यामोषधय: सम्भवन्ति।**
**यथा सत: पुरुषात्केशलोमानि**
**तथाक्षरात्सम्भवतीह विश्वम्॥** (मुण्डक 1.7)

एतन्मन्त्रमाध्यमेन सृष्टिरचनाप्रसंगे सर्वस्वतन्त्रेश्वरस्य त्रिविधोपाया: प्रदर्शिता:। ईश्वरकर्तृकोपाया, ईश्वरप्रेरितोपाया, ईश्वरप्रेरितप्रकृतिजन्योपायाश्चेति। तत्रेश्वरो जगच्चक्रं सम्यङ्निर्वोढुं प्रथममृषीवोद्भावयति तथा हि- **महर्षय: सप्त पूर्वे चत्वारो मनवस्तथा। मद्भावा मानसा जाता येषां लोक इमा: प्रजा:॥** (गी. 10.6) एवञ्च महर्षियास्काचार्योऽप्याह-**साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादु:। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषु: वेदञ्च वेदाङ्गानि च** (नि. 1.6.20)। तस्मादृषय एव जगतो निर्वोढार इति। तेषां वैदिक-ऋषीणाञ्जगदवलोकनदृष्टि: कीदृशीति मनसि निधाय श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्थेन विपश्चिदपश्चिमेन विद्यावाचस्पतिना डा. सुन्दरनारायणशर्मणा लिखितां वैदिकऋषिदृष्टिसमीक्षां समग्रामपि नवाध्यायात्मिकामादितोन्तमवालोकयम्। तत्तस्थितान्सर्वानपि विषयान् सिंहावलोकनन्यायेनाद्राक्षम्। प्रत्यध्यायं ये विषया ग्रन्थकारेण समीक्षितास्तैर्विषयविशिष्टैर्गवेषकेभ्योऽध्यापकेभ्यश्छात्रेभ्यश्च महानुपकारो भवेदिति मे मनीषा। मोमुद्यते च चेतो मे भवादृशानां वेदविषयस्फोटकानां लेखनगवेषणप्रक्रिया दर्शनेन। प्रार्थये च भगवन्तं भूतभावनं सदाशिवं शाश्वतकल्याणप्राप्तये चिरजीवनाय च, ग्रन्थान्तरलेखनायेति शम्।

**माघी पूर्णिमा 03.02.15** **प्रो. विद्येश्वरझा:**

**डॉ. पं. श्री शशिनाथझाः**
व्याकरण-साहित्याचार्यः, एम.ए.,
विद्यावारिधिः, विद्यावाचस्पतिः (डी.लिट.),
साहित्य अकादेमी-भाषासम्मानविभूषितः,
प्राचार्यः, स्नातकोत्तरव्याकरणविभागः,
कामेश्वरसिंह-दरभङ्गा-संस्कृत-विश्वविद्यालयः,
कामेश्वरनगरम, दरभङ्गा (विहारः) 846008

**Dr. Shashi Nath Jha**
Professor, Vyakaran
K.S.D. Sanskrit University,
Darbhanga (Bihar) 846008
Mob. 09199475909

# सम्मतिः

वैदिकप्रवरेण सततगवेषणापरायणेन आयुष्मता श्रीसुन्दरनारायणझा-शर्मणा संकलितं सुसंस्कृतं सुयोजितञ्च 'वैदिकऋषिदृष्टिसमीक्षा' नामकं पुस्तकं परममहत्त्वपूर्णं विद्यते। ऋषयो हि दिव्यदृष्टिसम्पन्नाः सम्पूर्णं ब्रह्माण्डमेव हस्तामलकवद् दृष्ट्वा ततो लोकोपयोगितत्त्वानामुपस्थापनमकुर्वन्। ते परमात्मनोऽवतारस्वरूपा रोचना-दृष्टि-वक्तृलक्षणाः ऋतु-स्फुट-तत्त्वलक्षणां तात्त्विकीमथ च वैज्ञानिकीं दृष्टिमधारयन्। तेषां वचोऽमृतं यदस्माभिर्लब्धं तेन तेन तेषां सांस्कृतिकप्राकृतिकदार्शनिक-काव्यात्मकजीवनमस्माकं पुरः समुपस्थितं सत् सततं प्रेरणास्पदं वर्तते।

अस्मिन् पुस्तके जगन्मूलकारणविषये देवानां दशमतानि भृशं ध्येयानि सन्ति। पुरुषार्थविषये लोककल्याणात्मिका दृष्टिरनुशीलनीयास्ति। विशेषतोऽस्माकं जीवने तेषां ऋषीणां प्रभावः स्वतः कथं विराजते, कथं चाधिकाधिकरूपेण तद् ग्रहीतुं शक्यत एतस्य पथप्रदर्शकमिदं पुस्तकमिति सर्वैरनुशीलनीयं वर्तते।

9.02.2015

**शशिनाथझाः**

# प्राक्कथनम्

वन्दे निर्मलपूर्णचन्द्रवदनं वन्दे कृपासागरं
वन्दे दाशरथिं सुरेन्द्रविनतं वन्दे जगत्कारणम्।

वन्दे लक्ष्मणसंयुतं रघुवरं सीतापतिं सुन्दरं
वन्दे ब्रह्मशिवादिसेव्यमनिशं भक्तेष्टसिद्धिप्रदम्।।

विद् ज्ञाने धातोर्घञा निष्पन्नस्य वेदशब्दस्यार्थो भवति ज्ञानम्। अत्र ज्ञानार्थप्रतिपादको वेदशब्दो ब्रह्मज्ञानस्य द्योतको वर्तते। वेद-ब्रह्मशब्दयोरभेदात् समानार्थकत्वं तु स्वत एव सिद्ध्यति। तदुक्तं श्रुतौ- ''ब्रह्म वै मन्त्रः''[1] ''वेदो ब्रह्म''[2] चेति। आभ्यां श्रौतवचनाभ्यां वेदब्रह्मणोरैक्यं सुस्पष्टम्। श्रौतशास्त्रेषु ब्रह्म, विद्या, वेद इतीमे त्रयोऽपि शब्दाः एकस्मिन्नेवार्थे प्रयुक्तास्सन्ति। वेदानां विषये प्राचीनसंस्कृतवाङ्मये त्रयं ब्रह्म[3], त्रयीविद्या[4], त्रयो वेदा[5] श्चेत्येवं प्रयोगो दृश्यते। यद्यपि ज्ञानरूपोऽर्थस्त्रिष्वपि समानस्तथापि त्रिष्वपि तेषु ज्ञानेष्वस्ति सूक्ष्मतमो भेदः। तत्र वस्त्ववच्छिन्नं ज्ञानं ब्रह्मशब्देनोच्यते; प्रत्यक्षप्रमाणजन्यं ज्ञानमेव वस्त्ववच्छिन्नं भवति। संस्कारावच्छिन्नं ज्ञानं विद्याशब्देनोच्यते। एतादृशं ज्ञानं पूर्वसञ्चितसंस्कारैर्जायते। शब्दावच्छिन्नं ज्ञानं वेदशब्देनोच्यते। एतादृशं ज्ञानं शब्दप्रमाणेन जायते। इत्थं विद्यमानेऽप्यस्मिन् सूक्ष्मतमे भेदे ब्रह्मादीनां त्रयाणामपि शब्दानामेकस्मिन्नर्थे

---

1. श.प.ब्रा- 7/1/1/5
2. जैमिनीयोपनिषदि - 4/11/4/3
3. त्रयं ब्रह्म सनातनम्, मनु- 2/7
4. सैषा त्रय्येव विद्या तपति, श.प. ब्राह्मणे- 10/5/2/1
5. ते सर्वे त्रयो वेदाः, श.प.ब्रा- 10/4/2/25

प्रयोगो न खल्ववलोक्यते। पूर्वोक्तेन प्रकारेण शब्दाज्जायमानं ज्ञानं तत्साधनं शब्दश्च यद्यपि वेदपदबोध्यो भवति, तथाप्यद्य लौकिकालौकिकज्ञानसाधनभूतेषु शब्देष्वेव वेदशब्दप्रसिद्धिर्जाता। फलतोऽद्य वेदशब्दो ग्रन्थविशेषस्यैव बोधको जातः।

सत्यप्येवं तत्र वेदग्रन्थेषु वेदशब्दस्य, तत्त्वान्तरभेदबोधकाना-मृग्यजुस्सामशब्दानां सामान्यार्थबोधकस्य वाक्शब्दस्य च प्रयोगः प्रत्यक्षज्ञानस्य साधनेषु तद्विषयेष्वपि च वर्तते। अत एवोक्तम्मनुना- "वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे।"[6] अर्थात् सृष्ट्यादौ स परमात्मा हिरण्यगर्भरूपेणावस्थितः सर्वेषां नामानि कर्माणि च पृथक्-पृथक् वेदशब्देभ्य एवावगम्य निर्मितवान्। भगवता व्यासेनापि वेदमीमांसायां वेदपूर्विकैव जगत्सृष्टिर्व्युत्पादिता। तथा च शारीरकसूत्रम्- "शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्"[7] इति। स एव परमात्मा यस्य नाम मनुना ब्रह्मेति प्रोक्तमग्निवायुरविभ्य ऋग्यजुस्सामसंज्ञं सनातनं वेदत्रयमाकृष्टवानिति। तदुक्तं मनुना-

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्॥**[8]

अर्थात्पूर्वकल्पे ये वेदास्त एव परमात्ममूर्तेर्ब्रह्मणः सर्वज्ञस्य स्मृत्यारूढाः। तानेव कल्पादौ अग्निवायुरविभ्य आचकर्ष। तथा च श्रुतिः-

"अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः"[9] इति। मनुना यः कश्चिद्धर्मः कस्यचिद्ब्राह्मणादेरुक्तस्स सर्वो वेदे प्रतिपादितः। तस्माद्वेदानां विषये मनुराह- "सर्वज्ञानमयो हि सः"[10] इति।

परब्रह्मपरमात्मनो निःश्वासभूतानां, विविधज्ञानविज्ञानराशिमूलानां,

---

6. मनुस्मृतौ- 1/21
7. व्याससूत्रम्- 1/3/28
8. मनुस्मृतौ- 1/23
9. ऐ. ब्रा. - 5/32
10. मनुस्मृतौ- 2/7

परब्रह्मपरमेश्वरस्य तात्त्विकस्वरूपोपवर्णकानां, शब्दसमूहानामार्यसंस्कृत्याः प्राणरूपाणां, मन्त्रब्राह्मणात्मकानां वेदानाम्महत्त्वमस्माभिरविदितं नास्ति, यान् विहाय जीवस्य कश्चिदपि पक्षः सुप्रकाश्यो न भवति।

परब्रह्मणो नित्यत्वात्तेषां निःश्वासभूतानां शब्दराशीनां वेदानामपि नित्यत्वं सुसिद्धमेव नात्र काचिद्विप्रतिपत्तिस्तस्मादुक्तं सायणाचार्येण–

**ब्रह्मनिःश्वसितं वेदाः यो वेदेभ्योऽखिलं जगत्।**
**निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्।।** इति।[11]

वस्तुत 'अग्निमीळे पुरोहितम्', 'इषेत्वोर्जेत्वा', 'अग्न आयाहि', 'ये त्रिषप्ताः परियन्ति' इत्यादिभ्यः शब्देभ्य आरभ्यमाणाः शब्दराशिभूताः वेदाः परब्रह्मपरमात्मनो निकषोपलाः। यथोक्तं श्रुतौ–

**द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।**[12]

उक्तेऽस्मिन् श्रौतवचने ब्रह्मणः स्वरूपद्वयं शब्दब्रह्मात्मकं परं ब्रह्मात्मकञ्च प्रतिपादितम्। तत्र विशेषेणेदमवधेयं यद्यो हि जनः शब्दब्रह्मणि निष्णातो भवति स एव परब्रह्माणमधिगच्छतीति। शब्दब्रह्मरूपा वेदा ऋग्यजुस्सामात्मकास्सन्ति। ऋग्वेदश्छन्दसामर्थात्पद्यानां (कवितानां) जगति सर्वप्रथमः परिचायकोऽस्ति। वस्तुतो वेदस्त्वेक एवास्ति। किञ्च स्वरूपभेदात्त्रिविधोऽस्ति - ऋग्वेदो, यजुर्वेदः, सामवेदश्चेति। तदुक्तं दुर्गाचार्येण निरुक्तविवृतौ- "वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेक- शाखाभेदेन समाम्नासिषुः। सुखग्रहणाय व्यासेन समाम्नातवन्तः" इति।[13] सोऽयं वेदत्रयीति पदेन व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते। या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी

---

11. सायणभाष्यारम्भे - उल्लिखितोऽयं श्लोकः।
12. अमृतबिन्दूपनिषदि- 17 मैत्रायण्याम्- 6.12
13. दुर्गाचार्यः, निरुक्तविवृतौ - 1/20

रचना सा सामेति कथ्यते। तदुक्तं जैमिनिना– ''तेषामृग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्दः'' इति।[14] वेदेषु ऋग्वेदस्य गौरवं सर्वातिशायि अस्ति। अत्र गायत्रीमारभ्याऽतिधृतिपर्यन्तं चतुर्दशसु छन्दस्सु वैदिकानामृषीणां पद्यरचनाः सङ्कलिताः सन्ति। अस्मात्पूर्वं न कोऽपि पद्यात्मको गद्यात्मको वा छन्दसां परिचयात्मको ग्रन्थः प्राप्यते। तस्माद्विश्वस्याद्यो ग्रन्थो वेदो मन्यते। वैदिकमन्त्राश्छन्दोबद्धाः सन्ति, अतस्तेषामुच्चारणनिमित्तं छन्दोज्ञानं नितरामपेक्षितम्।

लौकिककाव्येषु छन्दसः पादबद्धतायाश्च सम्बन्धः एतावान् घनिष्ठोऽस्ति यत् पद्येष्वेव छन्दसो योजना मन्यते, तथा गद्यन्तु छन्दोहीनरचनारूपेण सर्वं स्वीकृतं भवति। वैदिकच्छन्दसो विषये धारणेयम- मान्याऽस्ति। प्राचीनार्यपरम्परानुसारेण गद्यमपि छन्दोबद्धरचना एव मन्यते। दुर्गाचार्येण निरुक्तविवृतौ कस्यापि ब्राह्मणग्रन्थस्य वाक्यं समुद्धृतम्, यस्याशयोऽस्ति छन्दो विना वाणी समुच्चारिता न भवति- ''नाच्छन्दसि वागुच्चरति''[15] इति। भरतमुनिनाऽपि छन्दोविरहितं शब्दं नैव स्वीक्रियते। यथा- ''छन्दहीनो न शब्दोऽस्ति, न छन्दः शब्दवर्जितम्''[16] इति। कात्यायनमुनेर्नाम्ना प्रख्यातम् ऋग्यजुष-परिशिष्टं पूर्वोक्तं तथ्यं स्वीकरोति–

**"छन्दोभूतमिदं सर्वं वाङ्मयं स्याद्विजानतः।**
**नाच्छन्दसि न चापृष्टे शब्दश्चरति कश्चन॥"**

मैत्रायण्यां काठकसंहितायाञ्च- ''छन्दांसि वै वाक्''[17] इत्युक्तम्। उपर्युक्तैः प्रमाणैः ''एकं छन्दो बहुधा चाकसीति''[18] इति भर्तृहरिवचनाच्चेदं स्फुटं भवति यदादावेकमेव छन्द आसीत्, यत्पश्चात् विभिन्नरूपाणि

---

14. जैमिनिसूत्रे - 2.1.32, 33 तथा 38 सूत्राणि।
15. निरुक्ते दुर्गवृत्तौ- 7/2
16. नाट्यशास्त्रे- 14/45
17. मैत्रायण्याम्- 1/10/9 काठके 36/3
18. वाक्यदीये- 1/121

"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः। यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उप शृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद।।"[28] इत्याद्याः श्रुतय एव प्रत्यक्षं प्रमाणम्।

अथ पुनः कीदृशं तन्मन्त्रदर्शनं-विद्वद्वरेण्यकवीन्द्रादिविरचित-काव्यादेरपि तन्मन्त्रदर्शनमेव विशिष्टं प्रत्यक्षप्रमाणभूतं च मन्यन्ते शास्त्रविदः। तच्चेत्थम्भूतम्– तपसा पवित्रीकृतत्रिकरणानां साक्षात्कृतात्मनामृषीणां सन्निवृत्तशरीरेन्द्रियादिसर्वविषयवृत्तीनां अन्तर्दृशा समाधौ निर्विषयात्मस्थितौ केवलं प्रज्ञानात्मस्फूर्तिपूर्णे निर्मलेऽन्तर्हृदय ईशशक्त्यावेशेन अतीन्द्रियेष्वर्थेषु यत्तत्त्वार्थानुस्फुरणं, तथा सुषुप्तौ स्वप्ने वा अश्रुतपूर्वमन्त्रोपदेशादिश्रवणवत्, तदनुश्रवणम्। यच्च वाचापि तदनुवचनं तदेतद्दर्शनपदार्हं भवति।

तत्रापि गायत्र्यादिछन्दोनिबद्धवागनुश्रवणे 'मन्त्रदर्शनं' गद्यगाथाद्यात्मके 'ब्राह्मणदर्शन'मिति। तथा तदनु श्रवणानुसारेण बुद्धिपूर्वकं तदनुस्मरणेन विरचिते 'स्मार्तदर्शन'मिति प्रसिद्धिः।

अत्र मन्त्रब्राह्मणयोरनुश्रवणात्तयोः 'श्रुति' संज्ञा प्रसिद्धा, कल्पसूत्रादीनां तु स्मरणेन रचितत्वात् 'स्मृति' संज्ञेति विशेषः। एवं तत्र मन्त्रदर्शने द्रष्टुर्ऋषेः वाग्बुद्ध्यादीन्द्रियकृतेरभावात् 'अपौरुषेयत्वम्', ऋषिमुखोदितत्वात् 'तदार्षेयत्वम्', ईशविशानूदितत्वात् 'ईशकृतित्वं' च समासेनोपपद्यन्ते।

'ऋषिः' मन्त्रद्रष्टा मन्त्राणां प्रापक इत्यर्थः। "अनन्ता वै वेदाः"[29] इति वचनाद्यद्यपि असंख्याताः वेदाः वेदमन्त्राश्च भवेयुस्तथापि तत्प्रापकं द्रष्टारमृषिं विना तल्लाभ असम्भव एव। यथा च लोके गुरुं विना मन्त्रो

---

28. छान्दोग्योपनिषदि– 3/13/7-8
29. तैत्तिरीयब्राह्मणे– 3/10/11/3

नोपलभ्यते। तस्मान्मन्त्रादपि मन्त्रोपदेष्टा गुरुरेवास्माकं प्रथमस्तन्मन्त्रप्रापकत्वाद्गुरोः। यथा च परोक्षस्य परब्रह्मणः देवतादेरपि प्रत्यक्षब्रह्मरूपो मन्त्रः प्रधानः, तस्य तत्परोक्षवस्तुप्रापकत्वात्। तथैव प्रत्यक्षब्रह्मरूपात् मन्त्रादपि तत्प्रापकः ऋषिरेव प्रधानस्तस्य मन्त्र-तद्देवतादिप्रापकत्वात्।

ऋषिशब्दव्याख्यानावसरे भगवता यास्केन-

**''साक्षात्कृतधर्माण ऋषयो बभूषुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च''**[30] इत्युक्तम्। तेनेदं यत्प्राक्तना ऋषयः स्वकीयेन विशिष्टतपोबलेन धर्मरूपस्य वेदस्य साक्षात्कारं कृतवन्तस्त एवावरकालिकेभ्यस्तद्विज्ञानशक्तिहीनेभ्यो श्रुतर्षिभ्य शिष्योपाधिकया वृत्त्या शब्दतोऽर्थतश्च मन्त्रान् प्रदत्तवन्तः। वस्तुतः शास्त्रेषु सप्तविधानामृषीणां वर्णनमुलभ्यते। यथा-

**''सप्त ब्रह्मर्षि-देवर्षि-महर्षि-परमर्षयः।**
**काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावराः॥''**[31]

अत्र व्यासादयो महर्षयः, कण्वादयो देवर्षयः, भेलादयः परमर्षयः वसिष्ठादयो ब्रह्मर्षयः, सुश्रुतादयः श्रुतर्षयः, ऋतुपर्णादयः राजर्षयः, जैमिनि-प्रजापत्यादयश्च काण्डर्षयः प्रसिद्धाः सन्ति। यजुर्मन्त्राणां- "प्रजापतिः, सोमः, अग्निः, विश्वेदेवाः, स्वयम्भूश्चेति पञ्च ऋषयो भवन्ति, गायत्रीप्रभृतीनामृचां विश्वामित्रादयश्च।

मैत्रायणीसंहितायां **"ऋषयः कवयः"**[32] इत्युक्तमस्ति। तैत्तिरीयारण्यके-**"अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत्, तदृषयोऽभवन्, तदृषीणामृषित्वम्'**[33] इत्युक्तम्। शतपथश्रुतौ-"यो वै

30. निरुक्ते - नैघण्टुककाण्डे - 1/6/20
31. हिन्दू धर्मकोशे - 138 तमे पृष्ठे।
32. मैत्रायण्याम्- 4/1/2.
33. तैत्तिरीयारण्यके- 2/9/1

ज्ञातोऽनूचानः स ऋषिरार्षेयः"[34] इत्युक्तम्। तथा च–"एते वै कवयो (विप्रा) यदृषयः"[35] इत्युक्तमस्ति।

एभिर्वचनैरिदं स्फुटं यद्रचनाधर्मिणो हि कवयो भवन्ति, ते च देववदेव स्तुत्यास्सन्ति मन्त्रदर्शनकर्मकर्तृत्वात्। अत एव वेदमन्त्रैर्यत्काव्यं सृष्टं तद्देवकाव्यमिति पदेन व्यवह्रियते। उक्तं हि यथाऽथर्ववेदे–**देवस्य पश्य काव्यं न ममार न जीर्यति।**"[36] अर्थाद्वैदिका ऋषयः मनोभिलषित-भावाभिव्यक्तीकरणे परमपटव आसन्। वैदिकवाङ्मयस्य पद्येषु गद्येष्वपि तादृशं सौष्ठवं वैलक्षण्यञ्च प्राप्यते यत्तेन विदुषां मनांसि हठादाकृष्यन्ते। लौकिकेषु काव्येषु जातेष्वपि वैदिकवाङ्मयगता काव्यमाधुरी नापकृष्टतां गता तत्पठतां मनांसि वैदिकं काव्यमेव प्रथमं मन्यते, ततोऽनन्तरं लौकिकादि किञ्चिदन्यत्। वेदमन्त्रेषु विविधरसानामलङ्काराणाञ्च प्रयोगो नितान्तमुचितं भव्यं मनोरमं हृदयावर्जकञ्चास्ति।

एवं गुणविशिष्टेषु वैदिकसाहित्येषु सर्वविद्यानां सूत्राणि विद्यमानानि सन्ति। तान्येव सूत्राण्यादायावरकालिका ऋषयः परमवैज्ञानिकाः यज्ञशालात्मके स्वीयायां प्रयोगशालायां कृष्णाजिनेषूपविश्य तत् तत्तत्त्वं यथावदवलोक्य नानाशास्त्राणि विरचितवन्तः। दर्शनं मानसिकं भवति। अर्थात् कस्यचिदृषेर्मान-सोद्गारो मन्त्रदर्शनमस्ति। अत एव छन्दांसि आर्षाणि कथ्यन्ते, यतस्तानि ऋषिमानसेन दृष्टानि भवन्ति।

यद्यपि कलियुगे ऋषयो न भवन्ति तस्माद्वेदमन्त्रदर्शनं त्वद्य न भवति, परं लौकिकसाहित्यनिर्माणे अनेके कवयः प्रवृत्ताः सन्त्येव। तस्मादद्यापि ये कवयः संरचनां कुर्वन्ति ते, तद्रचनालेखनात्पूर्वं मानसे तत्सम्बन्धितभावदर्शनं प्राप्नुवन्ति। तदनन्तरमेव ते स्वमानसोद्गारान् वाणीरूपेण परिवर्तयन्ति। अतस्ते तद्विरचनात्पूर्वं भावदर्शनाद्रचनाया द्रष्टार एव भवन्ति। यो

---

34. श.प.ब्रा.– 4/3/4/19.
35. श.प.ब्रा. 1/4/2/7, 8.
36. अथर्ववेदे– 10/8/32

भावद्रष्टाऽस्ति, स एव रचयिता वर्तते। अत एव कालिदासादयो रचनाकाराश्चापि कवय इत्युच्यन्ते। वर्त्तमानयुगेऽपि ये कवयस्सन्ति तेऽपि रचनाधर्मित्वगुणगौरवादेव स्वमानसोद्गारमभिव्यक्तीकुर्वन्ति।

सत्यमेवैतद्यदद्यत्वे काव्यसर्जनकर्मनिरता कवयो लौकिकतत्त्वान्यवलोक्यैव किमपि स्वान्तःस्थभावं श्लोकरूपेण प्रकाशयन्ति। यतस्तेषामलौकिकतत्त्वदर्शनसामर्थ्याभावः। परं वैदिका ऋषय उभयमपि तत्त्वं लौकिकमलौकिकञ्च यथावदवलोक्य स्वोद्गारं प्रकटितवन्तस्तस्मात्ते सन्त्यस्माकमाधारपुरुषाः, परमात्मसदृशाः, सर्वेष्वपि रचयितृषु परमुत्कृष्टाश्च। अत एवाधुना तेषामुत्कृष्टानां वैदिककवीनां गौरवात्मकानि कर्माणि मनसि निधाय किमपि स्वोद्गारमभिव्यक्तीकर्त्तुं **"वैदिकऋषिदृष्टिसमीक्षा"** इति शीर्षकानुसारं यथोपलब्धसामग्रीसहितोऽहं ग्रन्थसङ्कलने प्रवृत्तोऽभूवम्। आशासे वैदिककवीनां जीवन-मन्त्रदर्शनप्रसिद्धिप्रभावादीनां विषयाणां विवेचनात्मकोऽयं ग्रन्थः समाजकल्याणाय वेदगौरवाय विदुषामन्तःकरणमाह्लादाय च समर्थो भविष्यतीति। ये विषया अत्र मया प्रतिपादितास्तैर्यदि विद्वांसः सन्तुष्टाः, स्वाध्यायशीलाश्छात्राः गवेषकाश्च लाभान्विताः भविष्यन्ति चेन्मदीयः परिश्रमः सार्थको भविष्यतीति मन्ये।

अत्र प्रतिपादिताः विषयाः कुतश्चित् कस्यचिद् विदुषो ग्रन्थात् सङ्कलिताः सन्ति, तस्मात् संकलनग्रन्थोऽयं नवस्वध्यायेषु विभक्तोऽस्ति। तत्र प्रथमेऽध्याये–परमात्मनोऽवतारभूताः कवयः, द्वितीयेऽध्याये–वैदिककवीनां त्रिगुणात्मिका दृष्टिः, तृतीयेऽध्याये–वैदिककवीनां तात्त्विकी दृष्टिः, चतुर्थेऽध्याये वैदिककवीनां वैज्ञानिकी दृष्टिः, पञ्चमेऽध्याये–वैदिकविभिर्जगतः मूलकारणस्यान्वेषणम्, षष्ठेऽध्याये–वैदिककवीनां सांस्कृतिकं प्राकृतिकं दार्शनिकञ्च जीवनम्, सप्तमेऽध्याये–वैदिककवीनां काव्यात्मकं जीवनम्, अष्टमेऽध्याये–वैदिककवीनां लोककल्याणात्मिका दृष्टिः, नवमे चाध्याये–परवर्तिसंस्कृतसाहित्ये वैदिककवीनां जीवनप्रभावः यथोपलब्धप्रमाणतर्कादिभिः समुपस्थापिताः। ग्रन्थसङ्कलने [illegible], येषां रचयितृणां

रचनाश्च मयाऽत्रोद्धृतास्ते सर्वे पूज्या अस्माकं गौरवभूता आचार्याः पितरः ऋषयश्च सर्वथा स्मरणीयाः सन्ति। येषां ग्रन्थानां सहयोगो मया स्वीकृतस्ते ग्रन्थलेखकाश्चापि वन्दनीयाः। अन्ये ये ज्ञाताज्ञातसहायकर्तारस्सन्ति ते सर्वे धन्यवादार्हाः। ग्रन्थेऽस्मिन् ये विषयाः खलूत्तमाः तर्केतिहासादिभिः परिपुष्टास्तेऽस्माकं गुरुजनानामाचार्याणां पितृणाञ्चाशीर्वादस्वरूपाः सन्ति, परं येऽत्रानुपयुक्ताः अप्रामाणिकाः विद्वद्भिरस्वीकृताश्च विषयाः प्रतिपादितास्ते मदीयाः स्वल्पज्ञानप्रकाशकाः बुद्धिभ्रमद्योतकाश्चेति।

कृतज्ञताज्ञापनक्रमे सर्वप्रथममहमीश्वरं प्रणम्येष्टं मर्यादापुरुषोत्तमं श्रीरामं च संस्मृत्य बिहारप्रान्तस्थ-द्वारबंगजिलान्तर्गत-लगमास्थ-जगदीशनारायणब्रह्मचर्य्याश्रमस्य संस्थापकानां साकेतवासिनां पूज्यानाम्महर्षीणां ब्रह्मचारिजीमहोदयानां दीक्षासंस्कारप्रदातृणां पादपद्मयोः प्रणामपुष्पाञ्जलिं समर्पयामि।

मातृपादाभिः श्रीमतीभिः स्व. हीरादेवीभिश्शरीरमिदं प्रदाय सम्पोष्य सम्वर्ध्य चैतत्कर्मप्रवर्तयितृभिर्योऽनुग्रहो विहितस्तदर्थं तासाञ्चरणारविन्दयोः कोटिशः प्रणामपुष्पाञ्जलिं समर्पयामि।

पितृपादानां स्व. पं. श्रीशशिकान्तझामहोदयानां प्रेरणयैवाहं वेदाध्ययने प्रवृत्तोऽभवमिति विषये मूलभूतानामेषां चरणारविन्दयोः प्रणामपुष्पाञ्जलिं समर्पयामि।

सर्वेषामप्याचार्यप्रवराणां प्रो. उपेन्द्रझा, प्रो. लक्ष्मीश्वरझा, प्रो. विद्येश्वरझा, स्व. पं. जगदानन्दझा (वैदिकजी), प्रो. शशिनाथझा, श्रीश्रीनारायणमिश्र, श्रीसुधीरनाथझामहोदयानां चरणारविन्दयोः हृदयेन प्रणामाञ्जलिं समर्पयामि।

ज्येष्ठभ्रातृणां श्रीसत्यनारायणझा, श्रीअवधानारायणझा, श्रीशीतल-नारायणझामहोदयानां पादारविन्दयोः प्रणामाञ्जलिं समर्पयामि।

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोध-प्रकाशनविभागा-ध्यक्षाणां प्रो. हरेरामत्रिपाठीमहोदयानाञ्चरणारविन्दयोः पौनःपुन्येन प्रणामाञ्जलिं

समर्पयामि, यतस्तेषां सहयोगः ग्रन्थप्रकाशनायाविस्मरणीयः।

विविधविद्यापारावारसन्तरणचातुरीचारुच्छविमण्डिताय श्रीलालबहादुर-शास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य कुलपतये प्रो. रमेशकुमारपाण्डेयमहोदयाय प्रणामञ्जलिं समर्पयामि।

विद्यापीठस्यास्य कुलसचिवपदमलङ्कुर्वतीभ्यः श्रीमतीरेनूबत्तरामहोदयाभ्यो धन्यवादानशेषान् वितनोमि। यतस्ताभिः ग्रन्थप्रकाशनार्थमुचितधनव्यवस्थामकारि।

ग्रन्थस्यास्य टङ्कणमुद्रणादिभिः प्रकाशनयोग्यतां प्रतिपादकाय अमरप्रिंटिंगप्रेसस्य संचालकाय श्रीमते हीरालालमहोदयाय धन्यवादं व्याहारामि यतस्तेन सावधानतया टङ्कणमुद्रणादिकञ्च यथासमयमकारि।

विद्यापीठीयशोधसहायकाय डॉ. ज्ञानधरपाठकाय चाशेषान् धन्यवादान् वितनोमि। सदसद्विवेकसम्पन्नानां, श्रीसीतारामगुणगानरतानां बरिऔल (दरभङ्गा) ग्रामवासिनां श्रीमुनीन्द्रझामहोदयानां चरणकमलयोः प्रणामाञ्जलिं निवेदयामि।

धर्मपत्न्यै श्रीमत्यै रेणुदेव्यै, अपत्येभ्यः चि. आशुतोषचन्द्रझा, चि. अभिषेकचन्द्रझा, आयुष्मती शिवानीकुमारीझा इत्याद्येभ्यश्च शुभाशीर्वादान् वितनोमि। यतस्तैः ग्रन्थप्रणयनकर्मण्यस्मिन् व्यस्ततावशात् मत्पितृकर्त्तव्यपालने जातां न्यूनतां सोढ्वाऽपि ममोत्साहो वर्धितः। अन्ते च–

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥**

**रामेन्द्वनन्ताक्षिमिते सुवर्षे दिल्लीनगर्यां कटवारियायाम्**
**स्थितो मुदा सञ्चितमेति पूर्णं तुष्ट्यै सतामस्तु मम प्रबन्धः॥**

विवाहपञ्चमी
अग्रहायणशुक्लपञ्चमी
संवत्–2070

विद्वज्जनचञ्चरीकः
सुन्दरनारायणझा

# विषय-सूची

प्रथमोऽध्यायः

## परब्रह्मपरमात्मनोऽवतारभूता ऋषयः

## मङ्गलाचरणम्

विघ्नेशं प्रथमं वन्दे वाचां देवीमतः परम्।
आर्षज्ञानप्रचाराय नमः साम्बाय शम्भवे।।1।।

कौशल्यातनयं नमामि सदयं श्रीजानकीवल्लभं
सौन्दर्यस्य दिवाकरं गुणनिधिं विज्ञानरूपं हरिम्।

श्रौतस्मार्तमयं जगत्त्रयगुरुं यज्ञात्मकं पावनं
मर्यादापुरुषोत्तमं रघुवरं सर्वार्थसिद्धिप्रदम्।।2।।

श्रीमत्सद्गुरुपादपद्मयुगलं शिष्यैस्सदा सेवितं
ब्रह्मानन्दमयं प्रसन्नहृदयं वैराग्यसम्पोषकम्।

सौभाग्यात्तपसा च गौरवमयं ब्रह्मण्यसन्धायकं
साष्टाङ्गं प्रणमामि दिव्यवपुषं श्रीरामसेवोत्सुकम्।।3।।

विप्रवंशावतंसाय शशिकान्ताय सत्त्रिणे।
प्रणमामि सदा भक्त्या पित्रे पौरुषपोषिणे।।4।।

यस्याः पुण्योदराज्जन्म लब्ध्वा वर्ते सुखं सदा।
पूज्यमात्रे तु हीरायै दशप्राचीं करोम्यहम्।।5।।

कृतिर्ममैषा शुभतामुपेयादित्यर्थ्यते दाशरथिर्विभूत्यै।
यया धरैषा नवकौमुदीव सौभाग्यदात्री सुखदा भवेन्नः।।6।।

प्रथमोऽध्यायः

## परब्रह्मपरमात्मनोऽवतारभूता ऋषयः

## मङ्गलाचरणम्

विघ्नेशं प्रथमं वन्दे वाचां देवीमतः परम्।
आर्षज्ञानप्रचाराय नमः साम्बाय शम्भवे॥1॥

कौशल्यातनयं नमामि सदयं श्रीजानकीवल्लभं
सौन्दर्यस्य दिवाकरं गुणनिधिं विज्ञानरूपं हरिम्।

श्रौतस्मार्तमयं जगत्त्रयगुरुं यज्ञात्मकं पावनं
मर्यादापुरुषोत्तमं रघुवरं सर्वार्थसिद्धिप्रदम्॥2॥

श्रीमत्सद्गुरुपादपद्मयुगलं शिष्यैस्सदा सेवितं
ब्रह्मानन्दमयं प्रसन्नहृदयं वैराग्यसम्पोषकम्।

सौभाग्यात्तपसा च गौरवमयं ब्रह्मण्यसन्धायकं
साष्टाङ्गं प्रणमामि दिव्यवपुषं श्रीरामसेवोत्सुकम्॥3॥

विप्रवंशावतंसाय शशिकान्ताय सत्त्रिणे।
प्रणमामि सदा भक्त्या पित्रे पौरुषपोषिणे॥4॥

यस्याः पुण्योदराज्जन्म लब्ध्वा वर्ते सुखं सदा।
पूज्यमात्रे तु हीरायै दशप्राचीं करोम्यहम्॥5॥

कृतिर्ममैषा शुभतामुपेयादित्यर्थ्यते दाशरथिर्विभूत्यै।
यया धरैषा नवकौमुदीव सौभाग्यदात्री सुखदा भवेन्नः॥6॥

सम्पूर्णेऽस्मिन्धरातले सर्वेष्वेव देशेषु सर्व एव मनुष्यास्त्रिविधा दृश्यन्ते, भारवाहिनः, सारग्राहिणो, जिज्ञासमानाश्च। तत्र द्वितीया अत्यल्पा बहवस्त्वितरे। सारग्राहिणो हि शास्त्रतो लोकतो वा तात्त्विकमर्थं तत्तच्छास्त्र-तात्पर्यभूतं गृहीत्वा कुशलिनः कृतकृत्याः स्युः, अन्येषाञ्च दीनानामुद्धाराय करुणार्द्रहृदया मितभाषित्वात् कदाचित्सूत्ररूपेण केचित्किञ्चिदुपदिशन्ति स्म। ते द्विविधाः– १. मन्त्रसूक्तादीनां द्रष्टारो महर्षयः, २. दर्शनादिशास्त्र-प्रवक्तारो मुनयश्च।

तत्र 'ऋषति=पश्यतीति ऋषिः' इत्यनया व्युत्पत्त्या 'ऋषयो मन्त्रद्रष्टारः' इत्येवार्थमुपगच्छामः। वैदिके विज्ञाने प्राणमूलके ऋषिप्राणो मूलतत्त्वमिति भणितम्। न च ऋषिपदस्य, ऋषिविशेषवाचकानां कश्यपात्रि-वसिष्ठादिपदानाञ्च केवलं तन्मूलतत्त्वमेव सर्वत्र वाच्यं भवितुमर्हति, ताराविशेषाणां व्यक्तिविशेषाणामपि च तत्पदाभिधेयतया प्रसिद्धेः। ईदृशेष्वेव विषयेषु निर्धारयितुमशक्नुवन्तो मुह्यन्ति सुधियोऽपीति तद्विवेचनमेव तावदा-वश्यकम्। तदुक्तं महर्षिकुलवैभवमिति ग्रन्थकारेण ऋषिपदनिर्वचनप्रसङ्गे–

सामान्यतया ऋषिशब्दस्य चतुष्टयी प्रवृत्तिः– १. असल्लक्षणा, २. रोचनालक्षणा, ३. द्रष्टृलक्षणा, ४. वक्तृलक्षणा चेति।

### १. असल्लक्षणा प्रवृत्तिः

**"असद्वा इदमग्र आसीत्। किं तदासीदिति। ऋषयो वा व तेऽग्रेऽसदासीत्। के ते ऋषय इति प्राणा वा ऋषयः॥"[१]**

अर्थादत्र सृष्टेः पूर्वं 'असदेव' इत्युक्त्वा, बौद्धानामिवात्राप्यसद्वाद इष्ट इति भ्रमं निरसितुमसच्छब्दार्थ जिज्ञासामुपन्यस्य-ऋषय एवासच्छब्दार्थ इत्युत्तीर्य ऋषिशब्दार्थमपि प्रश्नविषयीकृत्य प्राणा ऋषिशब्दवाच्या इति स्पष्टं प्रतिपादितम्। तेन ऋषिशब्दवाच्यानां प्राणानामेव भूतसृष्टेः प्राक् सत्ता प्रबोधितेति सुस्पष्टम्।

'सप्तशीर्षण्याः प्राणाः' इत्यादि बहुधा श्रूयते। तत्रेदं रहस्यम्–

---

१. श.प. ब्रा.– ६/१/१/१

मनुष्यशरीरेऽत्र चतस्रो गुहाः – शिरोगुहा, उरोगुहा, उदरगुहा, वस्तिगुहा चेति। तासु प्रत्येकं सप्तप्राणायतनानि कार्यसम्पादकानि स्थानानि, इन्द्रियनाम्नाप्येतानि व्यवह्रियन्ते। सप्तस्वपि शक्तिप्रद एको मुख्यः केन्द्रभूत इन्द्रः। तेषु च सप्तसु षड् द्वन्द्वक्रमेण तिष्ठन्ति, अन्तिमं तु एकमेव। यथा- **शिरोगुहायाम्–** श्रोत्रे द्वे, चक्षुषी द्वे, नासिके द्वे-इतिषट्। सप्तमं मुखबिलं त्वेकम्। केन्द्रभूतश्च ब्रह्मरन्ध्रगतो मुख्यो ज्ञानशक्तिप्रदः प्राणः।

**द्वितीयायामुरोगुहायाम्–** द्वौ बाहू, द्वौ फुप्फुसौ, द्वौ स्तनौ हृदयं तु सप्तममेकम्। केन्द्रभूतोऽत्र कण्ठकूपो पराक्रमशक्तिप्रदः।

**तृतीयायामुदरगुहायाम्–** यकृत्प्लीहे, अमाशयपक्वाशयौ, वृक्कौ, सप्तमी नाभिस्त्वेका। केन्द्रभूतमत्र हृदयमेव पूर्वगुहाया अन्तिमं स्थानमन्न-संग्रहविभजनादिशक्तिप्रदम्।

**अथ चतुर्थ्यां वस्तिगुहायाम्–** पादौ, मूत्रवीर्योत्सर्गच्छिद्रे, अण्डकोशौ च, सप्तमी तु एका गुदा। केन्द्रभूताऽत्र नाभिरेव पूर्वगुहाया अन्तिमं स्थानं शरीरक्रमनिर्वाहकोत्सर्गादिशक्तिप्रदम्।

एवमेव तारामण्डलगतेषु सप्तर्षिषु षड्युग्मरूपेण परस्परसांमुख्येन तिष्ठन्ति, सप्तमं त्वेकं पृथगिव स्थितं इत्याद्यपि योज्यम्। तदित्थं प्राणतत्त्वस्य कात्स्न्र्येन निरूपकोऽयं मन्त्रः। यथा–

१. "प्राणो वै वशिष्ठ ऋषिः। यद्वै नु श्रेष्ठस्तेन वशिष्ठः। अथो यद्वस्तृतमो वसति तेनो एव वशिष्ठः।"[२]

२. "मनो वै भरद्वाज ऋषिः। अन्नं वाजः। यो वै मनो विभर्ति सोऽन्नं वाजं भरति। तस्मान्मनो भरद्वाज ऋषिः।"[३]

३. "चक्षुर्वै जमदग्निऋषिः। यदनेन जगत्पश्यति, अथो मनुते तस्माच्चक्षुर्जमदग्निऋषिः।"[४]

---

२. श.प. ब्रा.- ८/१/१/६

३. तत्रैव ८/१/१/६

४. तत्रैव ८/१/२/३

४. "श्रोत्रं वै विश्वामित्र ऋषिः। यदेनेन सर्वतः शृणोति। अथो यदस्मै सर्वतो मित्रं भवति। तस्माच्छ्रोत्रं विश्वामित्र ऋषिः।"[५]

५. वाग्वै विश्वकर्म ऋषिः। वाचा हीदं सर्वं कृतम्। तस्माद्वाग् विश्वकर्म ऋषिः।"[६] इत्यादि चयनश्रवणाच्च।

६. प्राणा एव देवाः, प्राणा एव ऋषयः। किन्तु न देवा ऋषयः, न ऋषयो देवाः।

यथा हि सुवर्णमेव कटकम्, सुवर्णमेव च कुण्डलम्। तथापि न कटकं कुण्डलं, न वा कुण्डलं कटकम्। अवस्थाभेदेन तत्तदवस्था बोधकानां शब्दानामन्यत्राप्रवृत्तेः। तथैव प्राणरूपत्वे समानेऽपि अवस्थाभेदाद् देवा ऋषयश्च पृथक् पृथगेवोच्यन्त इति भावः।

एषु षट्प्राणेषु मध्येस्थितः केन्द्रप्राणो हि सर्वतो विसृत्वरस्य 'सर्वप्रजापतेः' आदानप्रदानरूपयज्ञप्रक्रियया रसग्राहीति स्पष्टीभवति। तया प्रक्रिययायं मध्ये प्राणो नानाप्राणानां प्राणसमूहानां च रसग्राहितया नानाप्राणसमष्टिरूपतामेवाप्त इति ऋषेरपि तस्य देवत्वमुपचाराद् व्यवह्रियते। तस्माद्देवप्रधानेन्द्रशब्देन तद्व्यवहार उपपद्यत इति भावः।

## २. रोचनालक्षणाप्रवृत्ति :

द्युलोके द्युतिमत्यः याः ताराः प्रकाशन्ते, तास्वपि बहुत्र ऋषि-शब्दप्रयोगं प्रदर्शयन्ति महर्षयः **"रोचन्ते रोचना दिवि।"** (शु.य.सं. - २३/५) इति श्रुति वाक्यात्।

"एकं द्वे त्रीणि चत्वारीति वा अन्यानि नक्षत्राणि। अथैता एव भूयिष्ठा यत् कृत्तिकाः।.....ऋक्षाणां ह वा एता अग्रे पत्न्य आसुः। सप्तर्षीनु हस्म पुरर्क्षा इत्याचक्षते।.....अमी ह्युत्तरा हि सप्तर्षय उद्यन्ति पुर एताः।"[७]

अस्मिन् ब्राह्मणवचने कृत्तिकानक्षत्रस्य बहुतारासमूहतामुपपाद्य तत्र ऋक्षपत्नीत्वमारोप्य सप्तर्षय एव ऋक्षा इत्युपसंहृतम्। सप्तर्षयश्चेमे

५. तत्रैव ८/१/२/६

६. तत्रैव ८/१/२/९

७. श.प.ब्रा- २/१/२/१-४

ध्रुवसमीपवर्तिन इत्यग्रिमक्रमेण मन्त्रेण समर्थ्यते।

ऋग्वेदे "जज्ञानं सप्तमातरः" (ऋ.सं. - २/१०२/४) इति पाठः। अत्र तु सामवेदे दृष्ट एव पाठो निवेशितो यथा–

**"जज्ञानः सप्तमातृभिर्मेधामाशासत श्रिये।**
**अयं ध्रुवो रयीणां चिकेतदा॥"**[८]

अत्र 'सप्तमातृभिः' सप्तर्षिनामिकाभिः सप्तताराभिः लोकानामुत्पादकत्वेन मातृस्थानीयाभिस्सह, जज्ञानः=प्रादुर्भूतः, अयं ध्रुवः-ध्रुवनक्षत्रम्, कर्मणो विधातारं यजमानं श्रिया लक्ष्म्या योजयतीत्यर्थः।

अत्र मन्त्रे मातृपदेन याः सप्ततारा: श्रुताः, ता एव सन्निवेशसाम्येन ऋक्षत्वमारोप्य 'सप्तर्षीनुह' इत्यादि पूर्वोक्तब्राह्मणे ऋक्षपदेन व्यवहृताः। सप्तर्षिपदेन च स्पष्टमेव तत्र ऋषित्वं व्यवहृतम्।

एवमुररीभवति यद् आसु सप्तसु तारासु चत्वारः पुलस्त्यादयः चतुरस्रक्षेत्र- कोणस्थाः। ततोऽन्ये त्रयः पूर्वतो निविष्टाः। तेषु त्रिषु यः सर्वतः प्राच्यां दृश्यते स मरीचिः। यः पश्चिमचतुरस्रसंनिहितः सोऽङ्गिराः। तयोर्मध्यतो वसिष्ठोऽरुन्धतीसहितः।

चतुरस्रे त्वङ्गिरसः सन्निधावत्रिः। ततोऽन्ये पुलस्त्यपुलह-क्रतव इति पौराणिका आहुः।

एवमन्येऽप्युत्तरस्यां दिशि मार्कण्डेयकश्यपादयः, मध्याकाशे बृहस्पतिमत्स्यादयः, अवाच्यामगस्त्यादयस्ताराविशेषा ऋषित्वेनेष्यन्ते।

अतः सूर्यरश्मिप्रतिष्ठाः सर्वे प्राणा देवाः। चन्द्रांशुप्रतिष्ठाः सर्वे प्राणाः पितरः। ऋक्षरोचनाप्रतिष्ठाः सर्वे प्राणा ऋषय इत्यत्राभिमतम्।

### ३. द्रष्टृलक्षणाप्रवृत्तिः

द्रष्टृलक्षणं तृतीयमृषित्वं निर्वक्तुं किं नाम द्रष्टृत्वमिति व्याख्यानमुपक्रमते–**"अथ प्राणानां देवानां भूतानां भौतिकानां चार्थानां नियतः कार्यकारणभावो विद्या। नियतं सत्यं यथातथ्यम्, सा विद्या,**

---

८. सामसंहिता १/२/१/५

**तद्ब्रह्म, स वेदः।"**[९]

यद्यपि गृह्यमाणधर्मेणाऽभिनीयमाना नियतिर्ब्रह्म, गृहीतपूर्वाहित-संस्कारेणाभिनीयमाना नियतिर्विद्या, वाचाभिनीयमाना नियतिर्वेदः, इत्येवमेषां व्यवस्थितविषयत्वमिष्टम्, तथाप्येषु व्यवहारसाङ्कर्येण प्रवर्त्तन्ते प्राञ्चः। अनपेक्ष्यैव तु धर्मसंस्कारवाग् विषयत्वमुपचरन्ति स्म पूर्वे–त्रयो वेदाः, त्रयी विद्या, त्रयं ब्रह्मेति। अपिच–**"शब्दोपपादितं देवताविज्ञानं वेदः, देवताविज्ञानोपपादकशब्दो मन्त्रः"**[१०] इत्येवं वेदमन्यशब्दयोर्व्यवस्थित-विषयत्वेऽपि संज्ञासंज्ञिनोस्तादात्म्योपचारात् तयोः संकीर्णो व्यवहारः। यथा–

**"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।"**[११]

इत्यत्र शब्दाभिप्रायेण वेदशब्दप्रयोगात् **"ऋषयो मन्त्रद्रष्टारः" साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः"**[१२] (निरु.–अ.–१) इत्यादिषु विद्याभिप्रायेण मन्त्रशब्दप्रयोगाच्च।

अथवा भवति हि–शब्दस्तदर्थश्चान्योऽन्यव्यासक्तौ मन्त्रशब्दप्रदेशः। ततश्चेह दैवतविज्ञानं देवताशीश्च मन्त्रपदार्थान्तर्भूते। व्यासज्यवृत्त्या च समुदाये दृष्टाः शब्दा अवयवेऽपि प्रवर्तन्ते, यथाहि सीमापरिच्छिन्नप्रदेशानु-गतशाला समुदायस्थजनसमुदाये निरूढोऽयं ग्रामशब्दोऽस्ति, प्रदेशे च प्रयुज्यते, शाला समुदाये च, जनसमुदाये च। तथा देशविशेषे रूढः पञ्चाल-शब्दस्तदवयवेऽपि प्रयुज्यते–पूर्वे पञ्चालाः, उत्तरे पञ्चाला इति। एवमयं शब्दोपदिष्टविज्ञाने निरूढो मन्त्रशब्दः शब्देऽपि प्रयुज्यते, विज्ञाने च।

मन्त्रसमानार्थो ब्रह्मशब्दोऽप्यस्ति तस्याप्यत एव द्वैभाव्यमाचष्टे–

**"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।"**[१३]

---

९. महर्षिकुलवैभवम् पूर्वार्द्धे–२५ पृष्ठे

१०. तत्रैव २७ पृष्टे

११. ऋग्भाष्यभूमिकायाम्

१२. निरुक्ते–प्रथमेऽध्याये।

१३. अमृतविन्दूपनिषदि–१७

शब्दात्मकब्रह्मवेद्यमेवैतद् विज्ञानात्मकं परं ब्रह्म। तदेवं वाक्यविद्यैतदु-भयव्यूहे निरूढोऽयं ब्रह्मशब्दश्च मन्त्रशब्दश्चेति सिद्धम् तथा च ब्रह्मैव वेदः, ब्रह्मणो वा विद्या वेदः।

तत्र ब्रह्म हि यज्ञमात्मानं कुर्वत् तेनैव रूपेणेदं सर्वमभवच्च, भवति च, भविष्यति च। यज्ञ एवेदं समभवच्च, भूतं च भविष्यच्च।

"तदिदं यज्ञविज्ञानं वेदः।" यज्ञोऽयमुच्यते धर्मः "चोदना लक्षणोऽर्थो धर्मः"[१४] इति जैमिनिना यज्ञस्य धर्मत्वप्रतिपादनात् तस्माद्धर्मविज्ञानं वेदः।

यज्ञशरीरे च निहिताः सर्वे देवाः तेन यज्ञविज्ञानादेते सर्वे देवा विज्ञाताः भवन्ति। तस्माद्दैवतविज्ञानं वेदः।

सर्वेषां च देवानां प्रधानः प्रजापतिः। प्रजापतिप्रभवश्चायं यज्ञः, प्रजापतिप्रतिष्ठः, प्रजापतिपरायणः। स प्रजापत्यविनाभूतो यज्ञोऽपि प्रजापतिरेव। तदेतत्प्रजापतिविद्या वेदः।

अनन्ताः प्रजापतयः। अनन्ताश्चैते यज्ञाः। तेषु सर्वेषु प्रधानः सर्वेषामात्माऽयं भगवान् सूर्यः। तस्मादेतत् सूर्यविज्ञानं वेदः। सूर्यस्यैव याथातथ्येन विज्ञानात् सर्वे देवाः, सर्वे यज्ञाः, सर्वे प्रजापतयः, सुविज्ञाता भवन्ति। तदित्थमेष सूर्यवेदश्च भवति, दैवतवेदश्च, धर्मवेदश्च, यज्ञवेदश्च, प्रजापतिवेदश्च, ब्रह्मवेदश्च।

अथवायं साधारण्येन सर्ववेदो भवति, तस्मात् सामान्येन वेदशब्दः प्रयुज्यते। न त्वायुर्वेद-पशुवेद-वृक्षवेदादिवदयं केनचिद् विशिष्यते।

ततश्च पुरात्वे तं तमर्थं दृष्ट्वा दृष्ट्वा यैरिदं विज्ञानमुपदिष्टम्, त एते वेदाचार्या ऋषय आख्यायन्ते। तथा चैषामृषीणां शब्दरचना कर्तृत्वाभिप्रायेण मन्त्रकर्तृत्वम्, देवतादिविज्ञानसाक्षात्कर्तृत्वाभिप्रायेण तु मन्त्रद्रष्टृत्वमित्युभयं समञ्जसं भवति। तत्र–

**"यामृषयो मन्त्रकृतो मनीषिण अन्वैच्छन् देवास्तपसा श्रमेण।**
**तां दैवीं वाचं हविषा यजामहे, सा नो दधातु सुकृतस्य लोके।।"[१५]**

---

१४. मीमांसायाम् १/१/२

१५. तै.ब्रा. २/७/७

**"नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो**
**मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादु-**
**र्माहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादाम्॥"**[१६]

इत्यादिश्रुतिषु मन्त्रकृत्त्वमृषीणां श्रूयते। देवा इह पारोवर्यविदः शुश्रुवांसोऽनूचानाः। तदीया हीयं वाक्। युक्तं चैतद्, न ह्येषा वाक्यरचना स्वतः सम्भवति शरीरबुद्धीन्द्रियोपपाद्यत्वात्। तथा चोक्तमभिभुक्तैः-

**"बुद्धिपूर्वा वाक्यकृतिर्वेदे" "ब्राह्मणे संज्ञाकर्म सिद्धिलिङ्गम्।"**[१७]

तस्मात् कृतका एते वेदमन्त्राः। ये त्वतीन्द्रियार्थविज्ञानात्मकवेदाः, न चैते शक्यमुत्पादयितुमनीश्वरैः, अतीन्द्रियत्वादनादित्वादपौरुषेयत्वाच्च।

**"अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा।**
**आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः॥"**[१८]

इत्यादि स्मृत्या वागात्मकस्यैव वेदस्याकृतकत्वमुपदिश्यते इति चेत्। सत्यम्। **"यदि वै प्रजापतेः परमस्ति वागेव तत्"**[१९] इति वाजसनेयश्रुतौ श्रुतां काञ्चिद्वाचमुपलक्ष्य तथा श्रवणात्। न च सा वागियमेवेति भ्रमितव्यम्। तस्याः सर्वलोकात्मकतया, त्रैलोक्यात्मकतया, सूर्यात्मकतया, चान्यत्रान्यत्र बहुधा श्रूयमाणत्वात्। तथाहि- **"वागेवेदं सर्वम्"**[२०] इत्यैतरेयश्रुतिः सर्वात्मकत्वमाचष्टे वाचः। "त्रयं वै विद्या ऋचो यजूंषि सामानि।" "इयमेवर्चः, अन्तरिक्षमेव यजूँषि, द्यौः सामानि।" "तद्वा एतत् सहस्रं वाचः प्रजातम्। द्वे इन्द्रस्तृतीये। तृतीयं विष्णुः। ऋचश्च सामानि चेन्द्रो यजूंषि विष्णुः।" "तेजसो वै तत्तेजो जातम्, यदृचश्च साम्नश्चेन्द्रः। इन्द्र इति श्रोतुमाचक्षते। य एव तपति।" "स हैष भर्त्ता।"[२१] इति पुरश्चरणश्रुतिः त्रैलोक्यात्मकत्वमाचष्टे।

---

१६. तै. आ. ४/१/१
१७. वै. सूत्रे ६/१/१/२
१८. ऐ.ब्रा.-सायणभाष्ये-३४० पृष्ठे महाभारते-शा.प.-२४४/५५
१९. श.प.ब्रा. ५/१/३११
२०. ऐ. आ. ३/१/६
२१. श.प.ब्रा. ४/६/७/१, ३, ११, १५

**"संवत्सर एवाग्निः"[२२] "तस्य वा एतस्याग्नेर्वागेवोपनिषत्"[२३] "सा वा एषा वाक् त्रेधा विहिता— ऋचो यजूंषि सामानि। तेनाग्निस्त्रेधा विहितः।[२४]" "सा या सा वाक्, असौ स आदित्यः।"[२५] "मण्डलमेवर्चः, अर्चिः सामानि, पुरुषो यजूंषि। अथैतदमृतम्। यदेतदर्चिर्दीप्यते, इदं तत् पुष्करपर्णम्।"[२६]**

**"यदेतन्मण्डलं तपति तन्महदुक्थम्, ता ऋचः स ऋचां लोकः। अथ यदेतदचिर्दीप्यते तन्महाव्रतम्, तानि सामानि स साम्नां लोकः। अथ य एष एतस्मिन् मण्डले पुरुषः सोऽग्निः ता हि यजूंषि, स यजुषां लोकः। सैषा त्रय्येव विद्या तपति।"[२७]**

इत्यग्निचयनश्रुतिः सूर्यात्मकत्वमाचष्टे। एतदभिप्रायेणैव—
**"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥"** (यजुः-३१/१)

इति श्रुत्या ऋग्यजुस्साम्नां यज्ञप्रभवत्वमाख्यायते। नित्यानामप्यासां वाचां प्रजापतेर्निःश्वासरूपेण प्रादुर्भावात्। एता एव तिस्रो वाग्विद्याः स्वयम्भूः।

ईश्वरमेवैतं वेदं मन्यन्ते, ईश्वरनिःश्वसितं वा, ईश्वरकृतं वा। तपःप्रभावात्तु स शुद्धान्तःकरणानामाविर्भूतप्रकाशानामतीन्द्रियदृष्टिमतां हृदि स्वयमाविर्भवतीति स नित्यसिद्ध एवार्थः काले काले गृह्यते। तथा च श्रूयते—**"तद्वा ऋषयः प्रतिबुबुधिरे, य उ तर्हि ऋषय आसुः"**[२८] इति। "मनसो वै समुद्राद् वाचाभ्र्या देवास्त्रयीं विद्यां निरखनन्।" तदेष श्लोकोऽभ्युक्तो—

---

२२. श.प.ब्रा. १०/४/५/२
२३. श.प.ब्रा. १/५/१/१
२४. श.प.ब्रा. १०/५/१/२
२५. श.प.ब्रा. १०/५/१/४
२६. श.प.ब्रा. १०/५/१/५
२७. श.प.ब्रा. १०/५/२/१, २
२८. श.प.ब्रा. २/२/१/१४

**"ये समुद्रान्निरखनन् देवास्तीक्ष्णाभिरभ्रिभिः।**
**सुदेवो अद्य तद् विद्याद् यत्र निर्वपणं दधुः॥"**

इति। मनः समुद्रः, वाक् तीक्ष्णाभ्रिः, त्रयीविद्या निर्वपणम्।"[२९] इति च। देवा इह पारोवर्यविदः सुश्रुवांसोऽनूचानाः। "अजान् ह वै पृश्नीन् तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्। त ऋषयोऽभवन् तदृषीणामृषित्वम्।"[३०]

**"यज्ञेन वाचः पदवीयमायंस्तामन्वविन्दन् ऋषिषु प्रविष्टाम्।"**[३१] **"यो वै ज्ञातोऽनूचानः स ऋषिः।"**[३२] इति शतपथश्रवणाच्च।

**किञ्च– "अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।**
**स देवाँ एह वक्षति॥"**[३३]

इत्यादि श्रुतिनिदर्शनेषु प्रयुक्त ऋषिशब्दः पौर्वापर्यानुसन्धानात् साक्षात्कृतधर्मसु प्राणानां विद्वत्सु मनुष्यविशेषेष्वेव प्रवर्तत इति सुष्पटम्। स्मर्यते च–

**"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।**
**लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥"** इति।[३४]

आप्तो नामानुभवमेकवस्तुतत्त्वस्य कात्स्न्र्येन निश्चयवान् रागादिवशादपि यो नान्यथावादी यथार्थवक्ता स आप्तः। अत एव आप्तवाक्यं प्रमाणम्।

आप्तश्चैष तमर्थं यथा पश्यति, स तथा परप्रत्यायनाय वाचाऽभिनयति। तदस्य द्रष्टुर्वाक्यं श्रुतिः। तत्प्रमाणमनपेक्षत्वात्। यथाहि श्रोतुर्वाक्यं स्मृतिरुच्यते, तच्च परतः प्रमाणं भवति, स्वप्रामाण्याय श्रुति- सापेक्षत्वात्, असाक्षात्कृतधर्मतया तत्र वक्तुः परप्रत्ययालम्बनेनैवार्थग्राहित्वात्। न तथायं साक्षात्कृतधर्मा तमर्थमाप्तः स्वोक्तिप्रामाण्याय परप्रत्ययमपेक्षते। तस्माद्

---

२९. श.प.ब्रा. ७/५/२/५२
३०. तै.आ.-२/९
३१. ऋ.सं.-१०/७१/३
३२. श.प.ब्रा. ४/३/४/१९
३३. ऋ.सं. - १/१/२
३४. **स्मृतिवचनम्** - उल्लेख : ऐतरेयब्राह्मणे सायणभाष्ये।

द्रष्टुर्वाक्यं स्वत: प्रमाणं भवति। उक्तं च वात्स्यायनेन गौतमीय व्याख्यायाम्– **"आप्तोपदेश: शब्द:"**[३५] "आप्त: खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्ति:, तया प्रवर्तते– इत्याप्त:। ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहारा: प्रवर्तन्ते। स द्विविधो दृष्टाऽदृष्टार्थत्वात्। यस्येह दृश्यतेऽर्थ: स दृष्टार्थ:। यस्यामुत्र प्रतीयते सोऽदृष्टार्थ:। एवमृषिलौकिकवाक्यानां विभाग:। इति।" तदित्थमेष द्रष्टा द्विविध: सिद्धो लौकिकश्च ऋषिश्चेति। यत्रासौ श्रोतृभिरपि सर्वै: शक्यं साक्षात्कर्तुमर्थं दृष्ट्वा प्रब्रूते, नातीन्द्रियं द्रष्टुमनुमातुं वा शक्नोति, स लौकिको द्रष्टाऽऽप्त:। यस्त्वतीन्द्रियेष्वसंवेद्येष्वतीतानागतेषु च भावेष्वव्याहतप्रचारां तप: प्रभावजनितां लब्ध्वा तेनार्षेयचक्षुषा प्रत्यक्षवत्सर्वं याथातथ्येनाधिगच्छति, स ऋषिर्द्रष्टाऽऽप्त:।

अयमेवार्थो निष्कृष्येत्थं द्रष्टव्य:। द्रष्टा, आप्त:, अनूचान इत्येकार्था:। योऽर्थमीक्षते, अन्वीक्षते–परीक्षते–समीक्षते, स विपश्यति, स द्रष्टा। अथ चक्षुरादीन्द्रियजन्यं लिङ्गजन्यं शब्दजन्यं वा यज्ज्ञानं तज्जन्यं पार्ष्टिकं निर्विकल्पकं ज्ञानमवगम:। सोऽधिगम:, तत्प्रत्यक्षम्, सा प्रमा, साऽर्थस्याप्ति:, तत्सम्पन्न आप्त:। अथ योऽर्थं दृष्ट्वा याथातथ्येनावगम्य यथादृष्टमन्वा- चष्टे, स उपदेष्टा, सोऽनुशास्ता सोऽनूचान:। एवमेषां सामानाधिकरण्यं भवति। तत्रेदं द्रष्टुर्दृश्यं त्रिविधम्– भौतिकं दैविकमतीन्द्रियं च। तत्र भौतिकेष्वर्थेषु ये द्रष्टार आप्ता अनूचानास्तेषु ऋषिशब्दो नास्ति। ये तु दैविकेष्वतीन्द्रियेषु चार्थेषु द्रष्टारस्तेष्वयमृषिशब्द: प्रवर्त्तते। यथाहि– विषमयद्रव्यविज्ञाने श्वबिडालादीनां सामर्थ्यम्, विषहरौषधिविज्ञाने च नकुलादीनाम्। पुरुषादृष्टसंनिधापिते कस्मिंश्चिद् भाविन्यर्थे श्व-शिवा- वायस–पिङ्गलकादिशकुनीनाम्, स्वरोगहरौषधिविज्ञाने च सर्वेषामारण्यपशूनाम्, भविष्यद्वृष्टिविज्ञाने मण्डूकानाम्। एवमेते विचित्रा अतीन्द्रियार्थविज्ञानजनक- प्रभावा नैसर्गिका एव तत्र तत्र प्राणिकुले दृश्यन्ते। एवमिदमपूर्वमतीन्द्रियार्थाव- गमसामर्थ्यं तप: प्रभावेणोद्भूयमानं यत्र मनुष्यकुले दृश्यते, स ऋषिराख्यायते।

---

३५. न्यायसूत्रे- (अ.२, पा-१)

### ४. चतुर्थी वक्तृलक्षणाप्रवृत्तिः

एवमृषिशब्दस्य तृतीयविधोऽर्थो मनुष्यरूपेणोपपादितः। इदानीं **"यस्य वाक्यं स ऋषिः" "या वाक्येनोच्यते सा देवता"** इति परिभाषितत्वात्। मन्त्रो हि वाक्यं वा वाक्यावयवो वा वाक्यसमुदायो वा। सर्वथाऽपि येनाऽयं मन्त्रोऽर्थं दृष्ट्वोपदिष्टः सोऽस्य मन्त्रस्य ऋषिरुच्यते। ऋषिभिरेवैते मन्त्राः पुरोपदिष्टाः, तस्मात् पारोवर्यविदोऽमी द्रष्टार एवैतेषां मन्त्राणां प्रवक्तार ऋषयः प्रायेण दृश्यन्ते।

क्वचित्पुनरनृषयोऽप्येषामृषयो निर्दिश्यन्ते, वक्तृत्वेन विवक्षणात्, तेषु चेदमृषित्वं गौणं द्रष्टव्यम्, काल्पनिकत्वात्।

तथाहि पञ्चविधो मन्त्राणां वर्गो भवति–भाववृत्तम्, देवस्तवः, वक्त्रात्मस्तवः, देवात्मस्तवः, कयोश्चित् संवादो वा।

तत्र सृष्टिक्रमनिरूपणं भाववृत्तम्। प्राणदेवानां स्वरूपधर्मप्रदर्शनं देवस्तवः। तयोरयं मन्त्रप्रणेतैव ऋषिः, द्रष्टृत्वाच्च वक्तृत्वाच्च। देवता तु तत्र सृष्टिविषयो वा, प्राणदेवा वा। वक्त्रात्मस्तवेऽपि अयं मन्त्रप्रणेता आत्मानं स्तौतीति स एव स्याद् ऋषिश्च देवता च।

अथ चतुर्थे देवात्मस्तवे तु मन्त्रप्रणेता प्रतिपाद्यं देवं तद्देवमुखेनैव स्तावयति। तत्र तस्य प्राणदेवस्यैव वक्तृत्वेन विवक्षणात् स एव ऋषिः स्याद्देवता च। मन्त्रप्रणेतुस्तु वक्तृत्वेऽपि तत्र ऋषित्वमपह्नूयते।

एवं पञ्चमे संवादेऽपि मन्त्रप्रणेतुर्ऋषित्वमपह्नूते, ययोस्तु संवादो वर्ण्यते तयोर्मध्ये वक्तुर्ऋषित्वम्, संबोध्यस्य च देवतात्वमिति पर्यायेणोभयोर्ऋषित्वं देवतात्वं च विवक्ष्यते इति।

तदुक्तं बृहद्देवतायाम्–

**"नवकः प्रथमस्त्वासां वर्गस्तुष्टाव देवताः।**
**ऋषिभिर्देवताभिश्च समूहे मध्यमो गणः॥**
**आत्मनो भाववृत्तानि जगौ वर्गस्तथोत्तमः।**
**उत्तमस्य तु वर्गस्य य ऋषिः सैव देवता।**
**आत्मानमस्तौद्वर्गस्तु देवतां यस्तथोत्तमः।**
**तस्मादात्मस्तवेषु स्याद्य ऋषिः सैव देवता।**

**संवादेष्वाह वाक्यं यः स तु तस्मिन् भवेदृषिः।**
**यस्तेनोच्येत वाक्येन देवता तत्र सा भवेत्॥** इति।"[३६]

अत्रापि ऋषिदैवतयोरैक्यं सिद्धम्। तद्यथा वामदेव ऋषिः सीता देवता-

**"इन्द्रः सीतां निगृह्णातु तां पूषानुयच्छतु।**
**सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्।** इति॥"[३७]

अथ प्रजापतेरङ्गिरसः पुत्री दिव्यस्याङ्गिरसस्य भगिनी दक्षिणा नाम्नी ऋत्विग्भ्यो दीयमानां दक्षिणां स्तौति। तत्र दक्षिणा ऋषिका, दक्षिणा चान्या देवता-

**तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम्।**
**स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध॥**[३८]

अथागस्त्यदृष्टोऽगस्त्येन्द्रसंवादे प्रथमायामगस्त्य ऋषिरिन्द्रो देवता, द्वितीयस्यामिन्द्र ऋषिरगस्त्यो देवता-

**"किं न इन्द्र जिघांससि भ्रातरो मरुतस्तव।**
**तेभिः कल्पस्व साधुया मा नः समरणे वधीः॥"**

**"किं नो भ्रातरगस्त्य सखा सन्नतिमन्यसे।**
**विद्मा हि ते पथा मनोऽस्मभ्यमिन्न दित्ससि॥"**[३९]

अथेयमम्भृणसुता वाङ्नाम्नी ऋषिका त्रैलोक्यव्यापिनीं वाचं नाम देवीं तस्या एव मुखेन स्तौति। तत्राम्भृण्या ऋषित्वं तदपि निवर्त्यते। देवताया एव च वाचोऽष्टर्चेन सूक्तेनात्मस्तवे ऋषित्वं विवक्ष्यते। तया वागाम्भृण्या अभेदोपचारादाम्भृण्या पुनरन्यदृषित्वमौपचारिकमापद्यते इति विशेषः। तद्यथा-

**"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः।**
**अहं मित्रावरुणोभा विभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥"**

---

३६. बृहद्देवतायाम्-२/८५-८८
३७. ऋ.सं.-४/५७/७
३८. ऋ.सं.-१०/१०७/६
३९.ऋ.सं.-१/१७०/२, ३

मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम्।
अमन्तवो मां त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवं ते वदामि।।"

अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्।।"

अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एना पृथिव्यैतावती महिना संबभूव।।"[४०]

एवमन्यत्रापि तत्र-तत्र ऋषित्वोपचारा यथायथं भाव्याः। एवमष्टके चत्वारो मन्त्राः उदाहरणार्थं दर्शिताः।

प्रथमे प्रकरणे ऋषिशब्दस्य चत्वारि पृथक् पृथक् प्रवृत्तिनिमित्तानि दर्शितानि। परं सम्भवन्त्यामेकार्थतायामनेकप्रवृत्तिनिमित्तकटत्वलक्षणमनेकार्थत्वं दूषयन्ति मीमांसका इति एकप्रवृत्तिनिमित्तकत्वमत्र ऋषिशब्दस्य प्रतिपाद्यते। 'प्रवर्त्तकत्वम्' एव ऋषिशब्दस्य प्रवृत्तिनिमित्तम्। तच्च विषयभेदाद् भिन्नत्व-मिव गतम्। केचित् सृष्टिप्रवर्त्तकाः केचिद् वेदप्रवर्त्तकाः, केचिच्च गोत्र-प्रवर्त्तकाः इति विभिन्ना अपि ऋषयः प्रवर्त्तकत्वसामान्येन एकविधा एवेति भावः। 'ऋष्' धातुर्हि गत्यर्थः। गतिश्च प्रवृत्तिः। अन्तर्भावितण्यर्थतया प्रवर्त्तकत्वमत्र गृहीतम्। अत्रैव प्रवर्त्तकत्वसामान्ये पूर्वोक्ताश्चतस्रोऽपि विधा अन्तर्भवन्तीत्युच्यते—असल्लक्षणानाम्—इत्यादि।

तत्र असल्लक्षणानां रोचनालक्षणानां च सृष्टिप्रवर्त्तकेष्वन्तर्भावः। द्रष्टॄणां वक्तॄणां च वेदप्रवर्तकेषु। तत्र सृष्टिप्रवर्त्तका दिव्यर्षयो देवर्षयः पुराणर्षय इत्युच्यन्ते।

सृष्टिप्रवर्त्तकाः प्राणात्मका ऋषयोऽप्रत्यक्षा अप्रत्यक्षरूपविशेषा वा धर्माः विद्याभिः साक्षात्कृत्य व्यवहारेषूपनीयन्ते स्म। तेषां च साक्षात् कर्त्तारः प्रथमोपदेशकास्तदुद्भावकतया तद्रूपविशेषोद्भावकतया वा द्रष्टार उच्यन्ते। स्वस्वोद्भावितेषु च तेषु प्राणेषु ते सिद्धहस्ताः कवयोऽभवन्, यथेच्छं च तस्मात्तस्मात् प्राणाद् देवान् पितॄन् वा आराध्य स्वार्थानीप्सितानि संपादयामासुः। तेषामेषामुद्भावितानां प्राणानामुद्भावकानां च द्रष्टॄणां समानशब्दत्वमिच्छन्ति।

---

४०. ऋ.सं.-१०/१२५/१-८

तत्रैतदुभयं भवति। क्वचित्तावदुद्भावितानां प्राणानां शब्दैरेव तदुद्भावका विद्वांसो व्यपदिश्यन्ते। क्वचिद्वा तद्वैपरीत्येनोद्भावकशब्दा एव तदुद्भावितास्ते प्राणा भवन्तीति।

पूर्वोदाहृताः 'प्राणो वै वसिष्ठः' इत्याद्याः श्रुतयो बहुभिर्निर्वचन-प्रकारैः प्राणेष्वेवैतान् वसिष्ठादिशब्दान् व्यवस्थापयन्ति। तेनैतेषां प्राणेष्वेव मुख्या वृत्तिर्लभ्यते। तदुद्भावकत्वात् प्रथमोपदेशकत्वाच्चैते शब्दास्तद् द्रष्टृषु भक्त्या सम्प्रतिपन्नाः।

तद्यथा–"मधुवाता ऋतायते इति। यां वै देवतामृगभ्यनुक्ता यां यजुः सैव देवता सर्क्। सो देवता तद्यजुः। तद्वै तन्मध्वेवैष त्रिचः।"[४१] इति कूर्मचिति श्रुतौ तद्देवतानुवाचकतया ऋग्यजुषोर्वाक्ययोस्तद्देवताशब्दः प्रवर्त्तते, तथैवेह तद्देवतानुवाचकतयैवास्य द्रष्टुरपि तद्देवताशब्दो न विरुध्यते–इति बोध्यम्।

तान्येतानि तेषां विदुषां यशोनामानि स्युः। यानि त्वेषां यादृच्छिकानि[४२] नामानि तानि व्यवहारमप्राप्तानि प्रायेणालुप्यन्तैव। कस्यचित् क्वचित् स्मर्यतेऽपि। यथा– विदधी वितथी वा भरद्वाज इति।

एवं पुरैव प्रतिपन्नाया अपि वाचो देव्या विशेषगुणदर्शनयोगाद् अम्भृणस्य दुहिता काचित् अनिर्दिष्टनाम्नी वागित्येवाख्यायते स्म एवं जुहूः। एवं दक्षिणा। एवं श्रद्धा।

अथवा मतमेतत् यादृच्छिकान्येवैतानि तासां नामानि वाग् जुहूः दक्षिणा श्रद्धेति। ताः स्वनामप्रेम्णैव स्वनामप्रतिपन्नांस्तांस्तान् वागादि धर्मान् विशिष्य रूपयामासुरिति।

अथोद्भावकशब्दा अपि केचित् प्राणाः श्रूयन्ते, यथा– 'कुमारोऽग्निः' 'अप्रतिरथ इन्द्रः'। इह हि कुमारोऽयं ब्राह्मणबालकस्त्रैवृष्णस्य राज्ञो रथचक्रघातान्मृतस्तत्पुरोहितेन पुनरुज्जीवितश्चासीत्। तेन दृष्टत्वादसौ (अग्निः) तन्नाम्नैव ख्यातिमगात्। स ह्येष कुमारोऽग्निः अष्टरूपश्च पशुपतिश्चेति।

---

४१. श.प.ब्रा. ७/५/१/४

४२. नामसु यदृच्छाशब्दा एव प्रयुज्यन्ते इति।

एवमिन्द्रस्य राज्ञः पुत्रोऽयमप्रतिरथो नाम। तेन दृष्टोऽयं संग्रामविजयकारीन्द्रो यजमानात्मनि संनिधापितः प्राणविशेषोऽप्यत्राप्रतिरथो नाम।

क्वचित् पुनर्नैवं समानशब्दत्वं दृश्यते, यथा– "अजान् ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयंभ्वभ्यानर्षत्। तदृषीणामृषित्वमिति" इति श्रुतौ विश्वामित्रगोत्रस्थानामन्येषां वा केषाञ्चिदजपृश्नीतिद्विनामकानामृषीणां द्रष्टृत्वमाख्यायते। दृश्यन्ते च तदार्षेया मन्त्राः, किन्तु नाजपृश्निसंज्ञा देवाः श्रूयन्ते। तदित्थं क्वचित् व्यभिचारेऽपि प्रायेणोद्भावकानां द्रष्टॄणामुद्भावितानां च प्राणानां समानशब्दत्वं सिद्धम्।

अन्ये कथयन्ति यन्नैवं द्रष्टुर्वसिष्ठशब्दत्वे वसिष्ठप्राणोद्भावकत्वमात्रं हेतुः। अपि तु वसिष्ठप्राणेनैव कृतात्मत्वमपि। इह हि प्राणिनामध्यात्मं चतुर्विधो ग्रामो व्याख्यातः। तत्रान्यतमे प्राणग्रामे यस्यायं वसिष्ठो मुख्यप्राणोऽङ्गी भवति, स वसिष्ठात्मकत्वात् वसिष्ठ इत्युच्यते। "वैशेष्यात्तु तद्वादः" इति न्यायात्। अपि तु श्रद्धामयोऽयं पुरुषो "यो यच्छ्रद्धः स एव सः" इति स्मृते यस्मिन् पुरुषे वसिष्ठविषयिणी श्रद्धा भूयसा भवति स वसिष्ठमयो वसिष्ठ इत्येव ख्यातः।

यतो हि दोषदर्शनानुकूलवृत्तिप्रतिबन्धिका मनोवृत्तिः, तया वृत्त्या तदभिमुखीभावः, तेन कृतश्च तेन तेन सहात्मनः संश्लेष इति सर्वमिदं श्रद्धापदेनोच्यते। तन्मयः पुरुष इत्यस्यायमभिप्रायो यत्पुरुषस्य क्वचिच्छ्रद्धा पूर्वसंस्कारानुसारेणावश्यं भवति। यद्विषयिणी च श्रद्धा, तत्संश्लेषात्तद्रूपतामेवासौ गच्छतीति।

अस्तु यथा तथा वा, भृगुवसिष्ठनामानो विद्वांसोऽवश्यं पुरा भारते बभूवुरित्यत्र न विवादः। ते च वेदप्रवर्त्तकाः। तैर्दृष्टाश्च प्राणाद्याः सृष्टिप्रवर्त्तकाः। समाननामत्वाद् घनिष्ठसंबद्धाच्च प्राणरूपा मनुष्यरूपाश्च ऋषिविशेषाः सहैवाख्येयाः।

**ऋषयो हि कवयः**

एभिःप्रमाणवचनैरतीन्द्रियैर्वैदिकतत्त्वानां द्रष्टारः सङ्ग्रहीतारो वा ऋषय एव कवय इत्येतेन पदेनाख्यायन्ते। यथा–

"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाता स्वयम्भुवा॥"[४३]

इति स्मृतयश्चाप्यमुमेवार्थमवबोधयन्ति। ईश्वरीयज्ञानानुसारेण स्व
गुम्फिताः सर्वे शब्दाः ऋगादिभावैः परिणमय्य महर्षीणां वेदरचनार्थमप्र
मानानामप्याद्यानां बुद्धिं स्वयमेवारूढाः प्रादुरभवन्निति महर्षयो लेभिरे इत्यस्य
तथा च संघातभेदाभ्यां प्राकृतिकोपादानस्वभावसिद्धाभ्यामनेकभावग्राहिणाम
यथा विभिन्नशक्त्यावेशात् विभिन्नकार्यकारित्वमनुभूयते, तथैव
निर्विशेषमेषामपि वाय्वादिसमशीलानां शब्दानां काले-काले सन्निवेशविशे
गहनतमानां परिवर्तितरूपाणामर्थैरौत्पत्तिकसम्बन्धानुबद्धानां विभिन्नशक्त्याव
विभिन्नार्थप्रत्यायकत्वमिति नैतावता शब्दसमष्ट्यात्मकानामेषां वे
कृतकत्वभावोदयितुं युक्तमिति, सोऽयं वेदानां कृतकत्ववादः।

अपरे पुनरेवं प्रत्यवतिष्ठन्ते—प्राचीनैरेवातिबुद्धिमद्भिर्गौतमकपि
कणादादिभिर्मुनिभिर्न्यायसांख्यवैशेषिकादिदर्शनेषु वेदानां कृतकत्वप्रतिप
नात्तन्निर्माणस्य च मनुष्यैरशक्यत्वादवश्यमेवैते वेदा ईश्वरकृताः प्रतिपद्य
स्पष्टश्चायमर्थः समर्थितः 'शास्त्रयोनित्वात्' इति वदता भगवता बादरा
ब्रह्ममीमांसायाम्।

अन्ये पुनर्विशेषसमीक्षाप्रवीणाश्चातुरीचणा ईश्वरकृतत्वमप्यक्ष
इत्थमाचक्षते—यद्यपि मृत्सुवर्णादिवश्यं शब्दोऽपीश्वरकृत एवेति युक्तं प्रत
तथापि यथा घटकङ्कणादयः तत्सन्निवेशविशिष्टाः पदार्था मनुष्यैरेव यथोप
सम्पाद्यन्ते-व्यापाद्यन्ते च। न च तदर्थमीश्वरो विनियुज्यते। एव
सङ्केतसम्बन्धेनार्थवतां शब्दानां सन्निवेशविशेषेण यथोपयोगं सम्पा
वेदग्रन्थोऽपि मनुष्यकृत एव सम्भाव्यते, तथा च **"यज्ञेन वाचः पदवीय**
इत्यादयो मन्त्रवर्णा अप्यमुमेवार्थं भङ्ग्या सूचयन्ति। अत एव मन्त्रं प्रयु
शतपथश्रुतिः **"तस्मादेतद् ऋषिणाऽभ्यनूक्तम्"**[४५] इत्यसकृत् प्रतिपाद
अत एव च ब्राह्मणान्तरेऽपि 'तदुक्तमृषिणा' इत्यसकृदुक्तं दृश्यते। न

---

४३. स्मृतिवचनम्- उल्लेखः- ऐतरेयब्राह्मणे सायणभाष्ये।

४४. ऋ.सं. - १०/७१/३

४५. श.प. ब्रा.- १४/१/१/२५, "तदेतदृषिः पश्यन्नभ्यनूवाच" ऐ.ब्रा. २/४/१

'ऋषिर्वेदमन्त्रः' इति केषाञ्चिदुक्तिः श्रद्धेयाः, **"ऋषिष्टुतो विप्रानुमदितः कविशस्तः"**[४६] इत्येतेषां मन्त्रघटकपदानां निर्वचनपरेण "ऋषयो ह्येतमग्रेऽस्तुवन्, तस्मादाह ऋषिष्टुत इति–एते वै विप्रा यदृषयः, एते ह्येतमन्वमदन्, तस्मादाह विप्रानुमदित इति। एते वै कवयो यदृषयः एते ह्येतमशंसंस्तस्मादाह कविशस्त"[४७] इति हविर्यज्ञकाण्डस्थेन तदुपोद्बलकतयेव च **"ये वै ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते विप्राः"**[४८] इत्यध्वरकाण्डस्थेन शतपथब्राह्मणेन, तथा मैत्रायण्यां संहितायां खिलकाण्डे पुरोडाशब्राह्मणे **"तया वदन्ते कवयः पुरस्तार्वित–ब्राह्मणाः कवया ऋषयः कवयः"**[४९] इत्येवमनूक्तत्वेन तथा तैत्तिरीयसंहितायां षष्ठकाण्डे षष्ठप्रपाठके–**"एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवान्"**[५०] इत्युक्तत्वेन **"ऋषयो मन्त्रद्रष्टारः"** इत्यादिना यास्कनिरुक्तवचनेन च मनुष्यविशेषाणां ब्राह्मणानामेव मन्त्रकृतामृषित्वेन कवित्वेन वा प्रतिपन्नत्वात्।

यद्यपि कविशब्दस्य प्रयोगो वेदेषु बहुत्रोपलभ्यते। पृथक्–पृथग् वर्णनविधया कविशब्दस्य 'क्रान्तदर्शीति' एवमेवार्थोपयुज्यते। क्वचिदस्य प्रयोगः देवेभ्यः क्वचिद् ऋषिभ्यश्च कृतोऽस्ति। यथा– **"कविं शशासुः कवयोऽदब्धा"**[५१]

अत्र सायणाचार्यः कवयः = क्रान्तदृशो देवाः, कविं = मेधाविनम् इत्यर्थं व्याकरोति। अन्यत्रापि–

> **"उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।**
> **क्षुरस्य धारा निशिता दुरत्यया**
> **दुर्गं पथस्तत् कवयो वदन्ति॥"**

अत्र 'कवयः' इत्यस्य शब्दस्यार्थः 'मन्त्रद्रष्टारः' एव। ते मन्त्रद्रष्टारो

---

४६. श.प. ब्रा.– १/४/२/६–८, तै.सं. २/५/९/१
४७. श.प. ब्रा.– १/४/२/६–८
४८. श.प. ब्रा.– ३/५/३/१२
४९. मैत्रायण्याम् ४/१/२
५०. तै.सं. ६/६
५१. ऋ.सं. ४/२/१२

ऋषयः कवयः सन्ति। यथा लोके कविः महाकविश्च विख्यातो भवति। स स्वकीयां रचनां पद्यमयीं प्रस्तौति। तस्मात् पद्यमयी रचनायाः नाम 'कविता' भवति। तद्वदेवैषां ऋषीणां पद्यात्मिका रचना देवर्षिच्छन्दोभिः समायुक्ता भवति अत एवैते ऋषयः कवय इत्युच्यन्ते। ते कवयः क्रान्तप्रज्ञानः कृष्णाजिनेषूपविष्टाः सन्तः मन्त्राणां दर्शनं कुर्वन्तः स्वकीयेन रचनाकौशलेन कवितारूपेणाऽवरेभ्य ऋषिभ्य उपदिष्टवन्तः इति पूर्वोक्तमेव। तेषां कवीनां कविताऽत्र वेदे सूक्तरूपेण ज्ञायतेऽस्माभिः। इमे कवयः साक्षात्परब्रह्म- परमात्मनोऽवतारभूताः सन्ति इत्यस्मिन् विषये किंञ्चिद्विचार्यते अधुना–

## परब्रह्मपरमात्मनोऽवतारभूताः कवयः

**"वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥"**[५२]

इत्यनेन स्मृतिवचनेनेदं ज्ञायते यत् वेदमन्त्राणां अर्थतत्त्वज्ञो जनो अस्मिन् लोके वसन् अपि ब्रह्मभूः इत्येवमेव कल्पते। अस्माकं महर्षयः कवयः अस्मिन्नेव लोके क्वचिदाश्रमभूतायां प्रयोगशालायां विद्यमानाः सन्तः योगबलात् दृष्टमन्त्राणां तात्त्विकमर्थं विजिज्ञापयिषन्तिस्म। तस्मादेतस्मादेव कारणात् सामान्यप्रक्रियाबलात् एतद् वक्तुं शक्यते यत् "तज्ज्ञात्वा तदेव भवति" अर्थात् परब्रह्मणो निःश्वासभूतानां वेदानामवगमात् कवीनां परब्रह्मण्यन्तर्भावो भवतीति।

यद्यपि राजस्थानजयपुरराजसभापण्डितः महामहोपाध्यायसमीक्षा-चक्रवर्ति **श्रीमधुसूदनओझाजी**महोदयस्य मतानुसारं– तस्मादेवासदभिधानाद् ऋषिप्राणखण्डात् तदन्तः सृष्टयो जायन्ते। तत्र प्राणा वा ऋषयो दैव्यासस्तनूपावानस्तन्वस्तपोजाः (ऐ. ब्रा. 9.3)– इति श्रुत्या ऋषि (कवि)- प्राणानां सृष्टिजनकत्वमवगम्यते।

तथाहि– अव्ययपुरुषालम्बनः क्षरपुरुषसाधनो विश्वव्यापी कश्चिद-क्षरपुरुषः प्रकृत्या विशिष्टः सन् प्रकृतिब्रह्मणः पाञ्चविध्यात् पञ्चधात्मान-

---

५२. मनुस्मृतौ–१२/१०२

माधत्ते–स प्राणमयः स्वयम्भूः। स आपोमयः परमेष्ठी। स वाङ्मयः सूर्यः। सोऽन्नमयश्चन्द्रः। सोऽन्नादमयः पृथिवीलोकः। तत्र स्वयम्भूः सत्यलोको द्यौः, परमेष्ठी जनल्लोकः पृथिवी। तयोरन्तरतोऽन्तरिक्षं तपोलोकः। अथ परमेष्ठी द्यौः। सूर्यः पृथ्वी तयोरन्तरतोऽन्तरिक्षं महर्लोकः। अथ सूर्यः, स्वर्लोको द्यौः। इयं पृथिवी पृथ्वी। तयोरन्तरतोऽन्तरिक्षं भुवर्लोकः। अथेयं पृथ्वी भूर्लोकः। तेऽमी सप्तलोका उत्तरोत्तरं क्रमेण सन्निविशन्ते। तत्रायं सत्यलोकः स्वयम्भूर्ब्रह्माग्निलोकः। ऋक्सामयजुषां यजुर्ब्रह्माग्निरुच्यते। यच्च जुश्चेति व्युत्पत्त्या वाय्वाकाशभेदाभिन्नोऽयं ब्रह्माग्निः। तत्रानन्ता वायवोऽमी ऋषय (कवयः) उच्यन्ते। ते च कवयः द्विविधाः– उन्मुग्धावयवाः, उद्बुद्धावयवाश्च। आद्याः असत्प्राणाः सत्यलोकेऽवतिष्ठन्ते। अथैते तपोलोकमागत्य तप्यमानाः परिक्षुब्धाः सन्तः क्रमेण तृतीये पारमेष्ठ्ये जनल्लोके समागता उद्बुद्धावयवा भूत्वा द्वितीयाः पितरो जायन्ते तपोजा हीमे तपसैव नानारूपा जायन्ते।

तत्रोद्बुद्धावस्थायामवयवधर्मतो भेदादमी ऋषयोऽनन्तविधा भवन्ति। तेषु द्वादशातिस्तुतयः स्मर्यन्ते–भृग्वङ्गिरसौ, अत्रिमरीची, पुलस्त्यपुलहौ, क्रतुदक्षौ, वसिष्ठागस्त्यौ, विश्वामित्रविश्वकर्माणौ–इति।

त एते पितृसंज्ञाः सृष्टिकर्त्तारः प्राणा वाच्येव योनौ आत्मानं सिञ्चन्तोऽक्षरपुरुषमनोविशेषगृहीतबलप्रयोगाद् विभिन्नरूपा एताः सर्वाः सृष्टीरुत्पादयन्ति। इति महर्षिकुलवैभवम् नामके पुस्तके द्वितीये प्रकरणे। श्रुति-स्मृति-पुराणादिषु परब्रह्मपरमात्माऽपि सृष्टिं जनयति। **"तत्सृष्ट्वा तदनुप्राविशत्"**[५३] इतितैत्तिरीयश्रुत्या जीवलोकं सृष्ट्वा तत्र प्राणभावेनावस्थितो भवति। तथैव कवयोऽपि सृष्टिमुत्पाद्य तत्र प्राणभावेनावस्थिताः सन्तः परमात्मनोऽवतारत्वमुपवर्णयन्ति।

अतोऽनेन विवेचनेनेदं स्पष्टमेव प्रतिभाति यत्कवयो परब्रह्म-परमात्मनोऽवतारभूताः परमतत्त्वस्योद्घोषकाः परब्रह्मणः द्वितीयस्य स्वरूपस्य शब्दराशिमूलस्य वेदस्य तात्त्विकार्थविज्ञातारश्च सन्ति।

---

५३. तैत्तिरीयोपनिषदि–२/६

सामान्यतः यो जनो यस्माद् स्वभावात् सम्बन्धितो भवति स तस्मिन्नेव स्वभावसिद्धे कर्मणि प्रवृत्तो भवति। विषयस्यास्य स्पष्टप्रकाशनं कुर्वता महाकविना भवभूतिना प्रोक्तं यत्–

**"व्यतिषजति पदार्थानान्तरः कोऽपि हेतुः।"**[५४]

अर्थात् कश्चिदपि पदार्थः कस्मिंश्चिदपि पदार्थे सम्मिश्रितस्तदैव भवति यदा तयोरुभयोरन्तरं कश्चिद् आन्तरिकः सम्बन्धः स्यात्। एतेन प्रमाणेन वैदिककवीनां परमात्मतत्त्वज्ञत्वमेव तस्य ब्रह्मणोऽवतारत्वं साधयतीत्यलम्।

---

५४. उत्तररामचरितनाटकम् (षष्ठाङ्के) श्लोकः-१२

## द्वितीयोऽध्यायः

# वैदिकऋषीणां त्रिगुणात्मिका दृष्टिः

"सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्।।"[१]

नामरहितः सन्नपि परमात्मा बहुभिर्नामभिर्विज्ञाप्यते। तस्य सर्वनामसु 'ॐ'कारो नाम सर्वश्रेष्ठः, यदविनाशिपरमात्मनो मूलस्वरूपञ्चास्ति। तस्य परब्रह्मणः ओंकारेत्यस्मिन् 'नाम्नि' त्रीण्यक्षराणि विद्यन्ते। तत्र– अकारो, उकारो, मकारश्चेति। अकारः सत्, उकारश्चित्, मकारश्चानन्दः। अकारो नाम तपः, उकारः कामः, मकारः श्रम इति। अयं भावः सच्चिदानन्दघनस्य त्रिगुणोपेतस्य परब्रह्मपरमात्मनः तपःकामश्रमसाध्याः ऋगादयो वेदाः शास्त्राणीतिहासपुराणादयश्च च श्वासोच्छ्वासद्वारा प्रकटीभूताः। तेषां निःश्वासभूतानाम् अलौकिकज्ञानविज्ञानभूतानां मन्त्रात्मकानां वेदानामतिशयेनाधिकतपोबलेन तत्रत्याः सनकादयः सिद्धा ऋषयः प्रबलशक्तिसम्पन्नेन श्रोत्रेन्द्रियेण श्रुत्वा कालान्तरे च शिष्यप्रशिष्यमाध्यमेनैतादृशानामलौकिकज्ञानतत्त्वानां प्रसारं कृतवन्तः। एवमेवाद्यावधि चैतस्य ज्ञानविज्ञानागारस्य परमतत्त्वस्वरूपभूतस्यात्र बहुप्रचारः समभवत्। फलतो वेदज्ञानां परमतत्त्वावगाहकानाम्बहुलत्वात् तत्तदृषिदृष्टत्वादिमे शाखाप्रशाखादिभिधाऽनन्ताः समभवन्। ईदृगनन्तशब्दराशिमूलकानां शब्दब्रह्ममयानां वेदानामुत्पादकत्वादयमनन्तसंज्ञया व्यवह्रियते लोके। स चानन्तोऽस्यानन्तप्रपञ्चात्मकस्य संसारस्यापि निर्माणमकरोत्।

---

१. कठोपनिषदि – २/१३

अनन्तप्रपञ्चसृष्टावस्मिन् स बीजरूपेण सर्वेष्वपि जड़-चेतनजीवेषु तिष्ठति। उक्तं हि यथा श्रुतौ–**"तत् सृष्ट्वा तदेवानुप्राविशत्"**[२] इति। सोऽयं परमात्मा द्विविधोऽत्र प्रतिपादितोऽस्ति। शब्दब्रह्म-परब्रह्मरूपेण च। यथा–

**"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥"**[३]

अर्थात् यो हि जनो ऋग्यजुस्सामाथर्वादिषु वेदेषु निष्णातो भवति स एव परब्रह्मणि प्रवेष्टुं योग्यो भवति, नान्यः। यथोक्तं भगवता मनुना–

**"वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥"**[४]

अर्थात् वेदशास्त्रार्थतत्त्वज्ञः यस्मिन् कस्मिन्नपि आश्रमे वसन् ब्रह्मभूः इत्यनेन पर्यायेण बोध्यते। स ब्रह्मतत्त्वं विज्ञाय स्वशिष्यानपि तद्वदेव सम्पादयति। शिक्षाशास्त्रेष्वेतादृशः सिद्धान्तोऽपि लभ्यते यत् "यो यदिच्छति तस्य तत्"[५] अर्थात् यः शिष्यः यत्शास्त्रमध्येतुं वाञ्छति तस्य कृते तदेवोपदिशति स गुरुः। शास्त्राणामिहानेके विधयः कथिताः। तत्राप्यनेकविधशास्त्रेषु ज्ञानविज्ञानवादिशास्त्राणां कोटिद्वयमुक्तम्। यथा–

**"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः"**[६]

यथाऽत्र परमात्मनः स्वरूपद्वयमुक्तम्। तयोः द्वयोः स्वरूपयोरेकं मूलस्वरूपमन्यत् तु स्वरूपोपवर्णनात्मकं शब्दराशिमूलकं प्रोक्तम्। स्वरूपोपवर्णकैः शास्त्रैरिह परमतत्त्वस्य ज्ञानलाभः प्रतिपादितः। एवमेव ज्ञानेन विज्ञानस्य प्राप्तिरिति सिद्धान्तः कल्पितः। वस्तुतस्तु लोके एतदेव स्फुटतरमवलोक्यते यत् यो हि जनो यस्मिन् निष्णातः तस्मिन्नेव पारङ्गतं करोति, कर्तुमर्हति वा। यथा कश्चित् चित्रकारः यादृशं चित्रं निर्मातुं

---

२. तै. उ. - २/६

३. मैत्रायण्याम् - ६/१२ अमृतविन्दूपनिषदि– श्लोक-१७

४. मनु. - १२/१०२

५. कठोपनिषदि– १/२/१६

६. अमरकोषे - धीवर्गे

वाञ्छति स स्वकीयायां प्रयोगशालायामुपविश्य वर्णपेटिकायाः साहाय्येन तादृशं मनसि कल्पितं चित्रं निर्माति। तथैव गुरुरपि स्वकीये आश्रमे वसन् कृष्णाजिनेषूपविश्य स्वं शिष्यं यथा कर्तुमिच्छति तादृशमेव ज्ञानं प्रददातीति। यज्ञकर्म-ब्रह्मकर्मणोश्च प्रवचनावसरे ऋषयो त्रिगुणात्मिकया दृष्ट्या विषयप्रतिपादनं कुर्वन्ति। पूर्वं यदुक्तं ब्रह्मप्रतिपादने त्रयाणां वर्णानां अकार-उकार-मकाराणां संयोगः, एतद्विषये किञ्चिद्ब्रूमः-

परब्रह्मपरमात्मनः नामात्मकस्योंकारस्य या प्रथमा मात्रा अकार इति एषा मात्रा संसारस्य प्रत्येकनामसु व्याप्ताऽस्ति। यथोक्तं श्रुतिषु-"अकारो वै सर्वा वाक्"[७] इति। समस्तेष्वपि वर्णेषु अकारः प्रथमः। स्थूलजगद्रूपेऽस्मिन् विराट्शरीरे वैश्वानररूपोऽन्तर्यामित्वेन परमेश्वरो व्याप्तः, विराड्रूपेण सर्वप्रथमं स्वयं प्रकटत्वादस्य जगतः आदिपुरुषोऽपि स एवास्ति। इत्थमकारः स्थूलजगद्रूपिशरीरे व्याप्तेन वैश्वानरेण साम्यं बिभर्ति। एतस्मादेव कारणात् अकारोऽयं पूर्णब्रह्मणः प्रथमः पादः। उकारः द्वितीया मात्रा परमात्मनः द्वितीयेन तैजसनामकेन पादेन साम्यं बिभर्ति यथा अकारमकारयोर्मध्ये उकारो वर्तते एवमेव वैश्वानरप्राज्ञयोर्मध्ये तैजसः मध्यस्थानत्वाद् पूर्णब्रह्मणः द्वितीयः पाद उक्तः। अयं भावः-स्थूलजगतः प्राकट्यात्पूर्वं परमेश्वरस्यादि-संकल्पद्वारा या सूक्ष्मा सृष्टिर्भवति, यस्याः वर्णनं मानसीसृष्टिनाम्ना शास्त्रेषूपलभ्यते, यस्यां सृष्टौ समस्तान्यपि तत्त्वानि पञ्चतन्मात्रारूपेणावस्थितानि भवन्ति, तस्मिन् सूक्ष्मजगद्रूपशरीरे चेतनप्रकाशस्वरूपः हिरण्यगर्भपरमेश्वरः अधिष्ठातृरूपेण वसति। 'अतः मानसिकसृष्टेरधिष्ठातृरूपस्य तैजसस्य उकारेण समत्वाद् 'उ' एव परब्रह्मणः द्वितीयः पादः कथितः। मकारात्मिका तृतीया मात्रा ओंकारस्यान्तिमा मात्रा। अकारोकारयोरनन्तरं पठ्यते एतस्मात् कारणात् उभयोरत्र मापनं भवति अर्थात् मकारः तदुभयं सम्यक्तया जानाति। फलतः मकारस्योच्चारणेनैव साक्षात् मुखमवरुद्धं भवति। सुषुप्तस्थानीयः कारणजगतः अधिष्ठाता प्राज्ञोऽपि सर्वज्ञः कथ्यते। अर्थात् प्राज्ञोऽयं स्थूल-सूक्ष्म-कारणात्मिकां तिसृणामप्यवस्थानां सम्यक् परिचयं निदधाति। यतो हि कारणजगतः सकाशादेव स्थूलसूक्ष्मयोरुत्पत्तिर्भवति तत्रैव च लयो भवति। इत्थं मकारस्य पूर्णब्रह्मणः तृतीयेन पादेन समत्वात् तृतीया-मात्रा ब्रह्मणः तृतीयः पादः कथ्यते।

---

७. ऐ. आ.- २/३/६; गीतायाम्- 'अक्षराणामकारोऽस्मि'-१०/३३

एता एव तिस्रो मात्राः अधिभूत-अधिदेव-अध्यात्मन
विश्रुताः सन्ति। अधिभूतोऽकारः, अधिदेवः उकारः, अध्य
मकारेत्युच्यते। उपनिषत्सु शान्तिपाठानन्तरं त्रिवारं "शान्तिः, शान्
पठ्यते। तत्र ओंकारपरमात्मना त्रिविधतापापोशमनार्थं प्रार्थन
त्रिविधतापाश्चाधिभौतिकाधिकादैविकाध्यात्मिकाः उक्ताः। यथोक्त
**"दैहिक-दैविक भौतिक तापा। राम राज्य काहूँ नहि**
अर्थादस्मिन् संसारे त्रिविधानां तापानां वर्णनानि मिलन्ति। ये
काले काले स्व-स्वप्रभावेण प्रभावितान् कुर्वन्ति। परं मर्याद
श्रीरामचन्द्रस्य राज्यशासने कश्चिदपि जनः एभिः त्रिविधत
परितप्तो न भवति स्म इति गोस्वामितुलसीदासेनात्र स्पष्टीकृ

वयं जानीमो यद् ब्रह्मैव जगतोऽस्य मूलकारणमिति श्रुति
दर्शनादीनामार्यशास्त्राणामैकमत्येन निरूढः सिद्धान्तः। कथमि
विचारकैरिति गहनतत्त्वप्रवेशाय युक्त्युपाश्रयः श्रुत्या प्रदर्शि
पदार्थानाम्-उक्थम्, प्रतिष्ठा, साम च यद्भवति, तत्तेषां कारणं
यत् उत्तिष्ठति (प्रादुर्भवति-जायते) कार्यजातं तदुक्थम्; यदाश्रयेण
प्रतिष्ठा। यच्च सर्वेषु कार्येषु समत्वेन अनुगतम् तत्साम। यथा-
शरावाद्याः कार्यविशेषा मृद एवोत्तिष्ठन्ते- इति मृदेवैषामुक्थम्
यस्मादिति व्युत्पत्त्या बाहुलकेन सिद्धस्योत्थशब्दस्य वर्णवि
शब्दनिष्पत्तेः।

मृदाश्रयेणैव चैते तिष्ठन्ति तेन प्रतितिष्ठन्त्यस्यामि
मृदेवैषां प्रतिष्ठा। सर्वेषु चैतेषु कार्येषु समानभावेन मृत्समनुग
इति मृदेवैषां साम। सम एव वर्णद्वयोपजनात् साम बोध्य
हेतुभिर्घटकुड्यशरावादीनां कारणं मृदवधार्यते।

तथैव सच्चिदानन्दलक्षणात् ब्रह्मण एव जगदुत्ति
प्रतितिष्ठति, तच्चास्मिन् जगति साम्येन सर्वत्रानुस्यूतमिति
निर्धार्यत इति प्रघट्टकस्यास्य सारः। ब्रह्मशब्दस्य कथमेतेऽर्था इ
बृंहणार्थकाद्-बृंहधातोर्मन् प्रत्यये ऋकारस्य इकारतामापाद्य निष्प
उक्थरूपतां प्रत्याययति; स्वयमनुपक्षीणस्य कार्यविस्तार एवो

बिभर्तीति ब्रह्मेति भृधातोर्मन् प्रत्यये 'भर्मन्' इति जाते ततो निष्पन्नो ब्रह्मशब्दः प्रतिष्ठाबोधकः।

वर्णानां प्रथमवर्णस्योष्मणा संयोगे द्वितीयवर्णरूपता भवति तृतीयस्य चोष्मणा संयोगे चतुर्थवर्णतेति भाषाशास्त्रविदः। सोऽयमूष्मा विचाली नैकत्रावतिष्ठते।

उष्मण एव च रूपं हकारः। ततश्च 'भर्मन्' शब्दे मकारस्थस्योष्मणो हकाररूपेण पृथग्भावे, भकार उष्मणा विरहितो 'ब' काररूपतां यात इति बर्हमन् शब्दो जातः। रेफोऽप्ययं भवति विचालीति अकारोत्तरं स्थितस्य तस्याकारात्पूर्वमागमने निष्पन्नो 'ब्रह्मन्' शब्दः बृहिधातोर्निष्पन्ने ब्रह्मशब्देऽपि रेफस्य विचालितैव हेतुः, ऋकारस्य मध्ये हि रेफः, अभितश्चाज्भक्तिरिति रेफो यदा कृत्स्नाया अज्भक्तेः पूर्वमागच्छति, अज्भक्तिश्च रेफत्यक्ता अकाररूपतया परिणमते, तदा ऋकारो 'र' रूपतां गच्छति इति।

ब्रह्मणो बृंहणं जगदिति तत्र सर्वत्र साम्येन ब्रह्मणोऽवस्थितिरर्थसिद्धेति सामशब्दार्थोऽपि बृहिधातुनिष्पन्नाद् ब्रह्मण एव लभ्यते। यथा–अद्भ्य उत्थितेषु, अप्सु प्रतिष्ठितेषु फेन–हिम–श्लेष्माद्यर्थजातेषु यथापः साम्येन वर्तन्ते, सिकता–शर्कराश्मायोहिरण्येषु यथा पृथिवीभावो दृश्यते, तथैतेषु सर्वेषु भिन्नेष्वपि यावदभिन्नं सत्तासामान्यं तत् सर्वत्र समत्वात् साम नाम। सर्वत्रोपबृंहितत्वाच्च तद्ब्रह्म।

अर्थात् ब्रह्म हि सत्, चित्, आनन्दः इति त्रिरूपमिति उपनिषदां घण्टाघोषः। तत्र सद् इति न सत्तावदुच्यते, किन्तु सत्तारूपमेवेति स्फुटं वेदान्तविदाम्। यद्यपि निर्विशेषं ब्रह्म न केनापि शब्देन प्रतिपादयितुमर्हम्; तथापि निष्पन्ने जगति एतैः रूपैर्ब्रह्मणो व्याप्तिः सर्वत्र जायत इति तात्पर्येणेमानि ब्रह्मणो रूपाणि वदन्ति शास्त्राणि। तत्रापि सत्तारूपं सर्वैः स्फुटमनुभूयते– इति तदेव ब्रह्मणो रूपमत्रोदाहृतम्।

चतुष्पाद् ब्रह्म व्याकुर्वाणैराचार्यैः 'निर्विशेषः' 'परात्परः' 'पुरुषः' 'सत्यः' (प्रजापतिः) इति चत्वारः पादाः प्रदर्शिताः। तत्र विशेषस्य वक्तव्यस्य कस्यापि धर्मस्याभावादयं प्रथमः पादः वाङ्मनसातीतः निर्विशेष उच्यते।

तत्र प्रसुप्तस्य बलस्योद्बोधे च परात्परः– इत्युक्तम्। जागर्त्यामाप्तेन बलेन परिच्छेदे कृते तु पुरुषप्रादुर्भावः, तत्रापि प्रथमः अव्ययपुरुषः, तस्य पञ्चकला इत्यादि यावदुक्तम्, ता एव कला अत्र प्रदर्शिताः। अव्ययपुरुषस्यैव च आदिकलात्रितयावच्छेदेन विद्यापुरुषत्वम्, अन्यत्कलात्रितयावच्छेदेन च कर्मपुरुषत्वं व्यवहृतम्। आसां कलानां पृथक् पृथगपि ब्रह्मशब्देन व्यवहार इति चोक्तम्। अत्र च वाक्पदम् 'अवाक्' पदे 'अव' इति उपसर्गस्याद्याकारलोपे संपन्नं द्रष्टव्यम्। अवाञ्चति अर्थरूपेण विवर्तमाना अवरदशां प्राप्नोतीत्यर्थावगमात्। मनः प्राणयोरवाक् अवरा भवतीति वा। यद्वा–उकारः प्राणमाह, अकारश्च मनः, उश्च अश्च वौ तावञ्चति तद्गर्भिता तत्सहचरी वा सदा भवतीति वाक्। उक्तं हि यथा शतपथश्रुतौ–**"स वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः प्रतिपत्तव्यः।"**[८] अत्र वाक्प्राणमनोमय आत्मेत्युक्तम्। सोऽयमात्मा व्यावहारिकः जगच्चक्र-निर्वाहकः, न विभुः, किन्तु परिच्छिन्न इत्यप्युपपादितं पुरुषस्वरूपविवरणे। किन्तु मूलमस्य (परात्परः) अपरिच्छिन्नम्। अपरिच्छिन्नांश एष परिच्छेदमाप्तः पुनरपरिच्छिन्न एव भवितुं कांक्षते प्रकृतिनियमेन। तत एव स्वस्माद् बहिरवस्थितानन्यान् वागादीनात्मनि प्रवेशयितुमस्येच्छा जायते सैवोच्यते 'अशनाया'। तया प्रेरितश्चायमात्मा अशनभूतस्यान्यस्य ग्रहणाय बलमाददानः प्राणांशेन चरति; तदा अर्को नाम प्राण आत्मनः सहचरः, अमात्यभूतः शरीरभूतो वा प्रादुर्भवति। स चायं यत्किञ्चित् बहिष्ठं गृहीत्वा आत्मना सह अन्तर्यामेन, बहिर्यामेन, उपयामेन वा सम्बन्धेन वक्ष्यमाणेन योजयति– तद्योज्यमानं पशुशब्देन बोध्यम्।

मूलभूते ब्रह्मणि उक्थप्रतिष्ठासाम्नामेकत्रैवावस्थितिरुक्ता। कार्यब्रह्मणि तु एषां पृथक् पृथक् स्थानेष्ववस्थितिरुच्यते। इदं त्रैविध्यम् उक्थं प्रतिष्ठा सामेति त्रीणि रूपाणि। प्रत्येकं पिण्डे त्रिरूपता व्याख्यायते– तस्य नाभिः प्रथमं रूपम्, यद् 'अनिरुक्तः प्रजापतिः' शब्देनोच्यते, तदाधारेणैव स पदार्थः प्रतिष्ठितः। तच्चलने एव पिण्डे चलनव्यवहारः। यत्र तु भ्राम्यति

---

८. श.प.ब्रा.–१४/४/३/१०

वाञ्छति स स्वकीयायां प्रयोगशालायामुपविश्य वर्णपेटिकायाः साहाय्येन तादृशं मनसि कल्पितं चित्रं निर्माति। तथैव गुरुरपि स्वकीये आश्रमे वसन् कृष्णाजिनेषूपविश्य स्वं शिष्यं यथा कर्तुमिच्छति तादृशमेव ज्ञानं प्रददातीति। यज्ञकर्म-ब्रह्मकर्मणोश्च प्रवचनावसरे ऋषयो त्रिगुणात्मिकया दृष्ट्या विषयप्रतिपादनं कुर्वन्ति। पूर्वं यदुक्तं ब्रह्मप्रतिपादने त्रयाणां वर्णानां अकार-उकार-मकाराणां संयोगः, एतद्विषये किञ्चिद्भ्रमः-

परब्रह्मपरमात्मनः नामात्मकस्योंकारस्य या प्रथमा मात्रा अकार इति एषा मात्रा संसारस्य प्रत्येकनामसु व्याप्ताऽस्ति। यथोक्तं श्रुतिषु-"अकारो वै सर्वा वाक्"[७] इति। समस्तेष्वपि वर्णेषु अकारः प्रथमः। स्थूलजगद्रूपेऽस्मिन् विराट्शरीरे वैश्वानररूपोऽन्तर्यामित्वेन परमेश्वरो व्याप्तः, विराड्रूपेण सर्वप्रथमं स्वयं प्रकटत्वादस्य जगतः आदिपुरुषोऽपि स एवास्ति। इत्थमकारः स्थूलजगद्रूपिशरीरे व्याप्तेन वैश्वानरेण साम्यं बिभर्ति। एतस्मादेव कारणात् अकारोऽयं पूर्णब्रह्मणः प्रथमः पादः। उकारः द्वितीया मात्रा परमात्मनः द्वितीयेन तैजसनामकेन पादेन साम्यं बिभर्ति यथा अकारमकारयोर्मध्ये उकारो वर्तते एवमेव वैश्वानरप्राज्ञयोर्मध्ये तैजसः मध्यस्थानत्वाद् पूर्णब्रह्मणः द्वितीयः पाद उक्तः। अयं भावः-स्थूलजगतः प्राकट्यात्पूर्वं परमेश्वरस्यादि-संकल्पद्वारा या सूक्ष्मा सृष्टिर्भवति, यस्याः वर्णनं मानसीसृष्टिनाम्ना शास्त्रेषूपलभ्यते, यस्यां सृष्टौ समस्तान्यपि तत्त्वानि पञ्चतन्मात्रारूपेणावस्थितानि भवन्ति, तस्मिन् सूक्ष्मजगद्रूपशरीरे चेतनप्रकाशस्वरूपः हिरण्यगर्भपरमेश्वरः अधिष्ठातृरूपेण वसति। 'अतः मानसिकसृष्टेरधिष्ठातृरूपस्य तैजसस्य उकारेण समत्वाद् 'उ' एव परब्रह्मणः द्वितीयः पादः कथितः। मकारात्मिका तृतीया मात्रा ओंकारस्यान्तिमा मात्रा। अकारोकारयोरनन्तरं पठ्यते एतस्मात् कारणात् उभयोरत्र मापनं भवति अर्थात् मकारः तदुभयं सम्यक्तया जानाति। फलतः मकारस्योच्चारणेनैव साक्षात् मुखमवरुद्धं भवति। सुषुप्तस्थानीयः कारणजगतः अधिष्ठाता प्राज्ञोऽपि सर्वज्ञः कथ्यते। अर्थात् प्राज्ञोऽयं स्थूल-सूक्ष्म-कारणात्मिकां तिसृणामप्यवस्थानां सम्यक् परिचयं निदधाति। यतो हि कारणजगतः सकाशादेव स्थूलसूक्ष्मयोरुत्पत्तिर्भवति तत्रैव च लयो भवति। इत्थं मकारस्य पूर्णब्रह्मणः तृतीयेन पादेन समत्वात् तृतीया-मात्रा ब्रह्मणः तृतीयः पादः कथ्यते।

---

७. ऐ. आ.- २/३/६; गीतायाम्- 'अक्षराणामकारोऽस्मि'-१०/३३

एता एव तिस्रो मात्राः अधिभूत-अधिदेव-अध्यात्मनाम्नापि लोके विश्रुताः सन्ति। अधिभूतोऽकारः, अधिदेवः उकारः, अध्यात्ममिति च मकारेत्युच्यते। उपनिषत्सु शान्तिपाठानन्तरं त्रिवारं "शान्तिः, शान्तिः, शान्तिः" पठ्यते। तत्र ओंकारपरमात्मना त्रिविधतापापोशमनार्थं प्रार्थना क्रियते ते त्रिविधतापाश्चाधिभौतिकाधिकादैविकाध्यात्मिकाः उक्ताः। यथोक्तं रामायणे–
**"दैहिक-दैविक भौतिक तापा। राम राज्य काहूँ नहिं व्यापा।।"**
अर्थादस्मिन् संसारे त्रिविधानां तापानां वर्णनानि मिलन्ति। ये च प्रजावर्गान् काले काले स्व-स्वप्रभावेण प्रभावितान् कुर्वन्ति। परं मर्यादापुरुषोत्तमस्य श्रीरामचन्द्रस्य राज्यशासने कश्चिदपि जनः एभिः त्रिविधतापैः कदापि परितप्तो न भवति स्म इति गोस्वामितुलसीदासेनात्र स्पष्टीकृतम्।

वयं जानीमो यद् ब्रह्मैव जगतोऽस्य मूलकारणमिति श्रुतिस्मृतिपुराण-दर्शनादीनामार्यशास्त्राणामैकमत्येन निरूढः सिद्धान्तः। कथमिदं निश्चेयं विचारकैरिति गहनतत्त्वप्रवेशाय युक्त्युपाश्रयः श्रुत्या प्रदर्शितः– येषां पदार्थानाम्-उक्थम्, प्रतिष्ठा, साम च यद्भवति, तत्तेषां कारणं निश्चेतव्यम्। यत् उत्तिष्ठति (प्रादुर्भवति-जायते) कार्यजातं तदुक्थम्; यदाश्रयेण तिष्ठति-सा प्रतिष्ठा। यच्च सर्वेषु कार्येषु समत्वेन अनुगतम् तत्साम। यथा– घट-कुड्य-शरावाद्याः कार्यविशेषा मृद एवोत्तिष्ठन्ते– इति मृदेवैषामुक्थम्, उत्तिष्ठन्ते यस्मादिति व्युत्पत्त्या बाहुलकेन सिद्धस्योत्थशब्दस्य वर्णविकारेणोक्थ-शब्दनिष्पत्तेः।

मृदाश्रयेणैव चैते तिष्ठन्ति तेन प्रतितिष्ठन्त्यस्यामिति व्युत्पत्त्या मृदेवैषां प्रतिष्ठा। सर्वेषु चैतेषु कार्येषु समानभावेन मृत्समनुगता अनुभूयत इति मृदेवैषां साम। सम एव वर्णद्वयोपजनात् साम बोध्यम्। एभिरेव हेतुभिर्घटकुड्यशरावादीनां कारणं मृदवधार्यते।

तथैव सच्चिदानन्दलक्षणात् ब्रह्मण एव जगदुत्तिष्ठते, तत्रैव प्रतितिष्ठति, तच्चास्मिन् जगति साम्येन सर्वत्रानुस्यूतमिति तदेव कारणं निर्धार्यत इति प्रघट्टकस्यास्य सारः। ब्रह्मशब्दस्य कथमेतेऽर्था इत्यप्यत्रोक्तम्। बृंहणार्थकाद्-बृंहधातोर्मन् प्रत्यये ऋकारस्य इकारतामापाद्य निष्पन्नो ब्रह्मशब्द उक्थरूपतां प्रत्याययति; स्वयमनुपक्षीणस्य कार्यविस्तार एवोपबृंहणमिति।

बिभर्तीति ब्रह्मेति भृधातोर्मन् प्रत्यये 'भर्मन्' इति जाते ततो निष्पन्नो ब्रह्मशब्द: प्रतिष्ठाबोधक:।

वर्णानां प्रथमवर्णस्योष्मणा संयोगे द्वितीयवर्णरूपता भवति तृतीयस्य चोष्मणा संयोगे चतुर्थवर्णतेति भाषाशास्त्रविद:। सोऽयमूष्मा विचाली नैकत्रावतिष्ठते।

उष्मण एव च रूपं हकार:। ततश्च 'भर्मन्' शब्दे मकारस्थस्योष्मणो हकाररूपेण पृथग्भावे, भकार उष्मणा विरहितो 'ब' काररूपतां यात इति बर्हमन् शब्दो जात:। रेफोऽप्ययं भवति विचालीति अकारोत्तरं स्थितस्य तस्याकारात्पूर्वमागमने निष्पन्नो 'ब्रह्मन्' शब्द: बृहिधातोर्निष्पन्ने ब्रह्मशब्देऽपि रेफस्य विचालितैव हेतु:, ऋकारस्य मध्ये हि रेफ:, अभितश्चाज्भक्तिरिति रेफो यदा कृत्स्नाया अज्भक्ते: पूर्वमागच्छति, अज्भक्तिश्च रेफत्यक्ता अकाररूपतया परिणमते, तदा ऋकारो 'र' रूपतां गच्छति इति।

ब्रह्मणो बृंहणं जगदिति तत्र सर्वत्र साम्येन ब्रह्मणोऽवस्थितिरर्थसिद्धेति सामशब्दार्थोऽपि बृहिधातुनिष्पन्नाद् ब्रह्मण एव लभ्यते। यथा–अद्भ्य उत्थितेषु, अप्सु प्रतिष्ठितेषु फेन-हिम-श्लेष्माद्यर्थजातेषु यथाप: साम्येन वर्तन्ते, सिकता-शर्कराश्मायोहिरण्येषु यथा पृथिवीभावो दृश्यते, तथैतेषु सर्वेषु भिन्नेष्वपि यावदभिन्नं सत्तासामान्यं तत् सर्वत्र समत्वात् साम नाम। सर्वत्रोपबृंहितत्वाच्च तद्ब्रह्म।

अर्थात् ब्रह्म हि सत्, चित्, आनन्द: इति त्रिरूपमिति उपनिषदां घण्टाघोष:। तत्र सद् इति न सत्तावदुच्यते, किन्तु सत्तारूपमेवेति स्फुटं वेदान्तविदाम्। यद्यपि निर्विशेषं ब्रह्म न केनापि शब्देन प्रतिपादयितुमर्हम्; तथापि निष्पन्ने जगति एतै: रूपैर्ब्रह्मणो व्याप्ति: सर्वत्र जायत इति तात्पर्येणेमानि ब्रह्मणो रूपाणि वदन्ति शास्त्राणि। तत्रापि सत्तारूपं सर्वै: स्फुटमनुभूयते– इति तदेव ब्रह्मणो रूपमत्रोदाहृतम्।

चतुष्पाद् ब्रह्म व्याकुर्वाणैराचार्यै: 'निर्विशेष:' 'परात्पर:' 'पुरुष:' 'सत्य:' (प्रजापति:) इति चत्वार: पादा: प्रदर्शिता:। तत्र विशेषस्य वक्तव्यस्य कस्यापि धर्मस्याभावादयं प्रथम: पाद: वाङ्मनसातीत: निर्विशेष उच्यते।

तत्र प्रसुप्तस्य बलस्योद्बोधे च परात्परः– इत्युक्तम्। जागर्त्यामाप्तेन बलेन परिच्छेदे कृते तु पुरुषप्रादुर्भावः, तत्रापि प्रथमः अव्ययपुरुषः, तस्य पञ्चकला इत्यादि यावदुक्तम्, ता एव कला अत्र प्रदर्शिताः। अव्ययपुरुषस्यैव च आदिकलात्रितयावच्छेदेन विद्यापुरुषत्वम्, अन्यत्कलात्रितयावच्छेदेन च कर्मपुरुषत्वं व्यवहृतम्। आसां कलानां पृथक् पृथगपि ब्रह्मशब्देन व्यवहार इति चोक्तम्। अत्र च वाक्पदम् 'अवाक्' पदे 'अव' इति उपसर्गस्याद्याकारलोपे संपन्नं द्रष्टव्यम्। अवाञ्चति अर्थरूपेण विवर्तमाना अवरदशां प्राप्नोतीत्यर्थावगमात्। मनः प्राणयोरवाक् अवरा भवतीति वा। यद्वा–उकारः प्राणमाह, अकारश्च मनः, उश्च अश्च वौ तावञ्चति तद्गर्भिता तत्सहचरी वा सदा भवतीति वाक्। उक्तं हि यथा शतपथश्रुतौ–**"स वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः प्रतिपत्तव्यः।"**[८] अत्र वाक्प्राणमनोमय आत्मेत्युक्तम्। सोऽयमात्मा व्यावहारिकः जगच्चक्र-निर्वाहकः, न विभुः, किन्तु परिच्छिन्न इत्यप्युपपादितं पुरुषस्वरूपविवरणे। किन्तु मूलमस्य (परात्परः) अपरिच्छिन्नम्। अपरिच्छिन्नांश एष परिच्छेदमाप्तः पुनरपरिच्छिन्न एव भवितुं कांक्षते प्रकृतिनियमेन। तत एव स्वस्माद् बहिरवस्थितानन्यान् वागादीनात्मनि प्रवेशयितुमस्येच्छा जायते सैवोच्यते 'अशनाया'। तया प्रेरितश्चायमात्मा अशनभूतस्यान्यस्य ग्रहणाय बलमाददानः प्राणांशेन चरति; तदा अर्को नाम प्राण आत्मनः सहचरः, अमात्यभूतः शरीरभूतो वा प्रादुर्भवति। स चायं यत्किञ्चित् बहिष्ठं गृहीत्वा आत्मना सह अन्तर्यामेन, बहिर्यामेन, उपयामेन वा सम्बन्धेन वक्ष्यमाणेन योजयति–तद्योज्यमानं पशुशब्देन बोध्यम्।

मूलभूते ब्रह्मणि उक्थप्रतिष्ठासाम्नामेकत्रैवावस्थितिरुक्ता। कार्यब्रह्मणि तु एषां पृथक् पृथक् स्थानेष्ववस्थितिरुच्यते। इदं त्रैविध्यम् उक्थं प्रतिष्ठा सामेति त्रीणि रूपाणि। प्रत्येकं पिण्डे त्रिरूपता व्याख्यायते– तस्य नाभिः प्रथमं रूपम्, यद् 'अनिरुक्तः प्रजापतिः' शब्देनोच्यते, तदाधारेणैव स पदार्थः प्रतिष्ठितः। तच्चलने एव पिण्डे चलनव्यवहारः। यत्र तु भ्राम्यति

---

८. श.प.ब्रा.–१४/४/३/१०

चक्रादौ केन्द्रस्य न प्रचलनम्, तत्रावयवगतिसद्भावेऽपि पिण्डस्य चलनं नास्त्येव। अत्र मुख्या शक्तिस्तिष्ठतीति।

द्वितीयं तु रूपं दृश्यमानः पिण्ड एव। सा 'निरुक्ता वाक्' इति उच्यते, इन्द्रियादिभिः पिण्डस्यैव ग्रहणात्, तस्यैव च शब्देन प्रतिपादनात्। अथ पारावतप्रकरणे भृग्वङ्गिरः प्रकरणे च व्याख्यास्यमानात् प्रकारात्तस्य पिण्डस्य प्रतनने यावद्दूरं तस्य सीमा (यत्रस्थः पुरुषः पिण्डमिमं पश्यति, तद्बिन्दोः परतश्च न पश्यति)। तत्रान्तिमं मण्डलं तृतीयं रूपम्। अत्र प्रथमं रूपं 'प्रतिष्ठा' द्वितीयम्-'उक्थम्', तृतीयं तु 'साम'।

त्रिविधा हि शब्दाः भवन्ति– प्रत्यक्षवृत्तयः, परोक्षवृत्तयः, अतिपरोक्षवृत्तयश्च। यत्र प्रकृतिप्रत्ययविभागः स्पष्टं भासते, ते प्रत्यक्षवृत्तयः। यत्र विचारेणोहितुं शक्यते ते परोक्षवृत्तयः। यत्र तु ऊहेऽपि काठिन्यं भवति ते अतिपरोक्षवृत्तयः। तत्र 'उक्थ'पदमिदं परोक्षवृत्तिजातमिति मूले 'पारोक्ष्याद् उक्थं नाम' इत्युक्तम्। 'परोक्षप्रिया इव हि देवाः' इति श्रुतावसकृदुच्यते।

सामपदं च समत्वादेव, किन्तु समत्वम्– अभितः समानरूपेण पिण्डस्य प्रसरणमिति व्याख्येयम्। यद्वा–सर्वाणि अभितो दृश्यमानानि उक्थानि (पिण्डाः) महोक्थेन–मूलपिण्डेन समानानीति सामपदं व्यवहार्यम्। यद्यपि दूरात् पिण्डो लघीयान् दृश्यते, न समीपस्थेन दृश्यमानेन समः, परं सोऽयं मूलपिण्डस्यानुविधायी भवति। मूलपिण्डो यदि महान् तर्हि सामापि तस्य महद् भविष्यति। यदि तु ह्रस्वः, तर्हि सामापि तस्य ह्रस्वं स्यादिति साम्यमवगन्तव्यम्।

इह त्रितयं सर्वत्र परस्परमविनाभूतम्, एकसत्त्वे तदितरद् द्वयमपि स्यादेव। अतः परस्परात्मत्वमेषाम्, त्रितयं चेदं वस्तुन आत्मेति सर्वमिदं शतपथब्राह्मणस्य नवमदशमयोः काण्डयोर्विशिष्य व्याख्यातमिति। इत्थं सामान्येन ब्रह्मणः कार्यं जगदित्यतिसंक्षेपतो निदर्शितम्।

श्रुतिषु यत्र-यत्र सृष्टिविषयोंऽशतोऽपि प्रस्तूयते तत्र सर्वत्र प्रायेण **"प्रजापतिरकामयत, सोऽश्राम्यत्; स तपोऽतप्यत"**[१] इति कामतपः

---

१. श.प.ब्रा.-६/१/१/८

श्रमाः सृष्टिहेतुत्वेन श्रूयन्ते। तेषां स्वरूपं व्याख्यातुमुपक्रमते वाङ्मयः प्राणमयो मनोमय आत्मैव सत्यः प्रजापतिरिति पूर्वमप्युक्तम्। तत्र मनोऽवच्छेदेन कामः, प्राणावच्छेदेन तपः, वागवच्छेदेन च श्रम इति व्यापारत्रयं विभज्य द्रष्टव्यम्। इच्छैव कामरूपेण परिणमत इति।

**कामः प्रथमं व्याख्यायते**–कामोऽत्र इच्छा शब्देनोक्तः– **"अप्राप्तार्थ-प्राप्तिविषयिणी मनोवृत्तिरिच्छा।"**[१०] सुप्रसिद्धमिदं न व्याख्यानसापेक्षम्। अस्या एवेच्छाया वासनापरपर्यायो यः संस्कारो मनसि तिष्ठति, स एवोच्यते काम इति। इच्छच्च मनः प्राणं प्रेरयति। ननु प्रेरणापि स्वयं सक्रियस्यैव संभवेत्; वागिन्द्रियेण शब्दमुत्पाद्य वा, आघातेन वा, उत्थाप्य प्रक्षेपणेन वा स्वक्रियया परत्र क्रियोत्पादकस्यैव प्रेरकत्वप्रसिद्धेः। ततश्च स्वभावेनाक्रियस्य मनसः कथं प्रेरणाकर्तृत्वमपि भवेन्नामेति शंका समाधीयते–**"स्वतो मनसो निष्क्रियत्वेऽपि।"**[११] प्राण एव क्रियाशील इति मनोवाचौ स्वयमक्रिये प्रतिपाद्येते श्रुतिषु, किन्तु प्राणसम्बन्धात् मनोवाचावपि सक्रिये प्रतीयेते। यथा सांख्यानां क्रियाशीलस्य रजसः सम्बन्धात् सत्यतमसी। यथा वायुर्वेदविदां वातसम्बन्धात् पित्तकफौ। तस्मात् प्राणसम्बन्धादेव क्रियावदिव मनः प्राणं स्वेच्छाविषयेऽर्थे प्रेरयतीत्युपपद्यते। इयमेव प्राणप्रवर्तनारूपा मनोवृत्तिः–'अशनाया' पदेन व्यवह्रियते। यथा–

**"मृत्युनैवेदमावृतमासीद्-अशनायया अशनाया हि मृत्युः।"**[१२]

अत्र मृत्युपदं बलबोधकम्, बलस्योत्पन्नप्रध्वस्ततया मृत्युरूपत्वात्। तथा चाशनायाया बलत्वमत्र प्रतिपादितम्। अशनस्येच्छा अशनाया– इति इच्छारूपैव सा। सेयमिच्छा द्विविधा– वासनाक्रान्तमनःसमुत्था, विशुद्धमनः-समुत्था च। तत्र निर्वासनया कृतस्य कर्मणो बन्धनहेतुत्वं नास्ति। अत एवेश्वरस्य सर्गस्थितिप्रलयेच्छासत्त्वेऽपि बन्धनाभावः। जीवानां तु वासना-क्रान्ततया स्वेच्छाकृतकर्मणा जायत एव बन्धः। ये तु ज्ञानेन वैराग्येण योगेन वा निर्वासनाः भवन्ति, तेऽपि न बध्यन्त इति स्फुटं गीतासु।

---

१०. महर्षिकुलवैभवम्–११५ तमे पृष्ठे।

११. महर्षिकुलवैभवम्– पृष्ठ–११६

१२. बृहदारण्यकोपनिषदि – १/२

इदमत्र तात्पर्यम्–दिग्देशकालानवच्छिन्नमनन्तं रसरूपं ब्रह्म यदा मायाबलेन परिच्छिन्नेन ससीमं कृतम्, तदैव पुरुषप्रादुर्भाव इत्यसकृदुक्तम्। पुरुषस्याव्ययस्यैव कला मन इति तस्य परिच्छिन्नत्वं सिद्धमेव। कारणं तु अस्य 'परात्परम्' अपरिच्छिन्नमिति अपरिच्छिन्नान्निष्क्रान्तं परिच्छेद-माप्तमिदम् अपरिच्छिन्नमेव भवितुं यतते। यो हि यस्यांशः स स्वांशिनमेव अवाप्य तद्रूपतया स्थितं निश्चलं भवति– इति नियमोऽयं सर्वत्र दृष्टः। यथा पृथिव्या अंशभूतं लोष्ठप्रस्तरादिकमुपरिक्षिप्तमपि स्वकारणेन पृथिव्या आकृष्यमाणमध एव पतति, तत्रैव च स्थितं शान्तं भवति। यथा वा तेजोघनस्य सूर्यस्यांशभूतं प्रदीपादिकमूर्ध्वमुखमेव सदा विलोक्यते। तद्वदेव परात्परस्य विभोरंशभूतं मन इदं तदभिमुखमेव तद्रूपतया विभुत्वमाप्तुं सततं सन्नद्धम्। तत एव स्वमपरिपूर्णं मन्यमानस्य सर्वमात्मसात्कृत्य विभुत्वमाप्तुमशनाया विजृम्भते।

अनया पारमार्थिक्या दृष्ट्या सर्वमेव मनोऽपरिपूर्णम्, अशनायाक्रान्तं च परिच्छिन्नत्वात्। व्यावहारिकदृष्ट्या तु पूर्णत्वापूर्णत्वाभ्यां द्वैविध्यं तस्य प्रतिपाद्यते ग्रन्थे। यत्रेच्छया 'अर्क'रूपेण मनो यावन्तं विकासमाप्तम्, तावानेव तत्र बलवत्प्राणयोगोऽपि स्यात्, तावतीमेव च वाचं गृहीत्वा प्राणो मनस्युपस्थापयेत्, तदा मनसो विकासमाप्तस्य विकासरूपोंऽशोऽपि प्राणेन वाचा च संभृत इति मनःप्राणवाचां साम्येन पूर्णता जातेति मनः पूर्णमुच्यते। यदा वा प्राणस्य वाचो वा क्वचिदर्पणेन (तपोदानादिना) विस्रंसनान् मनसो रिक्तता (विश्लिष्टांगता) जाता, तदपि यदि तावानेव प्राणः तावत्येव वाक् चान्यतो लभ्यते, तदा विस्रस्तसंभृतानां मनसि प्राणवाचां साम्येनात्मनो विश्लिष्टाङ्गपूर्तेः संभवान्मनः पूर्णमेव।

यदा तु इच्छया (आर्केण) मनसो विकासो जायते, तस्मिंश्च विकासे प्राणो वाग् वा न पर्याप्नुयात्; तदा प्राणवाग्भ्यां रिक्तमिदं मनः अपूर्णम्–इत्युच्यते। यदा वा प्राणस्य वाचो वा व्ययेन (अन्यत्रार्पणेन) रिक्तता जायते, पूर्तिश्च न भवेत्, तदापि मनः अपूर्णमित्युच्यते। यावती इच्छा भवति, तावद्यदि प्राप्यते, यावान् वा व्ययो भवति, तावदेव यदि लभ्यते, तदा मनः पूर्णम्। यदा तु इच्छा अधिका, इष्टं तु न प्राप्यते,

व्ययीकृतं वा न परिपूर्यते, तदा मनः अपूर्णमिति सारः। अत्र दृष्टान्तः **"उत्पद्यन्ते विलीयन्ते दरिद्राणां मनोरथाः"** इति। प्रकृतशास्त्रेऽपि– **"यथा विशिष्टां सम्पदमाकाङ्क्षमाणानामसमर्थानां दरिद्राणां मनः।"**[१३] इति।

अत्र शङ्कते– मनः प्राण वाचामन्योन्यभविनाकृतत्वं पूर्वमुक्तम्, इदानीन्तु मनसो प्राणवाग्भ्यां रिक्तत्वमुच्यते– इति पूर्वापरविरोध आपततीति। अत्र समाधीयते– द्विविधो हि प्राणः, द्विविधा च वाक्, पूर्वं प्रतिपादिता, तत् स्मर्तव्यम्। अन्तर्यामसम्बन्धेन मनसा नित्यसम्बद्धौ वाक्प्राणौ आत्मभूतौ तयोर्नाभावः कदापि भवति। यदि अयं प्राणो न स्यात्, तर्हि मनसः स्वयमक्रियत्वात् तस्योत्थानम् एव कथं स्यात्? आत्मभूतप्राणसम्बन्धादेवोत्थानम्। यदि च तत्रात्मभूता वाङ् न स्यात्, तर्हि वाचम् (सम्पत्तिम्) विषयीकुर्वाणा इच्छैव कथमुदयेत्? मनसि वाग्योग एवेच्छेति वक्ष्यते। तस्मात्तयोर्नित्यः सम्बन्धः। यौ तु अर्काशीतिपदवाच्यौ वाक्प्राणौ प्रतिपादितौ तयोर्बहिर्याम-सम्बन्धः, स चानित्यः। मनसः प्रेरणया योऽयमर्क उत्तिष्ठते, तस्मिन् वाग्ग्रहणाय यदि बलं न स्यात्, तदा न स मनोविकासमनुधावितुं प्रभवेत्। अशनग्रहणायापेक्षितस्य बहिर्यामप्राणस्य बलं विज्ञानाल्पतया कर्मदोषेण वाऽल्पं भवति, तदा स नाशितिं वाचं गृहीतुं समर्थो भवति। एवं च यावानस्य मनसोऽन्तर्यामस्थः प्राणः, यावती चास्येच्छाविषयभूता (बुद्धिमयी) वाक्, तुदभयसाम्येनार्काशीतिलाभो नास्तीति वैषम्यं दुःखापादकं भवति। उभयोरन्तरसत्त्वात्, अन्तरस्य च दुःखापादकतया श्रुतिषु श्रुतत्वात्। ततश्चेयं सवासनेच्छा दुःखमयी भवत्यल्पप्राणस्येति सिद्धम्।

यदपूर्णं रिक्तोदरं लघुत्वाद् विचलितप्रायं विरिष्यमाणम्, तदर्चदचरत्। तस्मादर्को नाम। अर्चनम्-आराधनम्, साधनम्, सम्पादनम्,-अशितिग्रहणाय बलग्रहणमिति यावत्। एतेन प्राणसम्पत्तिराख्याता।

सोऽयं प्राणो यावतीमशितिं गृह्णाति तावतीमुक्थ आत्मनि बहिर्याम-सम्बन्धेन संयोजयति। तदित्थम्– आत्मा, प्राणः, पशुः– इति त्रिवृद्रूपं यत्सत्यं व्याख्यातं तदिदानीम्– 'प्रजा', 'वित्तम्', इत्युभयं संयोज्य पञ्चकलात्मरूपं धत्ते। अशितिरूपेणाहृताया वाचः, प्रजारूपेण वित्तरूपेण

---

१३. महर्षिकुलवैभवम्-११९ तमे पृष्ठे।

वा स्थितत्वात्। आत्मा, प्राणा:, पशव:, प्रजा, वित्तम्- इति पञ्चकला:। एतावती खल्वात्मनो व्याप्ति:। इदानीमात्मभूतेषु प्रजावित्तादिषु यदि किञ्चिद् दैवादपरस्यात्मन आक्रमणाद्वा च्यवते, तदात्मा स्वं रिक्तं मन्यमानो दु:ख्यति। रिक्ततायाः पूरणार्थं च यतते 'पुनरर्कमतिशये प्रयोजयतीति सततमयं क्रमोऽनुवर्तते। यावानात्मा (आत्मतां गतं वित्तपर्यन्तम्) तत्सर्वमुक्थरूपम्। पुनस्तत्रापरेच्छा, अपरोऽर्क इति। उत्थानम्, विकासाप्ति:, प्राणप्रेरणम् बलग्रहणं चेति सर्वमपीच्छापदार्थ एवान्तर्भवति। तस्माद् बलग्रहणरूपस्यार्क-स्याप्यत्रेच्छात्वमुक्तम्। मन:प्राणवाचामविनाभावाच्चायं व्यवहार:। विभागे तु मनसीच्छा, प्राणे च बलग्रहणात्मकं तप: प्रयत्नमिति प्रस्मर्तव्यम्।

**"वाचोऽर्थस्य मानसं रूपं काम:। यावान् वा प्राणेन मनसि वाचो भोग:, स काम:। वाचोऽयमर्क उत्तिष्ठन्निच्छा भवति। तमर्थं जानान: कामयमान एवेच्छति- इत्युक्त: काम:।"**[१४]

अर्थात् मनश्च यानर्थान् स्पृशति, तदाकारतामाप्य संस्काररूपेण स्वस्मिन् तान् संनिवेशयति। इदमेव मानसं जगदित्युच्यते। इदमेव वासना-शब्दार्थतया कामशब्दार्थतया चोच्यते।

योऽर्थो वासनारूपेण मानसे जगति स्थित: तस्यैवेच्छापि जायते। अज्ञाते विषय इच्छाया अनुदयात्। यथोक्तं न्यायसिद्धान्तमुक्तावल्याम्- **"ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्।"**[१५] इति।

वस्तुतस्तु मनसि स्थिता अन्तर्जगद्रूपेण व्याख्याता वागेवार्कमुत्था-पयतीति वागजन्यत्वमपि तत्र बोध्यम्।

मनोवृत्ति: काम: स्पष्टीकृत:, प्राणवृत्तिस्तप इदानीं व्याख्यायते- प्राणवृत्तिं तप: प्रयत्न एवेति निष्कर्ष:।

**द्वितीयं तप: निरूपणम्-** कथं प्रयत्ने तप: शब्दस्य संगतिरित्यत आह- "मनोर्काहतकायाग्निसमुत्थापितप्राणप्रक्षोभस्तप:।"[१६] अर्थात् मन:

---

१४. महर्षिकुलवैभवम्-१२३ पृष्ठे।

१५. ईशोपनिषद् विज्ञानभाष्ये पृष्ठ-१५२

१६. महर्षिकुलवैभवम्-१२३ तमे पृष्ठे।

प्रेरणयोत्तिष्ठमानोर्क: कायस्थितं वैश्वानराग्निमाहन्ति। स च कायाग्नि: प्राणे क्षोभमुत्पादयति। तदेतदुक्तं शब्दोत्पत्तिनिरूपणे–

**"मन: कायाग्निमाहन्ति स प्रेरयति मारुतम्।"**[१७] **इति।**

तथा चाग्निसम्बन्धात् तप:शब्दार्थ आञ्जस्येनात्रोपपद्यत इति भाव:। यद्यपि मन: प्राणवाचामादिसृष्टौ नास्ति काय:, न वा कायाग्नि:, सर्वस्याप्युत्तरकाल उपत्स्यमानत्वात्। तथापि इदानीन्तने प्रयत्ने यदाग्नि-सम्बन्धात्तप: शब्द उपपद्यते, तदा आदिभूते प्रयत्नेऽपि तच्छब्दप्रयोगो नानुपपन्न:; प्रयत्नत्वसामान्यात्। आदिभूतव्यापारेषु परोक्षेषु वाङ्मनसातीतेषु दृश्यजगत्साम्येनैव शब्दानां प्रयोगादिति। इदं प्राणनिष्ठं तप: प्राणयोगाद् वाच्यपि संक्राम्यतीत्याह– वाचस्तप इति।

एवंविधे शब्दार्थे श्रुति: प्रमाणयति– उक्तं हि यथा मैत्रायण्याम्– **"प्रजापति: प्रजा असृजत्। ता वै तपसैवाऽसृजत्। स वै स वाचमेवायच्छत्। तपो वा एष उपैति यो वाचं यच्छति। सृष्टि: प्रजानामग्निहोत्रम्। उभयत एव प्रजा: सृजते–इतश्चामुतश्चेति।"**[१८] अपि च तत्रैव श्रूयते– **"तपसो वैता: प्रजा: प्राजायन्त। तपस्त्वं वा एतद् गच्छति, यच्छृतत्वं गच्छति। तत: प्रजायते इति।"**[१९]

अर्थात् अग्निहोत्रकाले वाग्यमनं कर्त्तव्यमिति विधिमुपपादयितुं श्रुतिरेषा प्रवृत्ता। अग्निहोत्रमेव प्रजासृष्टि:, अग्नौ सोमाहुत्यैव सर्वासां प्रजानां जननात्। तस्मात् प्रजासृष्टौ यथा प्रजापतिना वाग्यमनं कृतम्, तथा प्रजा: सृजता अग्निहोत्रकृताऽपि कर्त्तव्यम्। तथा सति अग्निहोत्रेण, वाग्यमनेन चोभयथापि प्रजासृष्टि: सम्पत्स्यत इति। अत्र वाग्यमनमिति वाच्यपि तप: सम्बन्ध उक्त:।

वाजसनेयश्रुतौ अपां पृथिवीभावपर्यन्तमष्टाववस्था उक्ता:। सृतत्वमग्निसंयोग:। अत्र तप:स्वरूपं फेनदृष्टान्तेन श्रूयते– **"एतद्वै फेनस्तप्यते**

---

१७. पाणिनीयशिक्षायाम्– षष्ठतम: श्लोक:।

१८. मैत्रायण्याम् – १/८/४

१९. मैत्रायण्याम् – १/१०/६

**यदप्स्वावेष्टमानः प्लवते। स यदोपहन्यते, मृदेव भवति।"**[२०]

वाजसनेयशाखायाः शतपथब्राह्मणे फेनदृष्टान्तेन तपोनिरुक्तिमाह– एतद्वै फेनस्तप्यते। अपाम् अष्टौ अवस्थाः यथा– आपः, फेनः, मृत्स्ना, सिकता, शर्करा, अश्मा, अयः, हिरण्यम् इति। तत्र जलस्य विरलावयवतया तन्मध्ये वायुः काले काले प्रविशति, प्रविश्य च क्षणेन निष्क्राम्यति। यदा तु वायुकृतात् क्षोभादुत्थितं जलमभितः स्तरभावमाप्नुवद् वायुं निष्क्रमणाद्वारयति, तदा मध्ये वायुरभितश्च जलस्तर इति बुद्बुदं भवति। तज्जले प्रतरति, क्षणानन्तरं च वायुर्बलेन निष्क्राम्यतीति तद् निलीयते। यदा तु जलस्या-वयवाधिक्यात् स्तराद्दाढर्येन न निष्क्रमितुं प्रभवति चिरं वायुः, तदा परस्परं संघर्षादुभयं स्वस्वरूपं परित्यजत् फेनरूपतामापद्यते। इदं जलस्य तपः। इदानीं फेनो जले प्रस्तरँस्तपति-प्लवनमेव तस्य तप इति स्पष्टीकृतम्।

तैत्तिरीयकेऽपि कद्रुसुपर्णाख्याने तपशब्दार्थः श्रूयते– **"एतत् खलु वाव तप इत्याहुर्यः स्वं ददाति"**– इति।[२१]

अत्र स्वं ददाति– स्वीयमंशम्- आत्मांशम्- अन्यत्रार्पयतीति तदेव तप उच्यते। एतस्याः श्रुतेस्तात्पर्यमिदं यत् अवयवस्य-अंशस्य पृथक्करणमवखण्डनमुच्यते। तदेव अवोपसर्गविलोपे दानमित्युच्यते। दानेऽपि आत्मनोंशस्य खण्डनमेव भवति, वित्तपर्यन्तमात्मव्याप्तेरुक्तत्वात्- वित्त-पृथक्करणेऽप्यात्मनोऽवदानस्य सुस्पष्टं जायमानत्वात् एतद्दानमवदानमित्युच्यते। एतस्य अंशस्य ताण्ड्यमहाब्राह्मणश्रुत्या प्रमाणीक्रियते–

**"आत्मदक्षिणं वा एतद् यत्सत्रम्। यदा वै पुरुष आत्मनोऽवद्यति, यं कामयते, तमभ्यश्नुते।"** इति।[२२]

अर्थात् यज्ञे यजमानस्यात्मैव दक्षिणात्वेन दीयते, वित्तस्यात्मत्वात्। आत्मनोऽवदानेन (अवखण्डनेन) एव हेतुना यज्ञेऽभीप्सितस्य कामस्याप्ति-रिति श्रुत्युक्त्यर्थः।

---

२०. श.प.ब्रा.–६/१/३/४

२१. तैत्तिरीयसंहितायाम्–६/१/६/३

२२. ताण्ड्यमहाब्राह्मणे – ४/९/२०

छान्दोग्योपनिषदि गृहस्थाद्याश्रमत्रयं प्रतिपादयता भगवता वेदपुरुषेणोक्तम्–"**त्रयो धर्मस्कन्धाः- यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः-ब्रह्मचार्याचार्यकुलवासी, तृतीयोत्यन्तमात्मानमाचार्यकुलेऽवसादयन्–।**"[२३] अत्र यज्ञाध्ययनदानानि (प्रथमस्य) गृहस्थस्य, तपश्च उपकुर्वाणस्य (द्वितीयस्य) ब्रह्मचारिणः, (तृतीयस्य) नैष्ठिकब्रह्मचारिणश्च धर्मतयोक्तानि। तत्र श्रुताः सर्वेऽप्येते धर्माः तपस्येवान्तर्भवन्तीति बोध्यम्, आत्मावदानस्य सर्वत्रापि दृश्यमानत्वात्। तदेवोपपाद्यते यज्ञेन हि यजमानस्यात्मनि दैव आत्मा उत्पाद्यते, यमतिशयपदेन अपूर्वपदेन च व्याहरन्ति तार्किकमीमांसकाद्याः। प्राज्ञात्मनोंश एव संस्कृत्य दैवात्मनां प्राप्यते स च दैव इति दिव्यैः– द्युलोकस्थैर्देवैः संबध्यते। तदाकर्षणादेव यजमानः स्वर्गम् (देवभावम्) गच्छतीति आत्मनोंशस्य देवेभ्यः समर्पणाद्यज्ञस्य तपस्त्वम्। अत्र साक्षादेवात्मा अवद्यत इति मुख्यमिदं तपः।

आत्मावदानस्यात्रापरः प्रकारो विधीयते– भोजनपरित्यागः। अत्र ध्याने मनसोंऽश ईश्वरे देवादिषु वा समर्प्यत इति स्फुटमात्मावदानम्। अनशनेऽपि शरीरं कार्श्यमायाति- मांसरुधिरादिकं शुष्यति। "**नासतो विद्यते भावो नाभावो विद्यते सतः।**"[२४]

इति निश्चितात् सिद्धान्तात् तपस्विनः शरीरस्य मांसरुधिराद्या अपि नैकान्ततो विलीयन्ते, किन्तु स्थानान्तरमवस्थान्तरं वा गच्छन्ति। यथेह शुष्यत् कुल्याजलं वाष्परूपेणान्यत्र भवति, न विलुप्यते, तथैव सर्वत्रानुसन्धेयम्।

तथा चात्मनः शरीरस्यावदानं परत्रार्पणं च सिद्धमेव। किं च अस्मदीयमन्त्रादिकं न यदा वयं भुञ्ज्महे, तदान्ये तु भुञ्जन्ते इत्येवं स्वात्मभूतस्यान्नादेः परत्रार्पणं सिद्ध्यत्येव। अत्र तपसि शरीरावदानमिति यज्ञापेक्षया बहिरङ्गमपीदं वित्तदानापेक्षयान्तरङ्गमेवेत्युक्तं प्राक्; तस्मादुभयत्रान्तरङ्गाणामंशानामवदानमुक्तम्।

दाने तु वित्तभूतानामन्नादीनां बहिरङ्गाणामवदानं स्पष्टमेव अनेनान्तरङ्गभावेनैवात्र पृथक्-पृथक् शब्दाः प्रवर्तन्ते, अवदानेन तपस्त्वं तु

२३. छान्दोग्योपनिषदि–२/२३

२४. गीता – २/१६

सर्वत्रैव समानमिति। धर्म्ये प्रजोत्पादनेऽपि आत्मनोंशस्य शुक्रस्यावदानमस्त्येवेति तदपि तप इत्युक्तम्। भगवता मनुनापि **"ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रस्य रक्षणम्।"**[२५] इत्यादिना वर्णधर्माणां रक्षणाध्ययनादीनां तपस्त्वमुक्तम्। तत्रापि श्रमेणात्मावदानसत्वादनयैव रीत्या तदुपपाद्यम्।

यथेदानीं तपसा– आत्मावदानेन प्रजा उत्पाद्यते, तथा पूर्वमपि प्रजापतिना तपसैव प्रजा उत्पादिता अनुमातव्या इत्यप्याशयोऽत्र बोध्यः। तथैवाध्ययनमपि–इन्द्रियाणां शरीरस्य च शोषणादात्मावदानमिति तपस्त्वान्नाति-रिच्यते।

**तृतीयं श्रम-निरूपणम्–** अत्राप्युपाधित्वं पूर्ववदेवानुसन्धेयम्। प्राण एव चोपलक्षणं मनसोऽपि। वाचोऽपि मनः प्राणाभ्यामविनाभूतत्वात्। श्रमे वाचः अन्यस्यां वाच्येव वृत्तिः व्यापारो भवति, यथा कश्चिद् भारवाहको भारभूतानामन्नादिवाचं शरीररूपायां वाचि संयोज्य व्याप्रियते। यथा वा कश्चिद् यानपरिचालकः शरीरभूतां वाचं यानरूपायां वाचि व्यापारयति, तदेतत् सर्वं श्रम एवोच्यते।

तथा च यथा इदानीं घट-पट-कुड्यादिरूपस्याभिनवस्यार्थस्य रसरूपतां-पृथक्तन्त्रप्रवर्तकताम्-अभिनवपदार्थरूपताम् आपाद्यमानस्योत्पत्तौ क्रमेण इच्छा तपः श्रमाः हेतवो भवन्ति; पूर्वं कुलालादिरिच्छति, ततः प्रायेण प्रयतते, ततो वाचि वाचं संयोज्य (तत्तदर्थानामवयवभूतानां चयनेन) नवपदार्थमुत्पादयति, तथैव प्रजापतेरादिसृष्टिरपि इच्छातपः श्रमजन्येति भाव्यम्। इदानीमपि यथा मनुष्यादिकृता सृष्टिरिच्छादिपूर्विका, तथा मनुष्यादि-व्यापारमन्तरेणापि प्रवर्त्तमाना घास-गैरिक-लोह-फेनादिसृष्टिरिच्छा-तपः श्रमपूर्विकैव द्रष्टव्या, तुल्यन्यायादिति। कामेन तपः प्रवृत्तिः, तपसा च श्रमः, ततः सर्ग इति।

ननु चेतनेषु भवतु नाम इच्छादिक्रमः, जड़ेषु तु कथं तत्संभव इति चेन्नैवं भ्रमितव्यम्। मनोमयस्य प्राणमयस्य वाङ्मयस्य चात्मनो व्यापकताया उक्तत्वात्। सर्वस्मिन्नेव पदार्थे त्रिरूपोऽयमात्मा भवति,

---

२५. मनुस्मृतौ - ११/२३५

आत्मानमन्तरेण कस्याप्यर्थस्य सत्तानुपपत्तेः। किं मूलकस्तर्हि जड़चेतन व्यवहार इति चेदुच्यते–**"सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्।"**[२६] इति चरके समीहितमिदम्। आत्मनः सर्वत्र सत्त्वेऽपि यत्रेन्द्रिय-विकासः, तच्चेतनमुच्यते; यत्र तु नेन्द्रियाणां चक्षुरादीनां विकासः स जड़ उच्यते। तस्मादिन्द्रियभावाभावकृतः एव चेतनजडव्यवहारो नात्मभावाभावकृतः। आत्मनः सर्वत्र सत्त्वात्। अत एव जडानां काष्ठगोमयाद्यवयवानां रूपान्तरेण परिणतौ घुणवृश्चिकादिरूपतायाम्, इन्द्रियविकासे त एव चेतना व्यवह्रियन्ते। प्राणिशरीरेभ्यश्चेन्द्रियाणां निष्क्रमणे मृतानि शरीराणि जडत्वमापद्यन्त इति सुस्पष्टमिदं समीक्षाचणानाम्। तस्माच्छ्रौते दर्शने सर्वत्रैवात्मा व्यापकः, सर्वत्रैव मनः प्राणवाचः, सर्वत्रैव च व्याख्याता वैज्ञानिका इच्छातपः श्रमाः इति भाव्यम्। यदस्माभिः 'मनः' इति परिचीयते, तत्तु इन्द्रियतया निरिन्द्रियेषु जडेषु न भवति, अस्मत् परिचितः श्वासादिपरिचालकः प्राणोऽपि जडेषु न भवति, इन्द्रियरूपा वागपि न भवति, तस्मादस्मत् परिचिता इच्छातपः श्रमाः अपि न तत्र सम्भवन्ति। परन्तु एतानि वाक्प्राणमनांसि येषां मूलतत्त्वानामवस्थाभूतानि तानि मूलतत्त्वानि तु सर्वत्र व्याप्नुवन्त्येवेति तद्वृत्तिभूता वैज्ञानिका उक्तनिर्वचना इच्छातपः श्रमाः सर्वत्रैव सम्भवन्तीति प्राक्तनैः अस्मदीयैः पूर्वाचार्यैः त्रिगुणात्मिकया दृष्ट्या सम्यक् प्रतिपादितम् अस्माभिश्च तानि प्रतिपादितानि सिद्धान्तानि सूक्ष्मया दृशाऽऽलोचनीयमिति।

---

२६. चरकसंहितायाम्–सूत्र-दी.अ.४८ तमः श्लोक १

## तृतीयोऽध्यायः

# वैदिकऋषीणां तात्त्विकी दृष्टिः

सामान्यतः तात्त्विकं यद्ज्ञानं तत्तत्त्वज्ञानमिति कथ्यते। किन्त्वत्र विचारणीयं खलु यद्वैदिककवीनां सामान्यज्ञानापेक्षया किमधिकं वैशिष्ट्यं तत्त्वज्ञानमभिदधाति। यतो हि तत्त्वज्ञानमिति शब्दश्रवणात् ज्ञानस्य वैविध्यमभिलक्ष्यते। तेन भासते यत् सामान्य-विशेषविधया ज्ञानं द्विविधम्। वस्तुतः अस्याशयस्य स्पष्टीकरणमुपनिषत्स्वपि दृश्यते। यथा गीतोपनिषदि भगवता श्रीकृष्णेनोक्तम्–

**"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।"[1]**

श्लोकस्यास्य व्याख्यानं कुर्वद्भिः भगवद्भिः श्रीशङ्कराचार्यपादैः "विज्ञानसहितं स्वानुभवसंयुक्तम्" इति शब्दार्थरूपं प्रदर्शितम्। अमरकोषे तु अस्यातिनिपुणतया प्रतिपादनमस्ति–

**"मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः।"[2]**

अत्र शिल्पशास्त्रादिकं विज्ञानशब्दार्थतया परिगृहीतम्। आधुनिकास्तु विद्वांसः पाश्चात्यभाषायाः साइन्स्पदसमानार्थकं विज्ञानपदं प्रयुञ्जन्ति। तत्किमेवं विज्ञानपदमनेकार्थकमेव, उतास्ति काचिदेका सर्वानुगता परिभाषेति? विषयेऽस्मिन् वैदिकविज्ञानमर्मज्ञाः विपश्चितो मनीषिणो विद्यावाचस्पति पं. मधुसूदनओझावर्या एवं कथयन्ति यत्–

**"विभिन्नं वस्तुजातमभिलक्ष्यीकृत्य मूलान्वेषणक्रमेणैकतत्त्व-पर्यन्तं गतिर्ज्ञानम्। एकं तत्त्वं निरूढं मत्वा क्रमेण तस्यानन्तरूपता-**

---

१. श्रीमद्भगवद्गीतायाम्–७/२

२. अमरकोषे–धीवर्गे–५/६

**प्रतिपत्तिर्विज्ञानम्। विशिष्टं ज्ञानं हि विज्ञानम्, विविधं ज्ञानम्, विभेदेन ज्ञानं वा विज्ञानमिति॥"**[3]

तत्रेयं ज्ञानप्रक्रिया– प्रत्यक्षादिप्रमाणसिद्धमिदं जगदेव तावदा-लोच्यताम्। तत्र जाताः पदार्थाः यर्हि जानन्ति, चेष्टन्ते च तर्हि जीवा इति प्राणिन इति वा व्यपदिश्यन्ते। तर्हि तेषु जीवः प्राणो वेन्द्रियगोचरः। ज्ञानचेष्टाभ्यां त्वसौ केवलमनुमीयते। विनष्टज्ञानचेष्टं जन्मनैव वाऽप्रकट-ज्ञानचेष्टं तु यथाक्रमं शव इति जड इति च व्याहरन्ति लोकाः। हिताहित-प्राप्तिपरिहारार्थं कर्मैव चेष्टामुदीरयन्ति विद्वांसः। तदेवं निर्गलितोऽर्थो यज्ज्ञानकर्मणी एव जीवतां जीवनस्य लक्षणम्। तत्र ज्ञानकर्ममयस्यास्य जीववर्गस्य यः प्रभवः सोऽपि ज्ञानकर्मरूप एव स्यात्, कार्यकारणयोः सारूप्यात्, कारणगुणाः कार्यगुणान् आरभन्त इति न्यायाच्च।

अत्रेदमाशङ्क्यते– यत्र ज्ञानं कर्म चेत्युभयं प्रमाणसिद्धं तेषां मनुष्य–पशु–पक्षि–कृमि–कीटादीनां ससंज्ञानां वृक्ष–लता–गुल्मादीनामन्तःसंज्ञानां च ज्ञानकर्मात्मकारणकत्वं शक्यमनुमातुम्, क्षित्यादयः पुनर्नितान्तमसंज्ञा अचेतना जडाः कस्मादुत्पद्यन्ते? किं तेषां ससंज्ञान्तःसंज्ञसृष्टिकारणात् भिन्नमेव किञ्चित् कारणम्? अत्रेदमुत्तरम्– ससंज्ञान्तःसंज्ञसृष्ट्योरिवासंज्ञ-सृष्टेरपि तदेव ज्ञानकर्मात्मकं कारणम्, नान्यत् किञ्चित्। ये यावन्तश्च कारणगुणास्ते सर्वेऽपि गुणाः सर्वात्मना पुत्रे दुहितरि वाऽनुवर्तन्ते। क्षित्यादिषु नितान्तमप्रस्फुटेऽपि ज्ञाने केन वा सूक्ष्मेक्षिकाविचक्षणेन नाध्यक्षीक्रियन्त उत्पत्तिस्थितिविपरिणतिवृद्धि–क्षिति–विनष्टयः कर्मापरपर्यायाः षड्भावविकाराः। किञ्च तस्या एव क्षितेरवयवान्मृदो जलक्लिन्नाया अचिरादेव ससंज्ञानां कृमिकीटादीनां प्रादुर्भावः किं नावलोक्यते? अन्तःसंज्ञानां वृक्षलतादीनान्तु तत उद्भवः स्पष्ट एव। तस्मादस्फुटचैतन्या भवन्तु क्षित्यादयः, सर्वथा अचेतनस्तु तेऽपि न वक्तुं शक्याः। तथा चेयं सर्वापि सृष्टिर्ज्ञानकर्मात्मन एव कस्माच्चित् कारणादुत्पन्नेति निश्चप्रचम्।

नन्वेवं मा भूत् क्षित्यादिषु ज्ञानस्य विकासः। तथापि ज्ञानकर्मात्मनः कारणात् समुद्भूतानां तेषां ज्ञानकर्ममयत्वाच्चेतनत्वं प्राप्तम्– इति कथमचे-

---

३. महर्षिकुलवैभवम्–उपोद्घाते– पृष्ठ–३

तनानि तानि? निर्विषयश्चैवमयमचेतनपदप्रयोगः स्यात्, कारणस्य कार्येऽनुस्यूतत्वात् ज्ञानकर्मशून्यस्यार्थस्यात्यन्तमभावात्। न ह्यविकसदवस्थं नास्तीति शक्यमुद्घोषयितुम्, बीजादिष्वविकसदवस्थस्यापि वृक्षादेः सत्त्वस्य दार्शनिकमूर्धन्यैरभ्युपगमाद् इति चेत्, अत्रैवाहुः **प्राञ्चो महामुनयः–** न ह्ययं पदार्थानां चेतनाचेतनत्वव्यपदेशो ज्ञानकर्ममयत्वस्वीकारात्, किन्तु सेन्द्रियनिरिन्द्रियत्वमूलः। केचित् सेन्द्रियाः पदार्थाः, अपरे निरिन्द्रियाः। ये न्यूनाधिकभावेन सेन्द्रियास्ते मनुष्यपशुपक्ष्यादयस्तरुलतागुल्मादयश्च चेतना अर्धचेतना वा व्यपदिश्यन्ते। ये पुनर्निरिन्द्रिया भावाः क्षित्यादयस्ते जडा इत्यचेतना इति च प्रथन्ते। तदुक्तं चरके–

**"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।**
**सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्॥"**[४]

तदित्थं सर्वप्रजाकारणभूतस्य सर्वप्रजात्मभूततया परात्मपदव्यपदेश्यस्य ज्ञानकर्मात्मनः प्रजापतेरंशभूतयोरनयोर्ज्ञानमेकरसं स्थिरं प्रशान्तं न कदाचिदपि विपरिवर्तते। ज्ञानस्यैकरसत्वमिदं **विद्यारण्यस्वामिना** पञ्चदश्यास्तत्त्वविवेकाध्याये युक्त्या स्थापितम्। तदुक्तं तत्र–

**"शब्दस्पर्शादयो वेद्या वैचित्र्याज्जागरे पृथक्।**
**ततो विभक्ता तत् सांवदैकरूप्यान्न भिद्यते॥**
**तथा स्वप्नोऽत्रवेद्यन्तु न स्थिरं जागरे स्थिरम्।**
**तद्भेदोऽतस्तयोः संविदेकरूपा न भिद्यते॥**
**सुप्तोत्थितस्य सौषुप्ततमो बोधो भवेत् स्मृतिः।**
**सा चावबुद्धविषयाऽवबुद्धं तत्तदा तमः॥**
**स बोधो विषयाद् भिन्नो न बोधाद् स्वप्नबोधवत्।**
**एवं स्थात्रयेऽप्येका संवित् तद्वद् दिनान्तरे॥**
**मासाब्दयुगकल्पेषु गतागम्येष्वनेकधा।**
**नोदेति नास्तमेत्येका संविदेषा स्वयंप्रभा॥** इति।"[५]

---

४. चरकसंहितायाम्–(सूत्र-दी.अ-४८ श्लोके)
५. पञ्चदश्याम्-तत्त्वविवेकाध्याये

कर्म पुनस्तद्विपरीतमनेकविधमस्थिरमप्रशान्तं सर्वदा विपरिवर्तते। एकत्वाद् एकरसत्वाद् स्थिरत्वादेवेदं ज्ञानममृतं सदिति चोच्यते। अनेकत्वाद् अनेकविधत्वाद् अस्थिरत्वाच्चेदं कर्म मर्त्यं मृत्युरसदिति चाभिलप्यते। तदुक्तं शतपथश्रुतौ दशमे काण्डे–"**अर्धं ह वै प्रजापतेरात्मनो मर्त्यमासीद्, अर्धममृतम्**"[६] इति। श्रीमद्भगवद्गीतायामपि–

**"अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन।"**[७]

इत्येवमहंपदबोध्यस्य परमात्मनः सदसदात्मकत्वम् अमृतमृतात्मकत्वं च प्रतिपादितम्। किञ्चेमे ज्ञानकर्मणी निरुक्तया दिशा स्वभावतः पृथग्भूते अपि अन्योऽन्यमोतप्रोते, नानयोरन्येन विनाऽन्यदवतिष्ठते। इमे एव ज्ञानकर्मणी आगमशास्त्रेषु शिवशक्तीत्युच्येते। ज्ञानं शिवः कर्म च तच्छक्तिः। शक्तिशक्तिमतोश्चाविनाभावः। अत एव श्रुतावनयोरन्तरान्तरीभावः श्रूयते–

**"अन्तरं मृत्योरमृतं मृत्यावमृतमाहितम्।"** इति[८]

तदेवमन्योन्यमोतप्रोतयोरन्तरान्तरीभावमापन्नयोरविनाभूतयोर्द्वयोरपि शक्यमेकत्वमास्थातुम्। एकस्मादेव च तस्माज्ज्ञानकर्ममयात् परमात्मनोऽस्य सर्वस्य चेतनाचेतनप्रपञ्चस्य समुद्भवः। तदुक्तम् ऋषिणा ऋक्संहितायाम्–

**"एकं वा इदं वि बभूव सर्वम्।** इति।"[९]

अयमेव सर्वजगत्कारणभूतो ज्ञानकर्ममयः परात्मा पुरुष इत्यपि व्यपदिश्यते। पुरि शयनादेवास्य पुरुषत्वम्। सेन्द्रियाः निरिन्द्रियाश्चेमाः सर्वाः प्रजालोकापरपर्यायाः पूरित्याख्यायन्ते। तासामभिन्ननिमित्तोपादानतया तत्रैव शयानस्यास्य पुरुषपदवाच्यता। तदुक्तं शतपथश्रुतौ–

**"स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयः।"**

**"सोऽयं पुरि शेते तस्मात् पुरुषः।"**[१०]

---

६. श.प.ब्रा. – १०/१/१/३

७. श्रीमद्भगवद्गीतायाम् ९/१९

८. श.प.ब्राह्मणे–१०/५/२/४

९. ऋग्वेदे ८/५८/२

१०. श.प.ब्रा. १४/५/५/१८

विज्ञानजीवातुभूता प्राकृतयज्ञपरता तु समुपेक्षितैव। प्राकृतेन यज्ञेनैव जगदुत्पत्ति-स्थिती स्तः इति। तं प्राकृतं यज्ञमुपजीव्यैवास्माकं प्रातिस्विकी यज्ञक्रिया प्रचलति। तयोः परस्परं सम्बन्धोऽपि वेदेषु संकेतितः। परं न स भाष्येषु स्पष्टीक्रियते।

किञ्चाध्यात्ममधिभूतमधिदैवतं च ये देवपित्राद्याः, तेषां विवेकोऽपि भाष्येषु नोपलभ्यते। तत एवैकस्य धर्मा अपरसम्बन्धित्वेन प्रतिसंधीयमाना बुद्धिं विप्लावयन्तीव। तस्मिन् काले तस्या विद्यायाः सर्वथाऽभाव एवात्राऽपराध्यति, न तु तत्र भाष्यकृतां कोऽपि दोषः। ग्रन्थकर्तृभिः किल लोकरुचिरप्यवश्यमनुसरणीया भवति, ग्रन्थप्रचार एवान्यथा न सम्पद्येतेति। कर्ममात्रे बद्धश्रद्धास्तदा लोका इति कर्मोपयुक्त एवार्थः प्राधान्येन भाष्येषु प्रतिपादितोऽभूत्। उपपत्तिनिरूपणन्तु विस्तरायामन्यत। तदेतद् भाष्यकृता श्रीसायणाचार्येण ऋक्संहितायाः प्रथमे मन्त्रे नैरुक्तादि प्रक्रियां प्रदर्श्य स्पष्टमुक्तम्—

**"वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः।**
**विज्ञातं वेदगाम्भीर्यं संक्षेपादधुनोच्यते।।"** इति।

वेदार्थस्तु दूरे आस्ताम्, वैदिकीं शैलीमनुरुध्य स्मृतिषु, सूत्रेषु पुराणेतिहासेष्वपि च यदुपदिष्टम्, तस्यापि मर्मज्ञानं नाममात्रमेव विदुषामर्वा-चीनानाम्। ते शब्दमात्रेणैव परितुष्यन्तो नानुभवपथिकतां तं तमर्थं नेतुमुत्सुका बभूवुः।

किञ्चिन्निदर्शनमत्र समुपस्थाप्यते चेन्मन्ये नाऽनुचितं स्यात्। इदं तु स्मर्तव्यम् यत् परममान्येषु गुरुतमेषु महानुभावेषु आचार्येषु ग्रन्थकृत्सु च मनागपि कटाक्षनिक्षेपेण नात्मानं पङ्के पातयितुं लेशतोऽप्यभिकाङ्क्षे, केवलं विज्ञानदुरवस्थामेव बोधयितुमेतानि निदर्शनानि।

**विज्ञानस्य भारते दुरवस्था–**

विज्ञानस्य भारते दुरवस्थेति शीर्षकमादाय महर्षिकुलवैभवम् इति मधुसूदनओझाविरचितग्रन्थस्य भूमिकायां गिरिधरशर्मणा ये विचाराः प्रकटितास्तेऽत्र यथारूपेणोपस्थाप्यते—वेदभाष्यकृत्सु मूर्धन्यौ श्रीसायण-

माधवाचार्यौ। कस्य वा नायमभ्यर्हिततमौ। यद्यसौ नावतरिष्यत् नूनमृक्संहिताद्यत्वे न केनाप्यज्ञास्यत्। परं व्याख्यानेऽस्य वैज्ञानिका- नामर्थानामत्यन्तमुपेक्षा। किमन्यत् "विष्णुना विधृते भूमी" इति प्रदर्शितपूर्वे स्फुटतर आकर्षणविज्ञानेऽपि **"दाधर्थ पृथिवीमभितो मयूखैः"** इति मन्त्रे मयूखशब्दस्य पर्वतोऽर्थो महानुभावेनानेन कृतः। किरणैः पृथिवीधारणं कथं संभवेदित्येव तस्य संशयोऽभवत्। पर्वतैस्तु तद्धारणं पुराणेषूक्तमिति तदेव तेन व्याख्यातम्।

तथैव "आ कृष्णेन रजसा" इति प्रदर्शितपूर्वे मन्त्रे रजसो लोकस्य कथं कृष्णत्वमिति शंका सूर्योदयात्पूर्वं लोकः कृष्ण एव भवतीति तेन समाहिता। सूर्यमण्डलस्य कृष्णत्वं तु न तद्बुद्धावुपारूढम्। तस्मिन् काले एवंविधानां विज्ञानानामत्यन्ताभाव एवात्र निदानम्। न खल्वश्रुता दृष्टचरेऽर्थे बुद्धिः प्रसरतीति।

प्रथिव्यन्तरिक्षं द्यौरिति क्रमेण व्यपदिष्टेषु त्रिषु लोकेषु अग्निर्वायुरादित्य इति सन्ति त्रयो देवाः प्रधानभूता इति स्पष्टं निरुक्तविदाम्। तेष्वेकैकं प्रधानीकृत्य देवताऽन्तरं च तदङ्गभावमानीय वेदत्रयी क्रमेण प्रवर्त्तते। ऋग्वेदे अग्नेः, यजुर्वेदे वायोः, सामवेदे आदित्यस्य चास्ति प्राधान्येन विज्ञानम्, तदङ्गतया चान्येषाम्। अत एव **"अग्निमीडे पुरोहितम्"**[६८] इति पुरः स्थापितमिममेवाग्निं प्रारम्भे प्रस्तुवती ऋक्संहिता प्रवर्त्तते; **"इषे त्वोर्जे त्वा वायवःस्थ, देवो वः सविता प्रार्पयतु"**[६९] इति वायुं यजुःसंहितोपक्रम एव कीर्त्तयति, **"अग्न आयाहि वीतये"**[७०] इति आगन्तुकमग्निमादित्यं नाम सामवेदसंहिता प्रारम्भ एव प्रस्तौति। इदमेवाभिप्रेत्य "ऋग्वेद एवाग्ने-रजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्" इति ब्राह्मणश्रुतावग्न्यादिभ्य ऋग्वेदादीनामुत्पत्तिराम्नाता, विषयस्य ज्ञानकारणतया निरूढत्वात्। यद्यस्त्यग्निः, तत एव ऋग्वेदो जायते। न भवेच्चेत् कं वर्णयितुमृग्वेदः प्रवर्त्तेतेति तस्य कारणत्वमुपपादयन्ति। अयमेवाभिप्रायो–

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**

---

६८. ऋ. १/१/१

६९. यजु. १/१

७०. सामवेदे-१/१/१

विज्ञानजीवातुभूता प्राकृतयज्ञपरता तु समुपेक्षितैव। प्राकृतेन यज्ञेनैव जगदुत्पत्ति-स्थिती स्तः इति। तं प्राकृतं यज्ञमुपजीव्यैवास्माकं प्रातिस्विकी यज्ञक्रिया प्रचलति। तयोः परस्परं सम्बन्धोऽपि वेदेषु संकेतितः। परं न स भाष्येषु स्पष्टीक्रियते।

किञ्चाध्यात्ममधिभूतमधिदैवतं च ये देवपित्राद्याः, तेषां विवेकोऽपि भाष्येषु नोपलभ्यते। तत एवैकस्य धर्मा अपरसम्बन्धित्वेन प्रतिसंधीयमाना बुद्धिं विप्लावयन्तीव। तस्मिन् काले तस्या विद्यायाः सर्वथाऽभाव एवात्राऽपराध्यति, न तु तत्र भाष्यकृतां कोऽपि दोषः। ग्रन्थकर्तृभिः किल लोकरुचिरप्यवश्यमनुसरणीया भवति, ग्रन्थप्रचार एवान्यथा न सम्पद्येतेति। कर्ममात्रे बद्धश्रद्धास्तदा लोका इति कर्मोपयुक्त एवार्थः प्राधान्येन भाष्येषु प्रतिपादितोऽभूत्। उपपत्तिनिरूपणन्तु विस्तरायामन्यत। तदेतद् भाष्यकृता श्रीसायणाचार्येण ऋक्संहितायाः प्रथमे मन्त्रे नैरुक्तादि प्रक्रियां प्रदर्श्य स्पष्टमुक्तम्–

**"वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः।**
**विज्ञातं वेदगाम्भीर्यं संक्षेपादधुनोच्यते॥"** इति।

वेदार्थस्तु दूरे आस्ताम्, वैदिकीं शैलीमनुरुध्य स्मृतिषु, सूत्रेषु पुराणेतिहासेष्वपि च यदुपदिष्टम्, तस्यापि मर्मज्ञानं नाममात्रमेव विदुषामर्वा-चीनानाम्। ते शब्दमात्रेणैव परितुष्यन्तो नानुभवपथिकतां तं तमर्थं नेतुमुत्सुका बभूवुः।

किञ्चिन्निदर्शनमत्र समुपस्थाप्यते चेन्मन्ये नाऽनुचितं स्यात्। इदं तु स्मर्तव्यम् यत् परममान्येषु गुरुतमेषु महानुभावेषु आचार्येषु ग्रन्थकृत्सु च मनागपि कटाक्षनिक्षेपेण नात्मानं पङ्के पातयितुं लेशतोऽप्यभिकाङ्क्षे, केवलं विज्ञानदुरवस्थामेव बोधयितुमेतानि निदर्शनानि।

**विज्ञानस्य भारते दुरवस्था–**

विज्ञानस्य भारते दुरवस्थेति शीर्षकमादाय महर्षिकुलवैभवम् इति मधुसूदनओझाविरचितग्रन्थस्य भूमिकायां गिरिधरशर्मणा ये विचाराः प्रकटितास्तेऽत्र यथारूपेणोपस्थाप्यते–वेदभाष्यकृत्सु मूर्धन्यौ श्रीसायण-

माधवाचार्यौ। कस्य वा नायमभ्यर्हिततमौ। यद्यसौ नावतरिष्यत् नूनमृक्संहिताद्यत्वे न केनाप्यज्ञास्यत्। परं व्याख्यानेऽस्य वैज्ञानिका- नामर्थानामत्यन्तमुपेक्षा। किमन्यत् "विष्णुना विधृते भूमी" इति प्रदर्शितपूर्वे स्फुटतर आकर्षणविज्ञानेऽपि **"दाधर्थ पृथिवीमभितो मयूखैः"** इति मन्त्रे मयूखशब्दस्य पर्वतोऽर्थो महानुभावेनानेन कृतः। किरणैः पृथिवीधारणं कथं संभवेदित्येव तस्य संशयोऽभवत्। पर्वतैस्तु तद्धारणं पुराणेपूक्तमिति तदेव तेन व्याख्यातम्।

तथैव "आ कृष्णेन रजसा" इति प्रदर्शितपूर्वे मन्त्रे रजसो लोकस्य कथं कृष्णत्वमिति शंका सूर्योदयात्पूर्वं लोकः कृष्ण एव भवतीति तेन समाहिता। सूर्यमण्डलस्य कृष्णत्वं तु न तद्बुद्धावुपारूढम्। तस्मिन् काले एवंविधानां विज्ञानानामत्यन्ताभाव एवात्र निदानम्। न खल्वश्रुता दृष्टचरेऽर्थे बुद्धिः प्रसरतीति।

प्रथिव्यन्तरिक्षं द्यौरिति क्रमेण व्यपदिष्टेषु त्रिषु लोकेषु अग्निर्वायुरादित्य इति सन्ति त्रयो देवाः प्रधानभूता इति स्पष्टं निरुक्तविदाम्। तेष्वेकैकं प्रधानीकृत्य देवताऽन्तरं च तदङ्गभावमानीय वेदत्रयी क्रमेण प्रवर्त्तते। ऋग्वेदे अग्नेः, यजुर्वेदे वायोः, सामवेदे आदित्यस्य चास्ति प्राधान्येन विज्ञानम्, तदङ्गतया चान्येषाम्। अत एव **"अग्निमीडे पुरोहितम्"**[६८] इति पुरः स्थापितमिममेवाग्निं प्रारम्भे प्रस्तुवती ऋक्संहिता प्रवर्त्तते; **"इषे त्वोर्जे त्वा वायवःस्थ, देवो वः सविता प्रार्पयतु"**[६९] इति वायुं यजुःसंहितोपक्रम एव कीर्त्तयति, **"अग्न आयाहि वीतये"**[७०] इति आगन्तुकमग्निमादित्यं नाम सामवेदसंहिता प्रारम्भ एव प्रस्तौति। इदमेवाभिप्रेत्य "ऋग्वेद एवाग्ने-रजायत, यजुर्वेदो वायोः, सामवेद आदित्यात्" इति ब्राह्मणश्रुतावग्न्यादिभ्य ऋग्वेदादीनामुत्पत्तिराम्नाता, विषयस्य ज्ञानकारणतया निरूढत्वात्। यद्यस्त्यग्निः, तत एव ऋग्वेदो जायते। न भवेच्चेत् कं वर्णयितुमृग्वेदः प्रवर्त्तेतेति तस्य कारणत्वमुपपादयन्ति। अयमेवाभिप्रायो–

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**

---

६८. ऋ. १/१/१

६९. यजु. १/१

७०. सामवेदे–१/१/१

**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्।।"**[७१]

इति भगवता मनुनाऽपि शब्दान्तरैरुपदिष्टः। परं प्रसिद्धैरशेषशेमुषी- सम्पन्नैरपि विद्वत्प्रवरै रचितासु सप्तस्वष्टासु वा मनुस्मतेः टीकासु नैकत्रापि स्पष्टीकरणमस्यार्थस्योपलभामहे। पूर्वोक्ता श्रुतिः प्रायेण सर्वैरेव समुद्धृता, अग्न्यादिभ्यश्च कथं वेदानामुत्पत्तिः सम्भवतीत्याशङ्कितमपि, परम्, "आगमिकत्वाच्च नातिशङ्क्यमेतत्" (गोविन्दराजः) इत्याद्येव समाहितम्। "सारासारवचः प्रपञ्चनविधौ मेधातिथेश्चातुरी" इति बहुधा स्तुतेन सर्वमान्येन मेधातिथिना बहु खल्वत्र विवेचितम्। परं "किं नोपपद्यते, कः शक्तीरदृष्टा असतीर्वक्तुमर्हति। नाख्यातोऽर्थो विकल्पयितुं युक्तः। अग्न्यादयोऽपि देवता ऐश्वर्यभाजो निरतिशयशक्तिश्च प्रजापतिस्तत्र का नामानुपपत्तिः "अर्थवादाश्चैते" इत्यादिभिरेव शब्दैः शङ्कमानानां मुखमुद्रणं कृतम्। अग्रे महामतेस्तस्य दृष्टिर्मनागुक्तेऽर्थे प्रसृता, परं ऋग्वेद आग्नेय- सूक्तानामरम्भे दर्शनमेव ऋग्वेदस्याग्निजन्यत्वे तेन हेतूकृतम्। न तु तत्राग्नि- विज्ञानम् प्राधान्येनास्तीति स्पष्टीकर्तुं तस्यापि वाक् प्राभवत्। अग्रे वेदद्वये त्वेवं विधोऽपि समन्वयो न प्रदर्शित एवेति। भाष्यकृता च श्रीमाधवाचार्येण "अग्न्यादिजन्यत्वे वेदानां पौरुषेयत्वं प्रसक्तम्" इति उपोद्घाते पूर्वपक्षी- कृत्योत्तरपक्षे न किमपि समाहितम्। वैज्ञानिकपद्धतौ तस्मिन् काले दृष्टिनिक्षेप एव नाभूदित्येवास्य सर्वस्य निदानम्।

एवं चतुर्वर्गचिन्तामणेः श्राद्धखण्डे पृष्ठशतकेन पितृतत्त्वं विवेचयन्नपि तत्र भवान् निबन्धकृतां मूर्धन्यो हेमाद्रिः श्रुतिषु स्पष्टमभिव्यञ्जितम् "आग्नेयाः प्राणा देवाः, सौम्याः प्राणाः पितरः" इति देवानां पितृणां च वैलक्षण्यं न लेशतोऽपि व्याख्याति। मनुस्मृतौ-

**"ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः।**
**देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वशः।।"**[७२]

इत्यादिना स्पष्टीकृतमपि देवपितृविज्ञानं चतुरो मेधातिथि-

---

७१. मनु. १/२३

७२. मनु. ३/२०१

रर्थवादत्वेनैव दूरे क्षिपति, न तु समुचितं व्याचष्टे। तस्मिन् काले वैज्ञानिकताया विरहो वैदिकवैज्ञानिकार्थसम्प्रदायविच्छेद एव चात्र निदानम्।।

द्विविधाः पदार्थाः वैदिके विज्ञाने आख्यायन्ते—"अस्थन्वन्तः", अनस्थाश्च। येषामस्ति बाह्यसत्ता ते अस्थन्वन्तः, ये तु केवलं प्रतीयन्त एव, न तु पृथग् बहिरुपलभ्यन्ते, ते अनस्था इत्युच्यन्ते। इदमेव भेदद्वयम्– 'अस्ति सिद्धम्', 'भातिसिद्धम्' चेति व्यवहृतं लौकिक्यां भाषायाम्। एतदभिप्रायेणैव पदार्थधर्मविवेचको भगवान् कणादो मुनिरपि द्वेधा पदार्थान् व्यभजत्– सदित्याख्यातान् सत्तासिद्धान् द्रव्यगुणकर्माख्यान् प्रथमं न्यरूपयत् "सामान्यं विशेष इति बुद्ध्यपेक्षम्" इति स्पष्टमाचक्षाणश्च सामान्यादीन् भातिसिद्धानग्रे संन्यवेशयत्, परं तदनुयायिषु द्रव्यादिवदेव जातेः पार्थक्यसाधन-परेषु दर्शनान्तरैः सह महान् कलहोऽस्मिन् विषये प्रवर्त्तते।

**"न याति न च तत्रासीदस्ति पश्चान्न चांशवत्।**
**जहाति पूर्वं नाधारमहो व्यसनसन्ततिः।।"**

इत्याद्या बौद्धानामक्षेपाश्च प्रत्येकं घटत्वादिजातेर्विभुत्वमङ्गीकृत्य समाधीयन्ते[७३] इति कुत्र कोणे विज्ञानं वराकं निलीय तिष्ठतु।

संस्कृतभाषायामचेतनबोधकाः खट्वावृक्षादिशब्दा अपि तत्तल्लिङ्ग-भाजोभ्युपगम्यन्ते। तत्र वैज्ञानिकं हेतुमुपदर्शयन् महाभाष्यकारो भगवान् पतञ्जलिः–

**"संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।**
**संस्त्याने स्त्यायतेर्ड्रत् स्त्री सूतेः सप् प्रसवे पुमान्।।"[७४]**

इति वार्त्तिकं व्याचक्षाणः–

"अधिकरणसाधना लोके स्त्री, स्त्यायत्यस्यां गर्भ इति, कर्तृसाधनश्च पुमान्—सूतेः पुमानिति। इह पुनरुभयं भावसाधनम्। संस्त्यानं स्त्री, प्रवृत्तिश्च पुमान्, कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमान्। गुणानाम्। केषाम्। शब्दस्पर्शरूपरसगन्धानाम्। सर्वाश्च पुनर्मूर्त्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः

---

७३. शङ्करमिश्रकृते वैशेषिकसूत्रोपस्कारे
७४. पातञ्जल महाभाष्ये

शब्दस्पर्शरूपरसगन्धवत्य:। यत्राल्पीयांसो गुणा: तत्रावरतस्त्रय: शब्द: स्पर्शो रूपमिति, रसगन्धौ न सर्वत्र। प्रवृत्ति: खल्वपि नित्या, न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते, वर्द्धते वा यावदनेन वर्द्धितव्यम्, अपार्थेन वा युज्यते, तच्चोभयं सर्वत्र। यद्युभयं सर्वत्र कुतो व्यवस्था? विवक्षात:। संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयविवक्षायां नपुंसकम्" इति स्पष्टमाह।

अस्याभिप्राय: प्रस्फुट एव, यत् सर्वत्रैव जडचेतनेषु स्थावरजङ्गमेषु च यज्ञप्रक्रियाविधया आदानप्रदाने प्रवर्त्तेते, तत्रादानविवक्षायां स्त्रीलिङ्गशब्दस्तत्र प्रवर्त्तते, प्रदानविवक्षया पुँल्लिङ्गशब्द:, ताटस्थ्यविवक्षया तु नपुंसकलिङ्ग: शब्द इति। परं कैयटमहाभागो यज्ञप्रक्रियामिमामनभिलक्ष्यैव शब्दस्पर्शादिरूपेण स्वकृतमपि भाष्यकृतो विवरणं गौणं मत्वा गुणशब्दस्य सांख्यप्रसिद्धं सत्त्वाद्यर्थमुपगम्य तदुपचयापचयौ च काल्पनिकौ मत्त्वा सर्वां वैज्ञानिकप्रक्रियां तिरोदधाति, नागेशभट्टाद्याश्च तदेवानुसरन्ति। विज्ञान-प्रक्रियाया: देशे विलोप एवात्रापराध्यतीति न प्रस्मर्त्तव्यम्।

एवमेव पौराणिकं भुवनकोशमितिहासं वाऽवलम्ब्य पाश्चात्या इदानीं सुबहु साधयन्ति। सुमहत्तेषां तत्र तत्त्वं भासते। परमस्माकं पुराणटीकाकृत: पुराणपाठकाश्च लेखनीं वाचं वा विश्रमयितुं तानि प्रकरणान्युपयुक्तानि मन्वते। आधुनिकानि विकासवादादीनि विज्ञानानि भूतस्तरविद्याप्रभृतयश्च स्पष्टं पुराणेषु निरूपितानि, परं व्याख्याकृद्भ्यस्तत्र मौनमेव रोचते। वैज्ञानिक-सम्प्रदायविच्छेद एव सर्वत्र हेतुरिति स्फुटमेव विदुषाम्।

निरुक्तकारो भगवान् यास्कोऽन्तिमो विज्ञानविवेचक:। तेन वेदेषु विज्ञानप्रक्रिया प्रदर्शिता। बहवो मन्त्राश्च तथा व्याख्याता:। परं तस्यापि सूत्ररूपा लेख-शैलीव्याख्यानमर्हत्यद्यत्वे। भाष्यकृन्माधवाचार्यस्तत्र तत्र मन्त्रेषु निरुक्तदृष्टां मन्त्रव्याख्यामुद्धरति। स्वयं तु न तदनुसारं मन्त्रं व्याचष्टे, न वा निरुक्तं स्फुटयति। तेन निरुक्तव्याख्यापि व्याख्याऽभावाद् दुरवबोधतामद्य गता। संक्षिप्तमेव च निरुक्तदृष्टं विज्ञानम्। न काऽपि वैज्ञानिकी स्पष्टा पद्धतिस्तत्राप्यवाप्यते। वैज्ञानिकप्रक्रियाबोधकास्तु रहस्यनिदानाद्या ग्रन्था: विलोपं गता:। इयं तावद् विज्ञानस्य दुरवस्थाऽभूत्।

इतिहासविषये तु इतोऽप्यधिको विप्लवः प्रावर्त्तत। वेदानामपौरुषेयतां समर्थयमानेन भगवता जैमिनिना **"अनित्यदर्शनाच्च"**[७५] इति पौरुषेयता-पूर्वपक्षमुद्भाव्य **"परं तु श्रुतिसामान्यमात्रम्"**[७६] इति समाहितम्। जैमिनेर्भगवतः कः आशयः? इति तु वेत्ति केवलं सर्वान्तर्यामी भगवान्, अनेकधा स विवरीतुं शक्यते, बहुभिः विव्रियते चापि। परं श्रीशबरस्वामिप्रभृतयो मीमांसका इत्थं वर्णयन्ति– यन्मानुषं चरितं यदि वेदेषु वर्ण्यते, तर्हि वेदास्तन्मनुष्यादुत्तरं प्रादुर्भूता इति अनादित्वमपौरुषेयत्वं च वेदानां भज्येतेति शङ्का। न सन्त्येव वेदेषु मानुषाणि चरितानि, नामसादृश्यमूलया तु भ्रान्त्या नित्यपदार्थसम्बन्धिवर्णनं मानुषमित्यभिमन्यते कैश्चित्। यथा–"बबरः प्रावाहणिरकामयत"[७७] इत्यादिषु च ब-ब इति शब्दानुकृत्या 'बबर' इति वायुरभिधीयते। स च प्रवहणशील इति प्रावाहणिरुक्तः। अत्र प्रवहण पुत्रो बबरनामा कश्चिन्मनुष्योऽपि भवेत्, तदितिहासभ्रान्तिर्लोकानां जायते। वस्तुतस्तु वाय्वादेर्नित्यस्यैवेदं वर्णनमिति तत्समाधानं चेति। एतेनेदं साधितं यत्– "मनुष्येतिहासो वेदेषु नास्त्येवेति।" इदं मतं बहुभिरेव इदानीन्तनैरादृतमनूदितञ्च।

इदं तु स्मर्तव्यम्। इमां पद्धतिमवलम्ब्य मीमांसाभिमतस्य मन्त्र-ब्राह्मणात्मकस्य कृत्स्नस्य वेदस्य प्रामाणिकी व्याख्या न केनाप्यद्यावधि विरचिता, दुःशकं च कार्यमिदमिति बहवो विद्वांसः स्फुटमभिमन्यन्ते। सर्ववेदव्याख्यातारौ तत्र भवन्तौ सायणमाधवाचार्यौ सादरमुपोद्घाते मीमांसक-मतमिदमन्ववदताम्, परं व्याख्यानकाले त्विदं सर्वं व्यस्मरतामिव। यतो हि बहवो मन्त्राः, बहूनि च ब्राह्मणप्रकरणानि मानुषेतिवृत्तावलम्बेनैव तत्र भवद्भ्यां व्याख्यातानि। यथा–

> **"आभोगयं प्र यदिच्छन्त एतना**
> **पाकाः प्राञ्चो मम केचिदापयः।**
> **सौधन्वनासश्चरितस्य भूमना–**

---

७५. जै.सूत्रे - १/१/२८
७६. जै.सूत्रे - १/१/३२
७७. तै.सं. - ७/१/१०/२

**गच्छत सवितुर्दाशुषो गृहम्।।"**[७८]

इति मन्त्रं व्याचक्षाणो माधवाचार्य आह– "ऋभवो हि सुधन्वन आङ्गिरसस्य पुत्राः। कुत्सोऽप्याङ्गिरसः, अतस्तेन मदीया ज्ञातय इत्युक्तम्। हे सौधन्वनासः=सुधन्वनः पुत्राः।" इत्यादि। तथैव–

**"प्रातारत्नं प्रातरित्वा दधाति**
**तं चिकित्वान् प्रतिगृह्या निधत्ते।।"**[७९]

इति मन्त्रं व्याचक्षाणो माधवाचार्यो दीर्घतमःकक्षीवतोः सर्वमितिहासम्, भावयत्यपुत्रेण स्वनयेन तस्मै यद्यद् दत्तम्– तस्य विवरणं च सर्वमुपनिबध्नाति, तदेव च वृत्तमवलम्ब्य सूक्तमिदं व्याचष्टे।

तथैव **"युवं च्यवानं चक्रथुर्युवानम्"**[८०] इति प्रदर्शितपूर्वे मन्त्रेऽपि च्यवनस्य पुराणप्रसिद्धमुपाख्यानं माधवाचार्येण व्याख्यातम्।।

एवमेव शतश इतिहासाः सायणमाधवीये भाष्ये मन्त्रार्थरूपेण व्याख्याता उपलभ्यन्ते। ब्राह्मणेष्वपि ऐतरेयादिषु या हरिश्चन्द्रनहुषादिकथाः, ताः सर्वा अपि मनुष्यचरितरूपेणैव माधवाचार्येण व्याख्याताः। एवमुव्वट-महीधरादिभिरपि इतिहासपरं व्याख्यानमेवादृतं तत्र तत्र।

मीमांसका मन्त्राणामिव ब्राह्मणानां तदेकदेशभूतानाम् आरण्यकोप-निषदादीनामपि च वेदत्वमेव सिद्धान्तयन्ति–

**"मन्त्रब्राह्मणयोर्वेदनामधेयम्"**[८१] **"शेषे ब्राह्मणशब्दः"**[८२] इत्यादि। तथैव च सर्वे प्रामाणिका आस्तिका मन्वते। उपनिषत्सूपलभ्यमाना-श्चाख्यायिका मनुष्यपरतयैव श्रीशङ्कराचार्यप्रभृतिभिः सर्वैरपि भाष्यकृद्भिस्तत्र तत्र व्याख्याताः।

**"शुगस्य तदनादरश्रवणात्, तदाद्रवणात्, सूच्यते हि"**

---

७८. ऋ.सं. – १/११०/२
७९. ऋ.सं. – १/१२५/१
८०. ऋ.सं. – १/११८/६
८१. आप.परि. – १/३३
८२. जै.सू. २/१/३३

**"क्षत्रियत्व- गतेश्चेतरत्र चैत्ररथेन लिङ्गात्।"**[८३] इत्यपशूद्राधिकरणे च सूत्रकृता भगवता व्यासेनैवोपनिषत्सु मनुष्याख्यानमभिमतम्, तदाधारेणैव चाधिकरणमिदं प्रवृत्तमिति न तिरोहितं सूत्रपरिशीलिनाम्।

मनुष्यचरितं वेदेषु व्याचक्षाणा अपि च मान्यमहानुभावा:-

**"भूतं भव्यं भविष्यञ्च सर्वं वेदात् प्रसिध्यति।"**[८४]

इति सिद्धान्तमवलम्ब्यापौरुषेयतामनादितां च वेदस्य रक्षन्त्येव।

अपि च "न कदाचिदनीदृशं जगद्" इत्यभिमन्यमानानां मीमांसकानामनया युक्त्या अपौरुषेयत्वरक्षणं संभवेदपि। अन्येषां तु सर्गप्रलयप्रवाहमुररीकुर्वतां दार्शनिकानां पौराणिकानां चैते वर्त्तमानकल्पसम्बन्धिन: पृथिव्यादिपदार्था अप्यादिमन्त इति तद्वर्णनेऽपि वेदानामनादित्वभङ्गशङ्कातङ्को दुस्तर एव। प्रवाहरूपेण नित्यतां तु पृथिव्यादीनामिव देवर्षिपितृराजर्षि प्रभृतीनामपि पौराणिका अभ्युपगच्छन्त्येवेति पक्षद्वयसाम्येनेतिहासविलोपपक्षस्य प्रयोजनं किमपि पश्याम:। ततश्च-

**"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्।**
**वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे।।"**[८५]

इति भगवन्मनूक्तदिशा 'स भूरिति व्याहरत्, स भुवमसृजत्' इति श्रुत्यनुगतया यथा उत्पत्स्यमानानामपि स्थावरजङ्गमादीनां सामान्येन गुणधर्मादिकं पूर्वपूर्वकल्पानुसारि प्रथमत एव श्रुतिनिबद्धमभूत्, तथैव उत्पत्स्यमानानामपि ऋषीणां राजर्षीणां च चरितं भविष्यद्दृष्ट्या, पूर्वकल्पानुसारि वा श्रुतं श्रुतिष्विति कात्रानुपपत्ति:? किमिव अपौरुषेयेषु वेदेषु न संभाव्यते? यदा खलु भगवतो वाल्मीकेरपि भविष्यद् रामचरितोपनिबन्धृत्वं श्रद्दधतेऽद्याप्यार्या:। ये खलु वेदानामलौकिकत्वं श्रद्दधते, ते भविष्यदर्थस्य पूर्वमेव तत्र वर्णनमपि विश्वस्युरेव, इतरथा तु कयाऽपि युक्त्या तेषामपौरुषेयत्वविश्वासोऽपि दु:साध इति मन्दप्रयोजन एवायमितिहासविलोपनप्रयासो दृश्यते।

---

८३. ब्रह्मसूत्रे - अ. १/पाद ३, सूत्र-३४-३५

८४. मनु. - १२/९७

८५. मनु. - १/२१

**"परं तु श्रुतिसामान्यमात्रम्"**[८६] इति जैमिनीयं सूत्रमपि– 'पूर्वकल्पोत्पन्नानामिदानीन्तानां च श्रुति सामान्यम्- नामसादृश्यम्, तेन पूर्वकल्पसम्बन्धीनि तानि वृत्तानि वेदेषूपात्तानि।' 'ईश्वरज्ञाननिष्ठानां वा पदार्थानाम् उपलभ्यमानैः पदार्थैः सह श्रुतिसामान्यम्–नामसादृश्यम्, इत्यर्थपरतया व्याख्यातुं शक्य एव। दृश्यते चायमपि मान्यानामार्याणामेव बहूनां पक्षो यज्ज्ञानरूपेण नित्या वेदाः, शब्दरूपेण तु काले काले तत्तदृषिभिरेव दृष्ट्वाविर्भावं नीता इति। तदेतद्ग्रन्थ एव ऋषिप्रकरणे सम्यग् विवृतमिति नेह प्रतन्यते। निरुक्तकृद्भगवान् यास्कोऽपि–

**"तत्र ब्रह्मेतिहासमिश्रमृङ्मिश्रं**
**गाथामिश्रं च भवति।"**[८७] इति।

**"आर्ष्टिषेणो होत्रमृषिर्निषीदन्**
**देवापिदेवसुमतिं चिकित्वान्॥"**[८८]

इत्यादिमन्त्रव्याख्यायां च देवापि– शन्तनुप्रभृतीनां चरितं तत्तन्मन्त्रनिदानत्वेन प्रस्तौति। बृहद्देवताकृच्छौनकोऽपि बहूनामृषीणां चरितानि मन्त्रनिदानत्वेन स्पष्टं व्याचष्टे।

तस्माद् येऽपि वेदस्यापौरुषेयत्वपक्षपातिनो न मनुष्यकृतिसम्बन्धं मनागपि वेदेषु सहन्ते, तेऽपीतिहासं वेदेष्वङ्गीकुर्वन्तीति भगवत्पादश्रीशङ्कराचार्य–श्रीसायणमाधवाचार्यादिनिदर्शनेन साधितम्। प्रदर्शितश्च दिङ्मात्रेण पुरुषसम्बन्धशंकायाः समाधाने तेषां पन्थाः।

वेदेषु सर्वथेतिहासानभ्युपगमे महान् विप्लवः प्रसज्जते। सन्ति किल मन्त्रब्राह्मणात्मकेषु वेदेषूर्वशीपुरुरवः प्रभृतीनां राजर्षिहरिश्चन्द्रप्रभृतीनां च बहव एवेतिहासाः, त एव चोपलभ्यन्ते इतिहासपुराणेष्वप्युपबृंहिताः। ततश्च वेदेषु यदि तेऽर्थान्तरपरास्तर्हि पुराणेष्वपि तथैव सम्भाव्यन्त इति तद्घटितपौराणिकसर्वराजवंशस्यैतिहासिकं तथ्यं दूरमुत्सारितं स्यात्।

---

८६. जै.सूत्रे -१/१/३१
८७. निरुक्ते - अ.४
८८. नि.-२/११; ऋ. - १०/९८/५

ततश्च 'नास्त्येव भारतीयानां कोऽपीतिहासः' 'कल्पनामात्रसाराः पौराणिका इतिहासाः' 'नासीत् कोऽपि रामो वा युधिष्ठिरो वा' 'नैतिहासिकः पुरुषो भगवान् कृष्णोऽपि' इत्याद्याः केषाञ्चित् पाश्चात्यविदुषां तदनुयायिनां भारतीयानां चानर्गला जल्पना एव विजयेरन्, गुहायां दृढदत्तार्गलं च भारतीय-सभ्यतायास्तत्त्वं स्यादिति किमितः परमनर्थास्पदं नाम। कुतश्च श्रीशबरस्वामिनोपबृंहितं मतमेव प्रमाणीकुर्वीमहि, न तु शौनकयास्कशङ्कर-माधवादिभिः स्वीकृतं वेदेषु स्फुटं भासमानं स्वारसिकं सिद्धान्तम्?

किञ्च, 'यत्परः शब्दः स शब्दार्थः' इति हि मीमांसाभिमतमेव न्यायमवलम्ब्य धर्म एव मीमांसाया दृढं प्रामाण्यं शक्यमुररीकर्तुम्, इतिहासादि-विषये तु पुराणमहाभारतादीनामेव मुख्यं प्रामाण्यम्। धर्मविचारे इतिहासादी-नामर्थवादान्तर्भूतानां प्रवृत्ति-निवृत्तिबोधनाङ्गतयैव सप्रयोजनत्वमिति जैमिनि-सिद्धान्तं शिरसाऽऽद्रियामहे, परं कल्पनाप्रसूता मिथ्याभूता एव त इतिहासा इति न शक्यमभ्युपगन्तुम्। वेदप्रामाण्यसाधनबद्धपरिकरा महतो वेदभागस्यैव मिथ्याप्रतिपादकत्वलक्षणप्रामाण्यं शब्दान्तरेण प्रसज्जयेयुरिति महदिद-मुपहासास्पदम्। अपि च-

**"विरोधे गुणवादः स्यादनुवादोऽवधारिते।**
**भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥"**[८९]

इति मीमांसकाभियुक्तोक्त्यनुसारं प्रमाणान्तरविरुद्धानां गुणवादत्वं भवतु नाम, अनुवाद-भूतार्थवादयोस्त्वैतिहासिकं तत्त्वं कथमपलप्येत? तदेतदाहुः श्रीशंकराचार्यपादाः बृहदारण्यकोपनिषद्भाष्ये-

**"आत्मेश्वरदेवतादीनामप्ययथार्थानामेव चेद् ग्रहणं श्रुतितः, अनर्थप्राप्त्यर्थं शास्त्रमिति ध्रुवं नाप्नुयाल्लोकवदेव। न चैतदिष्टम्, तस्माद्यथाभूतमेवात्मेश्वरदेवतादीन् ग्राहयत्युपासनार्थं शास्त्रम्॥"** इति।[९०] तुल्यमेतन्मनुष्यचरितेष्वपीति तेऽप्यादिशब्दग्राह्यतामर्हन्ति।

न ब्रूमो वयं वेदेषु पुराणेषु वा न सन्ति कल्पना इति, को हि नाम

---

८९. अर्थसंग्रहे-अर्थवादभेदप्रकरणे-पृष्ठ-२१३
९०. बृह.उ. - १/३/१

सचेता:–

**"पिप्पल्य: समवदन्त आयतीर्जननावधि।**
**यं जीवमश्नवामहै न स रिष्याति पूरुष:॥"**[९१]

**"ओषधय: समवदन्ते सोमेन सह राज्ञा।**
**यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि॥"**[९२]

इत्यादीनां संवादत्वेन भासमानानामपि वचोभङ्ग्या तत्तदौषधादि-गुणाभिव्यञ्जकत्वं नानुमन्येत, को वा वेदेषु कृतावगाहोऽगस्त्यमत्स्यसंवादादिषु क्वचिदाधिदैविकम्, क्वचिदाध्यात्मिकं तत्त्वमेवोपबृंहितमितिहासशैल्येति न दृढं विश्वस्यात्? पुराणेष्वपि पुरञ्जनोपाख्यानप्रभृतीनि स्वयमेवाध्यात्मिकार्थ-परतया व्याख्यातानि। परं नैतावता सर्वाण्येवाख्यानानि तथाभूतानीति भ्रमितव्यम्। नहि **"गङ्गायां घोष:"** इत्यादौ भवति लक्षणेति **'गङ्गायामवगाहते'** इत्यादावपि सा नियमेन युक्ता स्यात्।

तेन वेदेषु पुराणेषु वा यानि आख्यानानि आध्यात्मिकाधिदैविकाद्यर्थ-परतया व्याख्यातानि, तानि भवन्तु तथैव। यानि तु न अर्थान्तरपरतया क्वचिदप्युक्तानि, तेषु गुणवादत्वकल्पना सर्वथानर्थायैवेति सुदृढं भावयन्तु सुधिय:।

सन्ति च कानिचिदाख्यानानि द्विपराणि, कानिचिच्च त्रिपराणि। अधियज्ञम्, आध्यात्मिकम्, आधिदैविकं चापि तत्त्वं तैर्बोध्यते, ऐतिहासिकं तथ्यमपि चाविष्क्रियते। बहूनि खल्वैतिहासिकानि तथ्यानि वेदपुराणाद्येक-वाक्यतयाविर्भवन्ति, यानि वर्त्तमानैतिहासिकपद्धत्यापि परीक्ष्यमाणानि दार्ढ्यमेवोपयन्ति इति सर्वमिदं वेदादिग्रन्थपरिशीलनेनैव प्रस्फुटं स्यात्।

तदित्थं वैदिकानि विज्ञानानि इतिहासाश्च चिररात्राय विच्छिन्न-सम्प्रदायानि न प्रतिभासन्ते स्म इति संक्षेपेणोक्तम्। विलुप्तविज्ञानानां च वेदानां कवेलं कर्मकाण्डार्थम् आध्यात्मिकतत्त्वावबोधार्थं च महत्त्वमवशिष्यत। परं मूलभूताद् विज्ञानाद् वियोजितस्य कर्मकाण्डस्य क्रियन्तं कालं स्थिति:

---

९१. अथर्व सं.–६/१०९/२

९२. ऋ.सं. १०/९७/२२

सम्भवेत्? क्रमेण ततोऽप्यार्यजातेः श्रद्धा पृथग् भवितुं प्रवृत्ता। आध्यात्मिकानि तत्त्वान्यपि च मननार्थं प्रवृत्तैर्दर्शनैर्मननोपयोगितर्कप्रयोगं बह्वाद्रियमाणैर्वेदपथात् सुदूरमेव नीतानि, विप्रतिषेधेन च ख्यापितानीति तदर्थमपि वेदपर्यालोचनं शिथिलीभूतमिव। ततश्च–

**"योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।**
**स जीवन्नेव शूद्रत्वमाशुगच्छति सान्वयः॥"**[९३]

इति भगवतो मनोरादेशमवहेल्य, वेदानेकान्तत उपेक्ष्य, वेदाङ्गो-पाङ्गैकदेशभूता व्याकरण–न्याय–साहित्य–ज्यौतिषाद्या एव विद्यात्वेन भारते व्यवहृताः। वैदिकपौराणिकाद्यास्तु पण्डितत्वेनापि न परिगण्यन्ते। केवलमपमानमपि सोढवद्भिः कैश्चिद्ब्राह्मणैर्वेदसंहितानां कासांचिन्मूलमात्ररक्षा कृतेत्येव हर्षास्पदमभूत्।

अथ दैवाद् विज्ञानप्रियाया आङ्गलजातेरत्रागमने, तया सहार्यजातेः सम्बन्धे च भारते विलुप्ता विज्ञानचर्चा पुनरपि प्रावर्त्तत। आर्यजातेः पुरातनस्य वाङ्मयस्य क्रमेण परिचयं प्राप्य बहवो यूरोपीया विद्वांसोऽपि तत्तत्त्वान्वेषणे अथकपरिश्रमं कृतवन्तः। तेषु निबद्धश्रद्धाश्च तन्मुखात् प्रशंसां श्रुत्वा भारतीया अपि बहवो विद्वांसो वेदाद्यन्वेषणे प्रवृत्ताः। परम् अतिपुरातनेऽपि काले समुन्नतं विज्ञानमासीदिति विकासवादिनिष्ठाया यूरोपीयजातेर्निसर्गादेव विपरीतम्।

इदानीमुपलभ्यमानाश्च पुराणाद्या अत्यन्तमर्वाचीना इति सिद्धान्ति-तवतां तेषां वेदपुराणाद्येकवाक्यतायामपि सर्वथैव दृष्टिपातो न जायते स्म। तद्बुद्धिमन्वेव स्वबुद्धिं सञ्चारयन्तो भारतीया अन्वेषकाः केचन पुराणश्रद्धा-प्रतिमुखाः, केचिद् ब्राह्मणानपि विच्छिद्य पृथक् कृतवन्तः, केचन वेदेषु केवलं सामाजिकसभ्यतादर्शनायैवोत्कण्ठिताः, केचन सभ्यतारम्भ-सामयिकानेव वेदान् मन्वते–इति विभिन्नदृशाम् एषां प्रयत्नेन वैदिक-विज्ञानमन्दिरार्गला पुनरपि चिरमनुद्घाटितैव स्थिता। कर्मश्रद्धालवो विधि-वाक्यान्येव श्रद्दधते, मन्त्रांस्तु केवलं पाठमात्रोपयोगिनो मन्यन्ते। ब्राह्मणेष्वपि दृष्टान् वैज्ञानिकान् ऐतिहासिकान् विषयान् 'अर्थवादाः' 'स्तुतिनिन्दामात्र-

---

९३. मनु. – २/१६८

फलका:' इत्युपेक्षन्ते। मन्त्रभागमेव मुख्यं मन्यमानांश्च ब्राह्मणान् भक्तिवादपरान् कर्मस्तुतिपरान् वा मत्वा न तत्रादरं दधते। पौराणिकैस्तु वैदिकोऽर्थो बुद्धोऽपि न इत्येव बहव आग्रहपरा:। 'मन्त्रै: पूर्वं जगत्तत्वमेव प्रतिपादितमभूत्' 'कर्मप्रचारस्तु अर्वाक्कालिक:' इति यज्ञानेव पर उपेक्षन्ते। तदित्थं मन्त्रब्राह्मणपुराणसूत्राद्येकवाक्यतामङ्गीकृत्य विज्ञानोद्धारे न कस्यापि प्रवृत्तिरभूत्। ततश्च योऽपि कैश्चिन्महानुभावै: सुबहु परिश्रम्य कथञ्चिद् विज्ञानोन्मेष इतिहासोन्मेषो वा कृत:, सोऽपि क्वाचित्क: कल्पनामात्रविश्रान्त इति न प्रतिष्ठामद्यावधि समासदत्। यावद्धि आमूलचूलं पर्यालोच्यैकोपक्रमेण परिभाषानिरूपणपूर्वकं काचिद् वैदिकविज्ञानपद्धतिरितिहासपद्धतिर्वा नाविष्क्रियेत, तावन्न वैदिकमार्गार्गलोद्घाटनं सम्भाव्यते। न तु तावान् केनापि श्रम: कृत:, नापि तादृशी सामग्री संनिहिता। ये वेदान्वेषका: ते दार्शनिकपरिभाषानभिज्ञा अभूवन्, ये च प्राचीनशैलीपण्डितास्तेषामत्र वेदविषये प्रवृत्तिरेव नाभूदिति नैव तादृश: सुसमयो दुर्दैवग्रस्तेन भारतेन समासादित:।

यानि च तत्त्वानि वैज्ञानिका आधुनिका अविभाज्यानि मूलतत्त्वानि मन्यन्ते, तानि वैदिके विज्ञाने अतिपश्चाद्भवानि बहुगर्भितानि व्याख्यायन्ते। यदधुना 'ऑक्सीजन' नाम्ना विदितं तत्त्वं, तदस्माकं विज्ञाननये सोमेऽन्यतम: 'पवमान: सोम:' इत्याख्यायते 'घोराग्नि:' इति वा। 'हाइड्रोजन' नाम्ना विदितं च तत्त्वं वयम् 'अम्भ:' इति वदाम:, 'नाइट्रोजन' पदाभिधेयं भृगुष्वन्यतमं 'हंस' वायुम्, 'कार्बन' इत्युक्तं चाङ्गिरा इति परिचिनुम:। परमेतानि सर्वाणि पारमेष्ठ्ये मण्डले समुत्पद्यन्त इति वैदिकं विज्ञानमाचष्टे। एभ्य: सूक्ष्मानि स्वायम्भुवमण्डलस्य तत्त्वानि। तत्र च सर्वत्र समनुस्यूतं शुक्रम्, शुक्रोपादानं च पञ्चीकृतं पञ्चविधं प्रकृतिपदाभिधेयम्, तन्मूला:— प्राण:, आप:, वाक्, अन्नाद:, अन्नमिति व्याख्याता ब्रह्मेत्युक्ता: पञ्च-प्रकृतय:। तत्राप्यनुस्यूतममृतं षोडशकलम्, तच्चापि दिग्देशकालानवच्छिन्नस्य परात्परस्याधारेण स्थितमिति एतावत्य: कक्षा अद्यापि विज्ञातुमवशिष्यन्त आधुनिकेन विज्ञानेन। तद्यदि वैदिकं विज्ञानं पूर्णतया प्रकाशमासादयेत्, तत्तर्हि शताधिकाब्दगम्योऽध्वा वैज्ञानिकानां तत्साहाय्येन द्रुततरं गम्य: स्यादिति निष्पक्षपातया दृशा सर्वैरनुमातुं शक्यम्।

तथैवेतिहासस्यापि या सीमाऽद्यावधि निर्णीताऽभूत्, सा भूस्तरेषु नवनववस्तुप्राप्त्या प्रवर्धमानैवावलोक्यते। भूगर्भविज्ञानेन च भारतीयेषु प्रसिद्धं जगतो द्वयब्जपरिमितमेवायुः क्रमेण अनुमोदयितुम् उपक्रान्तम् इत्यतिपुरातनम् इतिहासमन्वेष्टुं कस्य वा मतिर्न औत्सुक्यमावहति। स च अति पुरातन इतिहासो वैदिकेनैव अण्वेषणेन विज्ञातुं शक्यः इति तस्यापि मार्गस्य प्रकाश आवश्यक एव। तस्माद् वैदिकविज्ञानेतिहासान्वेषणप्रयासोऽयं न व्यर्थः, अपितु जगदुन्नतिहेतुः, वेदानां पुनः स्वप्रतिष्ठाप्राप्तिहेतुश्चेति निर्विवादं स्वीकार्यं भवेत्।

ये तु इदानीन्तनाः विद्वांसो यत्र शिलालेखादिसाक्ष्यं प्राप्येत, तदेव ऐतिहासिकं तथ्यं मन्यन्ते; इतत्तु वेदपुराणादिषु उक्तं प्रकल्पनामात्रं (मिथियोलोजी) कथयन्ति, तान् प्रति सविनयं वदामो यत् महाभागाः एवं द्वित्रसहस्रसंवत्सरपर्यन्तैव भवतामितिहाससीमा स्यात्। न हि लक्षाधिकवर्षाणा-मितिहासे शिलालेखानां साक्ष्यं संभवति, एतावन्तं कालं शिलालेखादी-नामवस्थितेरसंभवात्, अतिपुरातने काले शिलालेखप्रचारस्यापि संदेहास्पद-त्वाच्च। ततश्च अतिपुरातनकालिकमितिहासं जिज्ञासमानैर्वेदपुराणाद्या एवानुसरणीया इत्यत्र न मनागपि सन्देहः।

यद्यपि शिलालेखाः शब्दप्रमाणरूपा एव वेदाद्या अपि शब्दप्रमाण-मूर्धन्या इति शिलालेखानामादरे वेदानामुपेक्षायां च न कमपि हेतुं पश्याम ऋते दुराग्रहात्। शिलालेखा अपि च तस्य तस्य राज्ञः पुराणप्रसिद्धां वंशपरम्परामनुवदन्तो मङ्गलाचरणादिषु पुराणोक्तमवतारचरितादिकञ्च प्रस्तुवन्तः कथं पुराणादिप्रक्रियाविरुद्धाः स्युः, उपजीव्यविरोधस्य सर्वथैवान्यायपक्ष-पतितत्वात्। पाश्चात्यैः तदनुगमनैकपरैः भारतीयैश्च जैनग्रन्थादीनामैतिहासिके विषये कथं चित्– प्रामाण्यं तत्र तत्र उररीकृतम्, अस्माकं पुराणादिकं तु उपहसितमिति केवलं राजनीतिरेव तत्र हेतुः नान्यत् किमपि दृढप्रमाणादिकम्। राजनीतिपरायणा हि विद्वांसो विजिताया जातेरितिहासेषु दृढं प्रहरन्ति, मा भूत् प्राक्तनानां गौरवमभिज्ञाय तस्या जातेः पुनरुत्थानमिति सुप्रसिद्धमेतत्। तदित्थं राजनीतिदृष्ट्यैव पाश्चात्यैः पुराणादिषु प्रहृतम्, शिक्षादोषात् स्वाभिमानशून्यैः पराधीनतया प्रतिभाबलविकलैश्च केवलं गतानुगतिकतां

निर्वहद्भिः भारतीयैः तदेवानुसृतमिति न तत् कथमपि श्रद्धेयं विवेचकानाम्। असम्भवन्तोऽर्थाः पुराणादिषु प्रतिपाद्यन्ते; तस्मान्न तानि न श्रद्धेयानि इत्युक्तिस्तु वेदपुराणशैलीनां तत्परिभाषाणां च अज्ञानमूलिकेति स्पष्टीभवति।

**अथ ये प्राचीनशैलीपण्डिता** एवमाक्षिपन्ति–यद्विज्ञानेतिहासादि-दृष्टाविषयप्रतिपादने वेदानां नास्ति किमपि महत्त्वम्, प्रमाणान्तरैरेव तेषां विषयाणां परिज्ञानसंभवात्। वेदास्तु प्रमाणान्तरैः सर्वथानवगतमेवार्थं स्वर्गापूर्वदेवतादिकं बोधयन्तो भवन्ति प्रमाणमूर्धन्याः। यथोक्तम्–

**"प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते!**
**एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता।।"**[९४]

तदित्थं धर्मो ब्रह्म च वेदतात्पर्यविषयौ। इतिहासविज्ञानाद्यन्वेषकास्तु वेदं स्वगौरवात् परिच्यावयन्तीव, न हि प्रमाणान्तरसिद्ध्यर्थं कथयन्तो वेदस्यानन्यसाधारणं गौरवं श्रद्धेयं स्यात्। मीमांसका अपि च **'अग्निर्हिमस्य भेषजम्'** इत्यादीनां प्रमाणान्तरानुवादकत्वमेव सिद्धान्तयन्तो न तत्र निष्ठामादधत इति। तस्मात् पाश्चात्यविदुषामनुकरणमात्रमिदं विज्ञानेतिहासाद्यन्वेषणं न भारतीयैः तत्परम्परापण्डितैः कथमप्यादर्त्तव्यमिति। तानेतानपि श्रद्धेयान् महानुभावान् प्रति सविनयातिरेकं वदामः। यन्महाभागाः! वेदस्य मुख्यं तात्पर्यं तु ब्रह्मण्येवेति सुदृढः सिद्धान्त आर्याणाम्। तथाहि श्रीमद्भागवतस्य एकादशे स्कन्धे एकविंशतितमेऽध्याये "शब्दब्रह्म सुदुर्बोधम्" इति उपक्रम्य–

**"किं विधत्ते किमाचष्टे किमनूद्य विकल्पयेत्।**
**इत्यस्य हृदयं लोके नान्यो मद्वेद कश्चन।।४१।।**
**मां विधत्तेऽभिधत्ते मां विकल्प्यापोह्यते ह्यहम्।**
**एतावान् सर्ववेदार्थः शब्द आस्थाय मां भिदाम्।।**
**मायामात्रमनूद्यान्ते प्रतिषिध्य प्रसीदति।।४३।।"**[९५]

इति भगवतः श्रीकृष्णस्य उद्धवं प्रति उपदेशः। अत्र धर्मपरत्वं वेदस्य वदन्तः पूर्वमीमांसकाः सुदृढमाक्षिप्ताः। मुख्यमभिप्रायं वेदस्य ईश्वर

---

९४. ऋग्वेदभाष्यभूमिकायाम्–सायणाचार्येणोक्तम्–पृष्ठ–३९
९५. श्रीमद्भागवते– स्कं–११, अ.–२१, ४२/४३

एव वेत्ति, ब्रह्मण्येव च विध्यनुवादाभिधानविकल्पादीनां सर्वेषां तात्पर्यम्, मायामात्रं चेदं सर्वं विस्तरेण प्रतिपाद्यं नेति नेति' तत्प्रतिषेध एव वेदानां मुख्यतात्पर्यविषय इति स्फुटमुक्तम्। श्रीमद्भगवद्गीतास्वपि च द्वितीयेऽध्याये–

**"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।**
**वेदवादरताः पार्थ नान्यदस्तीति वादिनः॥४४**

**त्रैगुण्य विषया वेदा निस्त्रैगुण्यो भवाऽर्जुन।**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्॥४५॥**

**यावानर्थं उदपाने सर्वतः सम्प्लुतोदके।**
**तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः॥४६॥"**[९६]

इत्यादिना मीमांसकाभिमतं काम्यधर्मपरत्वं नितरां दूषितम् 'परं वेदेषु स एव काम्यधर्मविषयो बाहुल्येनोपलभ्यत इत्यपि समुपदिष्टम्।

**"वेदैश्च सर्वैरहमेव वेद्यः"**[९७]

इत्यादिना च ब्रह्मण्येव वेदानां मुख्यं तात्पर्यम् इति स्पष्टीकृतम्। ततश्च मुख्यं तात्पर्यं तु कर्मस्वपि नास्त्येव, अथापि तद्वेदप्रतिपाद्यं मन्यत एव, तद्गवेषणा च सूत्रकृद्भिः, स्मृतिकृद्भिः, मीमांसकैः, निबन्धकृद्भिश्च महत् विस्तरेण कृता, समाहता, समाद्रियते च। वेदानुगामिभिः शिष्टैः शिष्टतमैश्च। तथैव यदि वेदेषु समुपलभ्यमानानां विज्ञानेतिहासादीनामपि गवेषणा क्रियेत तर्हि कस्तत्र विरोधः?

चेतः शुद्धिसम्पादनद्वारेण धर्मेऽप्यवान्तरं तात्पर्यं सम्भवति तस्मादर्थवती तद्गवेषणेति चेद् धर्मस्योपपत्तिबोधनेन श्रद्धादाढ्र्याय, धर्मानुष्ठानपरम्परा प्रबोधनेन प्रवृत्त्युपपादनाय विज्ञानेतिहासयोरपि परम्परयावान्तरं तात्पर्यं सिध्यत्येवेति कुतस्तद्गवेषणाया निष्फलत्वमङ्गीक्रियेत? किञ्च ज्ञानविज्ञानरूपामुभयविधां प्रक्रियामालम्ब्यैव ब्रह्म प्रतिपादितं सुकरावगमं भवतीति विस्तरेण प्रागवोचम्, ततश्च विज्ञानविधया जगत्प्रतिपाद्यान्ते तन्निषेधेनैव वेदतात्पर्यं स्पष्टीभवति इति सप्रयोजनमेव विज्ञानादिप्रतिपादनम्।

---

९६. श्रीमद्भगवद्गीतायाम्– २/४४, ४५, ४६
९७. श्रीमद्भगवद्गीतायाम्– १५/१५

धर्मो न प्रमाणान्तरावगतः, विज्ञानन्तु प्रमाणान्तरैरपि पाश्चात्यविद्वद्भिरिव शक्यते प्राप्तुमिति न तत्र वेदतात्पर्यमिति चेद्, यैर्विज्ञानादिकं न शक्यते प्रमाणान्तरेणावबोद्धुम्, तान् प्रति सौकर्याय कृपया समुपदिशति चेद् विज्ञानादिकं वेदः तावतानुग्राहकत्वमेव तस्य दृढीभवति; न तु कश्चित्कलङ्क-स्तच्छिरस्यापतति। भवतु तदंशानुवादकत्वं मीमांसकाभिमतं वेदस्य, परमनु-वादांशस्य गवेषणा न कार्येति तु न केषामप्यभिमतम्। सर्वो हि वेदः साक्षात् परम्परया वा मनुजानां कल्याणसाधक इति अनुवादा अपि तत्रस्थाः सम्यग् विज्ञेया एव। अनुवादानामपि प्रमाणान्तरैः संवादे सम्यग् विज्ञाते तत्र प्रामाण्याग्रहे दार्ढ्यं भवतीति प्रामाण्ये संदिहानानामत्यर्थमुपकारिणी तद्गवेषणा संभवति। अतिबहुलाश्चेदानीं वेदादिप्रामाण्ये संदिहाना इतीदानीमत्यर्थमुपयुज्यत एवंविधानां विषयाणां गवेषणा।

किञ्च, सर्गारम्भे समुत्पन्नमात्रेषु कार्यकारणभावादिकं सर्वथैवा-जानत्सु जगदीश्वरोपदेशेनैव ज्ञानविज्ञानप्रसार इति सर्वेऽप्यास्तिका अभिमन्वते। ततश्चेदानीं विज्ञानस्य प्रमाणान्तरविषयता कथंचिद्भवतु नाम; अतिपुरातने सर्गादिकाले तु जगदीश्वरोपदेशरूपैर्वेदैरेव सर्वं विज्ञातमिति कुतः प्रमाणान्तरसिद्धवस्तुप्रतिपादनरूपोऽप्याक्षेपो वेदेषु स्थानं विन्देत। अयं तु विकासवादः, स च नास्ति भारतीयानां विदुषां सम्मत इति य आक्षिपन्ति, तेऽपि न सम्यक् पश्यन्ति।

सर्गादावुत्पन्ना मनुष्याः कार्यकारणभावादेरनभिज्ञा तेषां स्वत एव क्रमेण बुद्धिविकासे विज्ञानोदयोऽभवदिति हि विकासवादः। जगदीश्वरानुग्रहेण तदुपदेशेन वा विज्ञानोदयस्तत्प्रसारश्चेति तु प्रकाशवादः। तमिममार्याणामभिमतं वेदोपदेशेन विज्ञानप्रसारं प्रकाशवादमनुयान्तो वा कथं विकासवादानुयायिनो मन्येमहि, कथं कार्यपरम्पराविरोधं उद्भाव्याक्षिप्येमहि। वस्तुतस्तु विकास-वादोऽपि न सर्वथास्माकं प्रतिकूलः, अपि तु बहुधा पुराणादिभिः प्रतिपादित इति स्फुटीकृतं वर्तते। केवलं निरीश्वरवादः, कर्मवादाननुगतिश्च आधुनिके विकासवादेऽस्मच्छास्त्रप्रतिकूलौ। ईश्वरवादः कर्मवादश्च यदि तत्र संयोज्येत, तर्हि पुराणाद्यनुगत एव विकासवादो भवेत्। आरम्भे वृक्षाणां सृष्टिः, सर्वान्ते मनुष्यसृष्टिरिति पुराणेष्वपि सर्वत्रोपलभ्यते। सर्गादौ जातानां मनुजानां

कार्यकारणभावादिपरिज्ञानं नाभूत् क्रमेणैव तैः कृष्यादि गृहनिर्माणादि च शिक्षितमित्यपि महाभारते, ब्रह्माण्डपुराणे, वायुपुराणे, मार्कण्डेयपुराणादिषु च स्फुटमुपलभ्यते यथा–

**मरुधन्वसु दुर्गेषु पर्वतेषु दरीषु च।**
**संश्रयन्ति स्म दुर्गाणि वार्क्षं पार्वतमौदकम्॥**
**कृत्रिमं च तथा दुर्गं मित्वामि वात्मनोऽङ्गुलैः।**
**मानार्थानि प्रमाणानि तास्तु (प्रजाः) पूर्वं प्रचक्रिरे॥३६॥**

**वृक्षस्यैवं गताः शाखास्तथैव चापरा गताः।**
**नताश्चैवोन्नताश्चैव तद्वच्छाखाः प्रचक्रिरे॥४३॥**

**याः शाखाः कल्पवृक्षाणां पूर्वमासन् द्विजोत्तम।**
**ता एव शाखा गेहानां शालात्वं तेन तासु तत्॥४४॥**

**जज्ञिरे तानि बीजानि ग्राम्यारण्यास्तु ताः पुनः॥६६॥**

**ओषध्यः फलपाकान्ता गणाः सप्तदशस्मृताः।**
**ब्रीहयश्च यवाश्चैव गोधूमा अणवस्तिला:॥६९॥**[९८]

इत्यादि।

अनेन गृहनिर्माणादि कृष्यादि च क्रमेणैव प्रवृत्तमिति स्पष्टीभवति। शाखासादृश्येन निर्माणाद् गृहाणां शालेति नाम समर्थितमत्र। अयन्तु विशेषः–अस्माकं पुराणादिषु अध्यात्मदृष्ट्या ह्रासवादरूपेण सर्वमिदं प्रतिपाद्यते। पूर्वं रागद्वेषरहिताः स्वतः सिद्धिसमन्विता निष्परिग्रहा मनुजा आसन्, तेषां कृष्यादिभिर्गृहादिभिश्च, किमपि साध्यमेव नासीत्। क्रमेण सिद्धिह्रासे रागद्वेषप्रवृत्तौ च सर्वमिदमावश्यकमभूद्-इत्यादि। पाश्चात्यास्त्वाधि-भौतिकदृष्टिप्रवणाः विकासरूपेण सर्वमिदं प्रतिपादयन्ति। सोऽयं दृष्टिभेदः। आधिभौतिकदृष्टीनां पाश्चात्यानां यो विकासवादः, स एवाध्यात्मिकानां दृष्टीनां भारतीयानामार्याणां ह्रासवादः, न तत्र प्रतिपाद्यवस्तुभेद इति कृतं प्रसक्तानुप्रसक्तविस्तरेण।

ततश्चारम्भिके काले ज्ञानविज्ञानादिकं सर्वं वेदेनैव बोधितमिति

---

९८. ब्रह्माण्डपुराणे - अ.-७ - (३६, ४३, ४४, ६६, ६७)

तावता वेदस्य कोऽपि महिमैव सिध्यति, न तु स महिम्नः प्रच्याव्यते। पाश्चात्यानामनुकरणं च तदा मन्येत, यदि पाश्चात्याभिमता एव सिद्धान्ताः तत्प्रक्रिययैव वेदेषु कथंचित् प्रदर्श्येरन्।

वेदविज्ञानमर्मज्ञैर्विदुषा वैदिकानामेव ग्रन्थानां परिभाषामालम्ब्य तत्प्रक्रिययैव सर्वं प्रतिपादितम्। पाश्चात्यापेक्षया विभिन्ना शैली समालम्बिता विभिन्ना एव परिभाषाः, विभिन्नाश्च प्रायेण सिद्धान्ताः। यच्च पाश्चात्यैरद्याप्यविज्ञातम्; तदपि वेददृष्टमेभिः प्रपञ्चितमिति कुतोऽत्रानुकरण शङ्का? सर्वमिदं तद्ग्रन्थपरिशीलिनां प्रस्फुटं भवेत्। क्वचित्तु यत्र पाश्चात्यानां जाता सम्यग् दृष्टिः, तत्र सिद्धान्तैक्यमपि भवतीति न तावतानुकरणमुद्-भावनीयम्, शतशोऽपि बुद्धिमतः सुविचारपरा अन्ते ऐकमत्यमापद्यन्त इति प्रसिद्धन्यायात् बहुषु अंशेषु निरोध एवात्र पाश्चात्यप्रक्रियायाः, तत्सिद्धान्तानां चेति स्फुटं स्यात् परिशीलनेन।

अस्तु वा मुख्यं तात्पर्यं क्वापि, यत्तु स्फुटमुपलभ्यते विज्ञानं वेदेषु यन्निदर्शितं प्राक् संक्षेपेण तत्कथमपलप्यं स्यात्। कथं च तद्गवेषणा न क्रियेत, न हि स्फुटं दृश्यमानादपि दृश्यान्नेत्रे स्वकीये केनचित् संमुद्र्यापसार्येते; न वा तदपसारणं श्रेयसे भवतीति सम्यङ् निधातव्यमुत्सृज्य पक्षपातम्। किं च विचार्यमाणा च आभासन्ते स्फुटं विरोधाः यथा–

**वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।**
**प्रीणयन्ति मनुष्याणां पितॄणाज्येन तर्पिताः॥**[९९]

इति भगवता याज्ञवल्क्येन देवरूपत्वं पितॄणामुक्तम्।

**"ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः॥"**[१००]

इति मनुना तु देवजनकत्वं पितॄणां बोधितम्, हरिवंशे च पितृकल्पे देवानां पुत्राः ज्ञानाधिक्येन पितृत्वं गता इति देवजन्यत्वमाख्यातं पितॄणाम्। तथैव–

---

९९. याज्ञवल्क्यस्मृतौ १/२६९

१००. मनुस्मृतौ – ३/२०१

**"त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत्।**
**तदित्यृचोऽस्याः सावित्र्याः॥"[१०१]**

इत्यादिना भगवता मनुना वेदेभ्य उत्पत्तिर्गायत्र्या आख्याता, "यश्चैवं विद्वानेवमेतां वेदानां मातरं सावित्रीं सम्पदमुपनिषदमुपास्ते"[१०२]

इति गोपथश्रुतौ वेदानां माता गायत्री श्रूयते। त इमे वैज्ञानिक-प्रक्रियामवलम्ब्य न चेतस्तोषकरं समाधातुं शक्याः। 'मुखमस्तीति वक्तव्यम्' इति न्यायं कृतार्थयंस्तु सर्वोऽपि किमपि समाधानं तत्र तत्र वक्त्येव। परं चेतस्तोष एवंविधेषु वैज्ञानिक्यैव प्रक्रियया संभवति।

---

१०१. मनु.—२/७७

## चतुर्थोऽध्यायः

# वैदिकऋषीनां वैज्ञानिकी दृष्टिः

कवयः क्रान्तदर्शिनः, ते च ऋषय इत्याख्यायन्ते। ऋषति पश्यति इति ऋषिः इत्यनया व्युत्पत्त्या क्रान्तप्रज्ञो वैदिककवयः कृष्णाजिनेषूपविश्य ज्ञान-विज्ञानात्मिकया दृष्ट्या यं यं तत्त्वं यथायथमवलोक्य स्वशिष्येभ्यो मन्त्रानुपदिष्टवन्तः, ते एव मन्त्रभूताः शब्दाः सूक्ष्मविज्ञानेनोपनिबद्धाः क्रमशः शिष्य-प्रशिष्यपरम्परया वेदपदेनाख्यायन्ते। तानि च वैदिकानि तत्त्वानि पञ्चधा विभज्यन्ते। १. ऋषयः, २. पितरः, ३. देवाः, ४. असुराः, ५. गन्धर्वाश्चेति। एतेषां समष्टिरेव सूक्ष्मं जगदित्याख्यायते। सूक्ष्मं जगदेव वेदानां मुख्यं प्रतिपाद्यम्। एषां पञ्चानां विज्ञानेन सर्वं वैदिकं तत्त्वं करतलामलकवत् सुविज्ञातं भवति। एषु ऋषीणां देवानाञ्च सामान्येन परिचयोऽत्र संक्षेपेण प्रस्तूय तेषां वैज्ञानिकसिद्धान्तानुशीलनं प्रदर्श्यते। आधुनिकस्य विज्ञानस्याधारभूता यथा विद्युच्छक्तिः, तथा वैदिकस्य विज्ञानस्य मूलाधारः प्राणतत्त्वमिति शक्यते वक्तुम्। प्राणश्च रयिश्चेति द्वे मूलतत्त्वे। तत्र प्राणो मुख्यः, रयिस्तु तदधीना। तदुक्तं प्रश्नोपनिषदि–

**"प्रजाकामो वै प्रजापतिः, स तपोऽतप्यत स तपस्तप्त्वा मिथुनमुत्पादयते। रयिञ्च प्राणञ्चेत्येतौ मे बहुधा प्रजाः करिष्यत इति। आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः। रयिर्वा एतत्सर्वं यन्मूर्तञ्चामूर्तञ्च। तस्मान्मूर्तिरेव रयिः॥"**[१]

अनया हि श्रुत्या सर्वेषां प्राणानामायतनं सूर्यः, रयेश्चायतनं चन्द्रमा इति दर्शितम्। सर्वाश्च मूर्तयः पिण्डरूपा रयिनामकात्तत्त्वात् जायन्त इत्यप्युक्तम्। तेन यद् यद् भौतिकम्, यद् यदाधुनिका वैज्ञानिका

---

१. प्रश्नोपनिषदि – १/४-५

"मैटर-पदेनाभिदधति", तत्सर्वं रयिजन्यम्; तद्विधारकश्च शक्तिविशेषः प्राण इति स्फुटीभवति। यः 'फोर्स' इति 'एनर्जी' इति चाद्यत्वे वैज्ञानिकैरुच्यते। इमे एव प्राणरयी स्थूलताप्राप्तिक्रमेणाग्नीषोमौ भवतः। अग्नीषोमाभ्यां च सर्वं जगदुत्पद्यते– **"अग्नीषोमात्मकं जगत्"**[२] इत्युपनिषद्वचनात्। तत्र प्राण एवाग्निः, रयिश्च सोम इति भाव्यम्। प्राण एव सर्वस्यादिः, स एव स्थूलामवस्थां गतो रयिपदवाच्यां भूतभौतिकावस्थां गच्छतीत्यप्यन्यत्रोक्तम्। प्राणस्य च याः पञ्चावस्थाः पूर्वमुक्ताः, तास्वपि ऋषिप्राण एव मुख्यः। तथाहि शतपथब्राह्मणे–

**"असद्वा इदमग्र आसीत्, तदाहुः किन्तदसदासीदिति, ऋषयो वाव तेऽग्रेऽसदासीत्। तदाहुः के ते ऋषय इति, प्राणा वा ऋषयः।"**[३]

अत्र हि पूर्वमसत्पदेन प्राणरूपाणामृषीणामभिधानं कृतम्। प्राणा एव सत्तारूपेण सर्वत्रानुप्रविशन्ति। प्राणेषु किञ्चिदन्यत् तत्त्वं सत्तारूपेण न प्रविशतीति तेषामसत्त्वमुक्तमिति। यथा हि नैयायिकाः सत्तासमवायेन द्रव्यादीनां सत्पदवाच्यतां ब्रुवन्ति, सत्तायां तु न काचिदन्या सत्ताऽस्तीति सा सती नोच्यते, तथैवात्रापि द्रष्टव्यम्। एतदनन्तरं तत्रैव तेषामृषीणां सप्तधात्मनां विभज्यावस्थानम्, तत्रैव देवानां प्रादुर्भावः, अग्रे च तत एव वेदप्रादुर्भावपूर्वकं सर्वभूतप्रथमानामपामुत्पत्तिश्चेत्यादि विवृतम्। एवं शतपथस्य चतुर्दशे काण्डे बृहदारण्यकोपनिषत्पदाऽभिधेये जनकसभायामृषीणां परस्परं ब्रह्मोद्ये शाकल्यस्य प्रश्नानां याज्ञवल्क्येनोत्तरणे देवानामपि प्राणरूपता सुस्फुटमाम्नाता। एवं हि तत्र शाकल्ययाज्ञवल्क्ययोः प्रश्नोत्तराणि श्रूयन्ते–

**"कति देवा याज्ञवल्क्येति। स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच। कत्येव देवा याज्ञवल्क्येति। त्रयस्त्रिंशदित्योमिति होवाच।"**[४]

---

२. बृहज्जाबालोपनिषदि – २/४

३. शतपथब्राह्मणे – ६/१/१/१

४. बृहदारण्यकोपनिषदि–३/९/१

अनन्तरं च पुनः पुनः प्रश्ने षट्, त्रयः, द्वौ अध्यर्धः, एक इति क्रमेण देवसंख्या भगवता याज्ञवल्क्येन निर्दिष्टा। विवरणप्रश्ने चाष्टौवसवः एकादश रूद्राः, द्वादशादित्याः, इन्द्रश्च, प्रजापतिश्चेति त्रयस्त्रिंशत्। तेषां संक्षेपेण–अग्निश्च पृथिवी च वायुश्चान्तरिक्षञ्च द्यौश्चादित्यश्चेति षट्, तेषामपि संक्षेपे तत्रापि लोकवेदयोरेकीकरणेन त्रयः, तत्राप्यनुस्यूततया अन्नं प्राणश्चेति द्वौ। ततश्च कतमः अध्यर्ध इति प्रश्ने–"योऽयं पवत इति तदाहुर्यदयमेक इहैव पवते। अथ कथमध्यर्ध इति। यदस्मिन्निदं सर्वमध्याध्र्नोत्तेनाध्यर्ध इति एवमुतीर्य "कतम एको देवः" इति प्रश्नः "प्राणः" इति समाहितः तस्यैव च बृंहणं सर्वमिदं जातमिति तस्यैव ब्रह्मत्वमुक्तम्। "अमृतः पुरुषः" इत्यपि तस्य विवरणं तत्रैव कृतम्। तदेतत्प्रकरणपर्यालोचनेन प्राण एव मुख्यो देवः। स च यद्भूतभौतिकमुत्पादयति तत्तदवशगत्वादर्धं गण्यत इत्यध्यर्धो देवो निर्दिष्टः। "योऽयं पवते" इत्युक्त्या च वायुरूपत्वं तस्योक्ता। वायुरयं न भौतिको वायुर्मन्तव्यः, अपि तु तस्य परिचालक आन्तरिक्ष्यः प्राणविशेषो वायुपदेन निर्दिष्टः तस्यैकस्यैवाग्निः, वायुः, आदित्य इति त्रीणि रूपाणि स्थानभेदेन प्रतिष्ठितानि। स्थानानां पृथिव्यन्तरिक्षदिवामपि स्थानिभिः सह परिगणनेन तु षड् देवाः। अग्न्यादीनामेकैकस्य पृथक् पृथगवस्थागणने, केन्द्रस्थस्येन्द्रस्य सर्वमण्डल–व्यापकस्य प्रजापतेश्चापि सहैव गणने त्रयस्त्रिंशद् देवाः सम्पद्यन्ते। एषां चैकैकस्यानन्तकार्यकारित्वात् त्रयस्त्रिंशच्छतानि त्रयस्त्रिंशत्सहस्राणीत्यादिः देवानां संख्या आख्यायते। इदानीन्तु पुराणाद्याधारेण त्रयस्त्रिंशत् कोटय इत्यपि प्रसिद्धिः। सेयं सर्वाप्यनन्तकार्यकारित्वात् बोध्या। पृथक्–पृथङ्नामग्रहणं तु त्रयस्त्रिंशत् एव श्रुतिपुराणादिषु दृश्यते। त्रयस्त्रिंशत् संख्याया विवरणं तु मन्त्रेष्वपि श्रूयते–

**"इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च। मनोर्देवा यज्ञियासः॥"[५]**

---

५. ऋ. ८/३०/२

शाखान्तरमन्त्रे वस्वादिविवरणमपि श्रूयते–

**"अग्निः प्रथमो वसुभिर्नो अव्यात्सोमो रुद्रेभिरभि रक्षतुत्मना।**
**इन्द्रो मरुद्भिर्ऋतुथा कृणोत्वादित्यैर्नो वरुणः शर्म संयत्॥"**[६]

संक्षिप्य देवतात्रयं तु भगवान् यास्कोऽपि दैवतकाण्डे देवतानिरूपणे सिद्धान्तयति **"तिस्र एव देवताः इति नैरुक्ताः। अग्निः पृथिवीस्थानः, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थानः"**[७] इति। अत्र निरुक्तकृता स्थानिनः, प्राणविशेषा एव मुख्यतया देवपदवाच्या उक्ताः। पूर्वोक्तबृहदारण्यकोपनिषद्वाक्ये तु स्थानानामेव मुख्यत्वमनुसंहितम्। तदेतद्विवक्षाभेदमात्रम्। अग्निवायू चेमौ निरुक्तकृता निरूप्यमाणौ न भौतिकौ, अपि तु प्राणरूपौ देवविशेषावेव। **"यत्किञ्चिद्दार्ष्टिविषयकमग्निकर्मैव तत्, या च का च बलकृतिरिन्द्रकर्मैव तत्, यत्किञ्चित् प्रवह्लीतमादित्यकर्मैव तत्"**[८] इति तेनैव तद्देवतास्वरूपव्याकरणाद् अन्तरिक्षे वायुर्वा इन्द्रो वेति विकल्पो य आख्यातस्तस्याशयमेवं भाष्यकारः श्रीदुर्गाचार्य आह यद् येषां कार्यं प्रत्यक्षं दृश्यते, त एव देवा अत्रोक्ताः। भूम्यामग्निकार्यम्, दिवि चादित्यकार्यं प्रत्यक्षं दृश्यते। अन्तरिक्षे इन्द्रकार्यं विद्युदादि तु सदा न दृश्यते, कदाचिद् वर्षादावेव दृग्गोचरीभवतीति सदा दृश्यमानकार्यो वायुरेव समुचिततयाऽत्रोपात्तः। किन्तु यस्य स्तुतिर्वेदेषु शतशस्सूक्तैस्समाम्नायते स देवराज इन्द्रोऽपि नोपेक्षामर्हतीत्यन्तरिक्षे द्वावपि देवावुपात्तौ। सदा दृश्यकार्यत्वात् वायुः, सर्वदेवप्राधान्यात्तु इन्द्र इति।

तदित्थमृषयो देवाश्च प्राणविशेषा एवेति सम्यक् प्रमाणैः प्रसाधितम्। तत्र ऋषय आद्याः, देवास्तु तज्जन्या इत्यपि शतपथप्रमाणेन संकेतितम्। भगवान् मनुरप्येषां जन्यजनकभावमाह–

**"ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः।**
**देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः॥"**[९]

---

६. आश्वलायन श्रौत. – २/११
७. निरुक्ते–दैवतकाण्डे अ.–१
८. निरुक्ते दैवतकाण्डे – अ. १
९. मनुस्मृतौ ३/२०१

यद्यपि पूर्वार्द्धे 'देवमानवाः' इति पाठः प्रायेणोपलभ्यते। परं "देवाश्च असुराश्च उभये प्राजापत्याः" प्राजापत्यरूपेण देवदानवयोरेव सर्वत्र ग्रहणं भवति। तस्मात् 'देवदानवाः' इति पाठ एव साधुरिति मामकीनं मतम्। अतः देवाश्च असुराश्च द्विविधाः प्राणाः पितृभ्य उत्पद्यन्ते। तत्र प्रकाशो देवानां प्राधान्यम्, तमसि त्वसुराणाम्। अत एव रात्रिमासुरीमाहुः। ब्रह्मसूत्रेष्वपि देवताधिकरणे भगवता वादरायणेन देवानधिकृत्योक्तम्– "ज्योतिषि भावाच्च" इति ज्योतिषि संसक्ता एव देवा न तु शरीरभृतः। तेषां ब्रह्मविद्यायामधिकारः कथं संभवेदिति तदभिप्रायः। तेन सूर्यमण्डल-संसक्ततैवादित्यानां देवानां स्फुटीकृता। मण्डले संसक्ताश्च तत्परिचालकाः प्राणविशेषा एव देवपदवाच्या इत्युक्तं भवति। यत्वग्रिमसूत्रे देवानामप्यधिकार-प्रतिपादने यच्च तत्र भाष्यकृद्भिर्व्याख्यातम् "ज्योतिरादिविषया अप्यादित्यादयो देवतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयन्ति, मन्त्रार्थवादादिषु तथा व्यवहारात्। अस्ति हि ऐश्वर्ययोगाद्देवतानां यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम्" इति। तदेतत् द्वैविध्यं देवानामग्रे व्याख्यास्यते। इह त्वेतावदेव वक्तव्यं यत्प्रकाशभागो देवैः सम्पाद्यते, तत्रैव च त आवर्तमानास्तिष्ठन्ति। तमस्त्वसुरप्राणैः सम्पादितम्, तत्रैव चासुराणां स्थितिः। एते देवा असुराश्च पितृप्राणेभ्य आविर्भवन्ति, एभ्यश्चाग्रे गन्धर्वप्राणाः। तत्र ऋषयः सप्त, पितरोऽष्टौ, देवास्त्रयस्त्रिंशत्, असुरा नवनवतिः, गन्धर्वाः सप्तविंशतिरिति। मानवास्तु मनोः प्राणात् उत्पद्यन्ते। स चार्धेन्द्ररूपः। तत्रेह केवलमृषयः, देवाश्च व्याख्येयाः। पितरः, असुराः, गन्धर्वाः, मानवाश्च नेह प्रसक्ताः।

एषु ऋषिप्राणा मुख्याः सर्वतः प्रथमाश्चेत्युक्तम्। अन्यैरसंपृक्ताः शुद्धा अत एव प्रथमजा ऋषिप्राणाः। ते चाध्यात्मम्, अधिभूतम्, अधिदैवं च सप्त सप्तधा आत्मानं व्यवस्थाप्य तिष्ठन्ति, प्राणान्तराण्युत्पादयन्ति च। **"प्राणो वै वसिष्ठऋषिः, यद्वैनु श्रेष्ठस्तेन वसिष्ठः, अथो यद् विस्तृततमो वसति तेनो एव वसिष्ठः",[१०] मनो वै भरद्वाज ऋषिः। अन्नं वाजः। यो वै मनो विभर्ति सोऽन्नं वाजं भरति। तस्मान्मनो**

---

१०. श.प.ब्रा.–८/१/१/६

**भरद्वाजऋषिः।"**[११] **"चक्षुर्वै जमदग्निर्ऋषिः। यदनेन जगत्पश्यति, अथो मनुते तस्माच्चक्षुर्जमदग्निऋषिः"**[१२] इत्यादिना ब्राह्मणेषु तत्र तत्राध्यात्मिका ऋषयो व्याख्याताः। मन्त्रे च सप्ताऽपि निर्दिश्यन्ते–

**"साकंजानां सप्तथमाहुरेकजं**
**षडिद्यमा ऋषयो देवजा इति।**
**तेषामिष्टानि विहितानि धामशः**
**स्थात्रे रेजन्ते विकृतानि रूपशः॥"**[१३]

अयं मन्त्रः आध्यात्मिकेषु ऋषिष्वेवं व्याख्येयः– **"सप्त शीर्षन् प्राणाः"**[१४] इत्यादि बहुधा श्रूयते। तत्रेदं रहस्यम्–

मनुष्यशरीरेऽत्र चतस्रो गुहाः (निगूढानि स्थानानि) सन्ति। १. शिरोगुहा २. उरोगुहा ३. उदरगुहा ४. बस्तिगुहा चेति। तासु प्रत्येकं सप्त प्राणायतनानि कार्यसम्पादकानि स्थानानि विद्यन्ते। इन्द्रियनाम्नाप्येतानि व्यवह्रियन्ते। सप्तस्वपि शक्तिप्रद एको मुख्यः केन्द्रभूतः इन्द्रः। तेषु च सप्तसु षड् इन्द्रक्रमेण तिष्ठन्ति, अन्तिमं त्वेकमेव। यथा शिरोगुहायां द्वे श्रोत्रे, द्वे चक्षुषी, द्वे नासिके इति षट्, सप्तमं मुखबिलं त्वेकम्। केन्द्रभूतश्च ब्रह्मरन्ध्रगतो मुख्यो ज्ञानशक्तिप्रदो प्राणः। द्वितीयायामुरोगुहायां–द्वौ बाहू, द्वौ फुफ्फुसौ, द्वौ स्तनौ इति षड्, हृदयं तु सप्तममेकम्, केन्द्रभूतोऽत्र कण्ठकूपः पराक्रमशक्तिप्रदः। तृतीयायामुदरगुहायां–यकृत्पलीहे, आमाशय-पक्वाशयौ, वृक्कौ, सप्तमी नाभिस्त्वेका; केन्द्रभूतमत्र हृदयमेव पूर्वगुहाया अन्तिमं स्थानमन्नसंग्रहविभजनादिशक्तिप्रदम्। अथ चतुर्थ्यां बस्तिगुहायां – पादौ, मूत्रवीर्योत्सर्गच्छिद्रे, अण्डकोशौ, सप्तमीत्वेका बस्तिः, केन्द्रभूताऽत्र नाभिरेव पूर्वगुहाया अन्तिमं स्थानं शरीरक्रमनिर्वाहकोत्सर्गादिशक्तिप्रदम्।

पूर्वं देवजनकत्वेन व्याख्यातानामृषीणां मन्त्रे देवजन्यत्वं कथमुक्तमिति तु न शङ्कनीयम्। यतो हि वैज्ञानिकप्रक्रियायां पदार्थानामन्योन्यं जन्यजनकभावः

---

११. तत्रैव-८/१/१/६
१२. तत्रैव-८/१/२/३
१३. ऋ. १/१६४/१५
१४. श.प.ब्रा.-९/५/२/८

स्फुटं दृश्यते। यथा हि तन्तुनिर्मितादपि पटात् पृथङ् निःसार्यमाणास्तन्तवो जायन्ते, मृदा निर्मितादपि च कुड्यात् पुनर्मृन्निःसार्यते; तथैव ऋषिप्राणादेव समुत्पन्नेभ्यः पितृभ्यो देवेभ्यो वा पुनः पृथग्भूय निःसरन्त ऋषयः पितृजा इव देवजा इव भवन्तीति कोऽत्र विस्मयः। अविकृतोपादानोपादेयभावे सर्वत्र व्यवस्थेयं वैज्ञानिकाभिमता। अत एव निरुक्तकृता भगवता यास्केनापि दैवतकाण्डे देवस्वरूपविचारे **"अन्योन्यजन्मानो भवन्ति, इतरेतर-प्रकृतयः"**[१५] इति स्पष्टमुक्तम्।

वेदभाष्यकृता माधवाचार्येण तु मन्त्रोऽयमृतुपरत्वेन व्याख्यातः। यथा–"साकंजानां कालरूपेण सहैवोत्पन्नानाम्, ऋतूनां मध्ये षडेव ऋषयो गमनशीलाः, देवजा आदित्याद्देवादुत्पन्नाः, ऋतवः, यमाः= युग्मकाः, मासद्वयात्मका भवन्ति। सप्तथं सप्तमम्, अधिकमासं (स्वयं पृथग्-ऋतुरूपन्तु) एकजम्–'एक एवाजायत' इत्येकजः, तथाभूतम्, एकमेवाहुः, तेषामृतूनां. स्वरूपाणि, इष्टानि सर्वलोकाभिमतानि। धामशः=ततत् स्थाने विहितानि पृथक्–पृथक् स्थापितानि। रूपशः रूपभेदेन रसयवाद्युत्पादकत्वेन, विकृतानि=विविधाकृतियुक्तानि, स्थात्रे=अधिष्ठात्रे=उपभोक्त्रे, रेजन्ते=कम्पन्ते वलन्ति पुनः पुनरावर्तन्ते" इति तद्व्याख्यानसारः। तदिदमृषीणामाधिभौतिकं स्वरूपमृतूत्पादकत्वरूपं द्रष्टव्यम्।

यद्यपि ऋतूनाम्–**"ऋतवः पितरः"**[१६] **"षड्ऋतूंश्च नमस्कुर्यात् पितॄनेव च धर्मवित्"**[१७] इत्याद्यासु श्रुतिस्मृतिषु पितृत्वमाख्यातम्, तथापि ऋषिभ्य एव पितरो जायन्ते, ऋषय एव पितृरूपेण परिणमन्तीति ऋतुमूलभूतानि तत्त्वानि इह ऋतुशब्देनोपलक्षणीयानि, ते च ऋषय एवेत्यत्र न विवादः।

आधिदैविका ऋषयस्तु तारारूपाः, ये तारामण्डले सप्तर्षि-पदेनैवाख्यायन्ते ते ध्रुवं प्रदक्षिणीकृत्य दक्षिणस्यां दिशि स्थिताः। तेषामप्यन्यस्मिन्मन्त्रे संकेतः। तेष्वपि षट् परस्परं साम्मुख्येन तिष्ठन्ति। चत्वारश्चतुष्कोणमेकं विदधति, द्वौ चतुष्कोणादधः परस्परं साम्मुख्येन

---

१५. निरुक्ते–दै.काण्डे–अ. १

१६. श.प.ब्रा.–२/६/१/४२

१७. मनु.–३/२१७

स्थितौ, सप्तमस्तु पृथगेकल एव। तेऽपि च जगन्निर्वाहकानि तत्त्वान्युत्पादयन्ति इति तत्रापि मन्त्रः सुयोजः। ते एतेऽपि–**"रोचन्ते रोचनादिवि"**[१८] इति मन्त्रे संकेतेनाम्नाताः, **"सप्तर्षी नु ह स्म पुरर्क्षा इत्याचक्षते, अमी ह्युत्तरा हि सप्तर्षय उद्यन्ति"**[१९] इति शतपथश्रुतौ विवृता। इत्थमाध्यात्मिक-माधिभौतिकमाधिदैविकञ्च तत्त्वं गम्भीरार्था मन्त्राः प्रतिपादयन्तीत्यनेनैव दृष्टान्तेन भावनीयम्। भवतु नाम, मुख्यमृषित्वं यत् शतपथब्राह्मणे षष्ठकाण्डारम्भे प्रतिपादितम्, तत्राप्येषां सप्तधैवावस्थितिरुक्ता–

**"स योऽयं मध्ये प्राणः, एष एवेन्द्रस्तानेष प्राणान्मध्यत इन्द्रियेणैन्द्ध यदैन्द्ध तस्मादिन्धः। इन्धो ह वै तमिन्द्र इत्याचक्षते परोक्षम्। परोक्षकामा हि देवास्त इद्धाः सप्त नाना पुरुषानसृजन्त"**[२०] इत्यादि।

सप्तानां श्रीभूतश्च शिरोरूपतां गतोऽग्निरभवदित्यप्यग्रे व्याख्यातम्। ऋषिभ्यः पितृक्रमेण देवाः प्रादुर्भवन्तीति पूर्वोक्त दिशा मध्ये प्राण इन्द्ररूपतामापद्यते। सप्तानां समष्टेः सारस्त्वग्निरूपतामित्यप्यत्र स्फुटीभवति। अयं मध्यप्राण इन्द्र एव नभ्यः प्रजापतिरिति वैदिक्यां परिभाषायामुच्यते। भूतभौतिकरूपाः प्रजाः सृष्ट्वा ताः क्रोडीकृत्य स्थितो व्यापकः प्राणस्तु सर्वः प्रजापतिरिति परिभाष्यते। द्वयोरपि प्रतिपादकाविमौ मन्त्रौ–

**"प्रजापतिश्चरति गर्भे अन्तरजायमानो बहुधा विजायते।
तस्य योनिं परिपश्यन्ति धीरास्तस्मिन् ह तस्थुर्भुवनानि विश्वा।।"**[२१]

अत्र केन्द्रगतो नभ्यः प्रजापतिराम्नायते। स हि गर्भे अर्थात् केन्द्रे तिष्ठति। स एव च स्वशक्तिभिः पिण्डान् सृजतीति बहुधा विजायत इत्युक्तम्। वृत्ताकारे वस्तूनि केन्द्रज्ञानं कथञ्चित्तत्सुलभं भवति। लम्बचिपिटादिवस्तुषु तु केन्द्रज्ञानं महता प्रयासेन गणितेनैव सम्पादयितुं

---

१८. ऋ.सं.–१/६/१
१९. श.प.ब्रा.–२/१/२/४
२०. श.प.ब्रा.–६/१/१/१
२१. यजु.सं.–३१/१९

शक्यते, अत: 'तस्य योनिं परिपश्यन्ति धीरा:' इत्युक्तम्। योनिं स्थानमित्यर्थ:। तदाधारेणैव सर्वाणि वस्तूनि स्थितानि भवन्ति। केन्द्रे प्रचलिते तद्वस्तुन: स्वरूपाद् भ्रंश एव समापतति। तत्तद्वस्तुन: केन्द्रं विज्ञाय यदि तत्राङ्गुलिनिक्षेप: क्रियेत, तर्हि अंगुलिमात्राधारेण महतां गुरूणामपि वस्तूनां स्थितिर्भवतीत्याधुनिका वैज्ञानिका अपि मन्यन्ते। तदेतदुक्तम्– **"तस्मिन् ह तस्थुर्भुवनानि विश्वा"** इति। सर्वाणि भुवनानि केन्द्रमाधारीकृत्यैव तिष्ठन्तीति। इत्थं केन्द्रस्थप्राणविज्ञानमत्र निरूपितम्। सर्वप्रजापतिनिरूपकस्त्वेष मन्त्र:–

**"प्रजापते न त्वदेतान्यन्यो रूपाणि परितो बभूव।**
**यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥**[२२]

सर्वाण्यप्युत्पन्नानि वस्तूनि परित: प्रजापतिर्भवतीत्यत्र व्याख्यातम्। य: पूर्वेण मन्त्रेण केन्द्रस्थित: प्रजापतिव्याख्यात: स एव शतपथश्रुतौ इन्द्रप्राणनाम्ना निरूपित:। तच्च मध्यस्थं प्राणमभित: सप्तधा प्राणा अवतिष्ठन्ते। ते सप्तर्षय उच्यन्ते। तान् सप्तमध्यग: प्राण: समिन्धे, तत एव समिन्धनात् तस्येन्द्रपदवाच्यता शतपथश्रुतौ व्याकृता। तेन समिद्धाश्च प्राणा: सामन्ता उच्यन्ते। ते सप्तधा भवन्ति – नाभेरुर्ध्वम्, अधस्तात्, द्वौ द्वौ पुरुषौ, चत्वार: प्राणा आत्मा, सोऽङ्गी भवति। ततो बहिर्धा त्रय: पुरुषा: सन्ति, पक्षपुच्छानीत्यङ्गानि। तथा च– **"त्रिवृद्वै चक्षु: शुक्लं कृष्णं लोहितम्"**[२३] इति कौषीतकश्रुते: कनीनिकाकृष्णशुक्लैरक्षिवदिदं वर्तुलवृत्तं त्रिवृद्रूपं सम्पद्यते। मध्यबिन्दुरनिरुक्तोऽक्षरपुरुषसंपरिष्वक्त: प्राण इन्द्र:, स एको भाग:। तं परित: चत्वार: प्राणा आत्मा, स द्वितीयो भाग:, तं परितो द्वौ पक्षौ एकं पुच्छमिति त्रय: प्राणा अङ्गानीति तृतीयो भाग:। अङ्गाङ्गिप्राणविगमे साङ्गोपाङ्गो विनश्यति। किन्तु यद्विगमे सत्यपि अङ्गी सत्तातो न च्यवते तदङ्गम्। यथा हस्तपादादिविगमेऽपि प्राणी जीवत्येव। नाभिहृदयमस्तिष्काद्यात्मप्राणापाये तु सद्य: प्राणी म्रियते।

तेनैतत्कार्यारम्भकाणां प्राणानां नाभ्येन्द्रेणोपनहनतारतम्यान्मुख्या-मुख्यत्वाभ्यां भेदोऽवकल्पते। यत्र यत्र प्राणेनार्थस्तत्र सर्वत्रैवमिन्द्रात्माङ्गभेदात्

---

२२. ऋ.सं.–१०/१२१/१०

२३. कौषीतक.–३/५

त्रैविध्यमिति साधारणो नियमः। तच्च इदमात्मप्राणाङ्गप्राणद्वैविध्यकृतं रूपमिद्रस्यात्मनोऽधिष्ठानं शरीरारम्भकभूतानामायतनं विज्ञायते।

अथैतेषां सप्तानामङ्गाङ्गिपुरुषाणां श्रीभिरिन्द्रसमिन्धनविशेषादूर्ध्व-मुदूढरसरूपाभिः पृथगिवामृतं सप्तप्राणरसमेकपुरुषमात्रं शिरो भवति। यस्यैतच्छिरः तच्छरीरं तन्मर्त्यम्। वाक्प्रधानं प्रसुप्तमिव निश्चेष्टं शरीरम्; प्राणप्रधानं जाग्रदिव कुर्वद्रूपं शिरः। शिरसि च शरीरे च पृथगिव सप्त-सप्त प्राणाः श्रूयन्ते। देवप्रधानं शिरः प्राणमयम्, तत्रैतानि भूतानि देवानाश्रयन्ते। आहुतयश्च देवेभ्यः क्रियन्ते, न भूतेभ्यः। तेनेदमभौतिकं शिरः कृश्यतो न कृश्यति, मेद्यतो न मेद्यति।

अथ भूतप्रधानमिदं शरीरम्। तत्रैते देवा भूतान्याश्रयन्ते। आहुतयश्च भूतेभ्यः क्रियन्ते न देवेभ्यः, तेनैते देवाः कृश्यतो न कृश्यन्ति, मेद्यतो न मेद्यन्ति। तत्र शारीरैः सप्तभिः पुरुषैरेकः पुरुषो भवति। तमेतं पुरुषमग्निरित्या-चक्षते। सोऽयं वागप्सहकृतः शुक्रोऽग्निः द्विविधः—मर्त्यश्चामृतश्च। यो मर्त्यः सोऽग्निश्चित्यो नाम। यथा मनुष्यशरीरे लोमत्वगसृग्मांसास्थिमज्जाशुक्राणि चीयमानानि चित्योऽग्निर्भवति। एष मर्त्यः प्रजापतेरर्द्धभागः। तत्र सर्वाणि भूतानि श्रितानि। अथैतत् सप्तपुरुषश्रीसंभूतैः शिरस्यैः सप्तभिः प्राणैरेकः प्राणो भवति। सोऽग्निरमृतश्चितेनिधेयो नाम। येन येन रूपेणायं चित्योऽग्नि-श्चीयते, तत्र सर्वत्रायं तत्तदभ्यन्तरे अनुस्यूतो भवतीति चितेनिधेय उच्यते। सोऽमृतः शुक्रोऽग्निर्वागप्सहकृतः प्रजापतेरर्द्धभागः। तत्र सर्वे देवाः श्रिताः। **"अत्र हि सर्वेभ्यो जुह्वति"**[२४] इति वाजसनेयश्रुतौ श्रूयते। सोऽयं ऋषितत्त्वस्य सारः। तदित्थमवस्थानभेदेन सप्तर्षय आख्याताः।

अथ सृष्टिविधावेते द्विविधा भवन्ति—उन्मुग्धावयवाः, उद्बुद्धा-वयवाश्च। आद्याः 'असत्' पदवाच्याः प्राणाः सत्यलोकेऽवतिष्ठन्ते। अथैते तपोलोकमागत्य तप्यमानाः परिक्षुब्धाः सन्तः क्रमेण तृतीये पारमेष्ठ्ये जनःलोके समागता उद्बुद्धावयवा भूत्वा द्वितीयाः पितरो जायन्ते। तपोजा हीमे तपसैव नानारूपा जायन्ते।

---

२४. श.प.ब्रा.-६/१/१

तत्रोद्बुद्धावस्थायामवयवधर्मतो भेदादमी ऋषयोऽनन्तविधाः भवन्ति। तेषु द्वादशातिस्तुतयः स्मर्यन्ते– भृग्वङ्गिरसौ, अत्रिमरीची, पुलस्त्यपुलहौ, क्रतुदक्षौ, वसिष्ठागस्त्यौ, विश्वामित्रविश्वकर्माणौ इति।

ते एते पितृसंज्ञाः सृष्टिकर्त्तारः प्राणा वाच्येव योनावात्मानं सिञ्चन्तोऽक्षरपुरुषमनोविशेषगृहीतबलप्रयोगाद् विभिन्नरूपा एताः सर्वाः सृष्टीरुत्पादयन्ति। तथा चैतरेयः–

**"प्राणो वा आयुः, प्राणो रेतः, वाग् योनिः, योनिं तदुपसन्धाय रेतः सिञ्चति। रेतस्तत्सिक्तं विकरोति। सिक्तिर्वा अग्रेऽथ विकृतिः। रेतस्तद् विकृतं प्रजनयति। विकृतिर्वा अग्रेऽथ जातिः॥"**[२५]

अयमाशयः– सर्वजगन्मूलानि वाक्प्राणमनांसि पूर्वं व्यख्यातानि प्रथमेऽध्याये। तत्र सृष्टिसम्पादने क्रियाप्रधानः प्राणो मुख्यः। एष च प्राणो मनसेषितो वाचि सिच्यते। "सोमो वै रेतोधाः" इति बहुधा श्रवणात्। सोममयो मन एवादौ कामयते। मानसं रूपं प्रकल्प्य तदर्थं प्राणं नियुङ्क्ते। प्राणेन चाहता वाग् विक्रियते "त्वष्टा रूपाणि विकरोति" इति। स एष सर्वसृष्टिसाधारणो नियमः। इयं वागेव प्रश्नोपनिषदि रयिनाम्ना व्यपदिष्टा। तदेवं प्राणात्मकानामृषीणां तत्त्वं संक्षेपेण निर्दिष्टम्।

अथैवंविधमृषितत्त्वं येषां हृदये परमेश्वरकृपया प्रादुर्भूतम्, ते मनुष्या अपि ऋषय उच्यन्ते– **"अजान् ह वै पृश्नीन् तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्। त ऋषयो अभवन्, तद् ऋषीणामृषित्वम्।"**[२६]

इत्यादिश्रुतिषु तेऽपि ऋषिपदेन निरुक्ताः। एते मन्त्रद्रष्टार ऋषय एव बृहद्देवतायां सर्वानुक्रमणीसूत्रादिषु च विस्तृतेन विवृताः। यथा हि काव्यादिषु पुराणादिषु च कविरुपदेष्टा चान्यमुखेन स्ववक्तव्यं प्रतिपादयति, योऽर्थः कविनिबद्धवक्तृप्रौढोक्तिसिद्ध इति पदेनालङ्कारिकैर्व्यवहृतः, सेयमपि प्रक्रिया वेदेषु दृश्यते। यथा–

---

२५. ऐ.ब्रा.–१०/३८–३९

२६. तै.आ.–२/९

**"पिप्पल्यः समवदन्तायतीजननादधि।**
**यं जीवमश्नवामहै न स रिष्याति पूरुषः॥"[२७]**

इत्यत्रोत्तरार्धं पिप्पलीमुखेनैव वाचितम्।

**"इन्द्रो अस्माँ अरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम्।**
**देवोऽनयत् सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः॥"[२८]**

इति मन्त्रो नदीमुखेनैव वाचितः। नद्य एव च तस्य ऋषिका उक्ताः। एवंविधेषु मन्त्रेषु ऋषिनिबद्धान् तानेव वक्तृत्वेनानुसन्धाय मन्त्रार्थो निर्वक्तव्यो भवति। अनयैव दिशा देवा अपि अनेकधा श्रूयन्ते। प्राणरूपा देवाः तत्संख्या त्रयस्त्रिंशच्च प्रतिपादिताः। तेऽप्यध्यात्मादिभेदेन नानाविधत्वं प्रतिपद्यन्ते।

**"अग्निर्वाग् भूत्वा मुखं प्राविशत्, वायुः प्राणो भूत्वा नासिके प्राविशत्, आदित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशत्॥"[२९]**

इत्याद्यासु श्रुतिष्विन्द्रियाणां देवत्वमध्यात्ममाम्नातम्। श्रीमद्भगवद्-गीतायामपि दैवासुरसर्गवर्णने विवृतम् श्रीशंकरभगवत्पादैरप्युनिषद्भाष्ये देवासुरसंग्रामविवरणे वृत्तीनामेव देवासुरत्वं व्याख्यातम्। अधिदैवतं तारामण्डलेऽपि देवा विव्रियन्ते। सूर्यस्य तु सर्वदेव समष्टित्वं प्रदर्शितमेव। **"चित्रं देवानामुदगादनीकम्"[३०]** इति सर्वत्र सुप्रसिद्धे सूर्योपस्थानमन्त्रेऽपि देवानां चित्रमनीकं सूर्य इति स्पष्टीभवत्येव। एवं 'चन्द्रमा देवता', 'नक्षत्राणि देवता', 'वसवो देवता' 'रुद्रा देवता' इत्याद्यपि रुद्राध्यायादिषु समाम्नायत एव। तेषु तेषु नक्षत्रेषु तद्योगतारानाम्ना ज्योतिर्विद एकां तारां व्यवहरन्ति। सा देवरूपैव मन्यते। तामाश्रित्यैव च तत्तन्नक्षत्रदेवानां यागस्तैत्तिरीयब्राह्मणे तृतीयकाण्डारम्भे सुविस्तृतेनाम्नातः। अथ सर्वत्र स्वस्तिवाचनरूपेण पठ्यमानः सुप्रसिद्धो मन्त्र एव तावद् विमृश्यताम्–

---

२७. अथर्व सं. - ६/१०९/२
२८. ऋ.सं. - ३/३३/६
२९. ऐ.उ.-२/४
३०. ऋ.सं.-१/११५/१

**"स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥**[३१]

अस्य पर्यालोचने क्रियमाणे संशयोऽयमुदेति यदिन्द्रस्य, पूष्णः, तार्क्ष्यस्य, बृहस्पतेश्च कः परस्परं सम्बन्धो येन ते मिलिता अत्र निर्दिष्टा इति। द्विविधो हि देवानां सम्बन्धो व्याख्यातः निरुक्तकृता– संस्तविकश्च, एकहविर्भाक्त्वञ्च। उभयविधोऽपि नैषां क्वाप्यन्यत्र दृष्टः। नैषां सम्मिलितानामुद्देश्येन क्वापि हविर्दानं विहितम्, नाप्येकस्थानस्थिताः, न चाप्यन्यत्र सहस्तुतिरपि श्रूयते। तदेषां साहचर्येण दर्शने को हेतुरित्यन्वेषण–प्रक्रियया स्फुटमिदं विचारगोचरीभवति यत् खमण्डलस्य चत्वारो भागा अत्र नक्षत्रदेवता माध्यमेन निर्दिष्टाः। खमण्डलस्य हि षष्ट्यधिकशतत्रयमिता (३६०) अंशाः ज्योतिर्विद्यायां व्यवहारसौकर्याय कल्प्यन्ते। तत्र कृत्तिकादि–नक्षत्रनाम्ना प्रत्येकं नक्षत्रं विंशतिकलाधिकैः त्रयोदशत्रयोदशभिरंशैः कल्प्यत इति सप्तविंशतिः खगोलस्य भागाः भवन्ति। संक्षेपेण भागकल्पनायां तु किञ्चिदूनसप्तनक्षत्रैरेकैकं भागं प्रकल्प्य चत्वार एव भागाः कल्पिताः भवन्ति। ते एव भागाः देवतामुखेनास्मिन् मन्त्रे कथिताः। कांचित् प्रबलां ज्योतिष्मतीं तारामभिलक्ष्य विभागज्ञानं सुकरं भवतीति तदनुरोधेन परिचाययितुं किञ्चिन्न्यूनाधिक्यमपि कृतम्। यथाश्विन्यादिगणनायां चित्रानक्षत्रं चतुर्दशं भवतीति तन्नक्षत्रमण्डलमध्यगं शक्यते वक्तुम्। तद्देवता च कौशिक इन्द्र उच्यते। अत्र वृद्धश्रवा इति विशेषणं प्रौढयशस्को वाऽधिकधनो वेति भाष्यकृद्भिर्व्याख्यातम्, परं 'प्रवृद्धकर्णः' इत्यर्थः सुसंगतो भवति, श्रवः शब्दस्य कर्णवाचकत्वेन सुप्रसिद्धत्वात्। चित्रानक्षत्रस्याकारो यत्र चित्रितस्तत्र तस्य लम्बकर्णत्वमिव परिचीयते। लम्बकर्ण उलूक उच्यते। कौशिक शब्द उलूकवाचकोऽपि इति कौशिकस्येन्द्रस्य तद्दैवतत्वाख्यानमपि सुसंगतं भवति। अथास्य समानान्तरेऽस्माच्चतुर्दशं रेवतीनक्षत्रमस्य संमुखीनम्। तस्य देवता पूषेति ज्योतिर्वित्सु प्रसिद्धा; सा पूषामन्त्रस्य द्वितीये चरणे आम्नाता। तस्य सर्ववेदा इति विशेषणं सर्वान् विन्दति, सर्वेषां नक्षत्राणां अन्ते स्थित इति भावं व्यनक्ति।

---

३१. शु.य.सं.–२४/१९

अथ चित्राया अग्रेऽष्टमं नक्षत्रं श्रवणाख्यम्, तत्र तिस्रस्तारा: समवेता इति वृक्षपदं ताक्ष्यर्यरूपेण परिवर्त्य तृतीये पादेऽभिहितम्। श्रवणस्य देवता भगवान् विष्णुः, तस्य च वाहनं गरुडस्ताक्ष्यर्यः इति संगतिरत्राभिसंहिता। अयं च क्रान्तिवृत्तस्य परिधिभागे सन्निविष्ट इत्यरिष्टनेमिरिति विशेषणं तस्य दत्तम्। अरिष्टस्य सर्वक्षयनिवारकस्य सूररथस्य नेमिः परिधिरिति यावत्। अस्य सम्मुखीनं त्रयोदशनक्षत्रान्तरितं पुष्यनक्षत्रमिति तद्देवता बृहस्पतिः निर्दिष्टो मन्त्रान्ते। एताश्चेन्द्रपूषताक्ष्यर्यबृहस्पतिपदवाच्यास्तारा: पूर्वोक्तेषु चतुर्षु नक्षत्रेषु सन्निविष्टास्तेषां नक्षत्राणां योगस्तारा इति तन्मुखेन सर्वमपि नक्षत्रमण्डलमस्माकं शुभप्रदं कल्याणकारकं भवत्वित्याशास्ते मन्त्रेणानेन। तदित्थमधिदैवतं देवाः स्पष्टं व्याख्याताः। अधिभूतं च तेषामग्निवाय्वादिरूपाणि प्रसिद्धान्येव। भौतिकेषु दृश्यमानेष्वग्निवाय्वादयो नियामकाः प्राणाः।

अथ यथा प्राणरूपा देवा वेदे प्रसिद्ध्यन्ति, तथा प्राणिरूपा अपि ते वेदेषु समाम्नायन्ते। **"अन्वाख्याने त्वदुच्यते, इतिहासे त्वत्॥"**[३२] इति शतपथश्रुतौ उत्पत्त्याख्याने सृष्टिप्रक्रियायां देवा अन्ये भवन्ति, इतिहासे त्वन्य इति स्पष्टमुक्तम्। इतिहासस्य सम्बन्धः प्राणिरूपैर्देवैरिति तदाशयः। मन्त्रेपीदं संकेतितम्–

**"सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम।**
**दिवं पृथिव्या अध्यारुहामाविदाम देवान् स्वर्ज्योतिः॥"**[३३]

अत्र द्युलोकारोहणानन्तरं देवानां ज्ञानमाम्नातम्। तेन द्युलोके प्राणभूता देवा निवसन्तीति संकेत्यते। सांख्यदर्शने च चतुर्दशविधप्राणिसर्गनिरूपणावसरे– **"अष्टविकल्पो दैवः"**[३४] इति सत्त्वप्रधानस्य देवसर्गस्य, देवपितृप्राजापत्यादि-भेदेनाष्टविधत्वमुक्तम्। निरुक्तकृताऽपि च दैवतकाण्डे देवाः पुरुषविधाः अपुरुषविधाः वेति विचारयताऽन्ते–**"अपि वा उभयविधाः स्युः"**[३५] इत्युपसंहृतम्।

---

३२. श.प.ब्रा.–११/१/६/९
३३. शु.य.सं.–८/५२
३४. सांख्यकारिका–५३
३५. निरुक्ते दैवतकाण्डे–१/२/३

तत्र हि पुरुषा इव करचरणादिमन्तो देवा उत नदीपर्वतादिवदशरीरा इति विचारमारभ्य मन्त्रेषु करचरणनखाद्या इन्द्रादीनां श्रूयन्त इति तत्तन्मन्त्र-निदर्शनैः पुरुषविधत्वं स्थापयित्वा नदीप्रस्तरादीनामप्येवंविधैरङ्गैः स्तुतिर्दृश्यत इति तद्वदेव कल्पितान्येवाङ्गानि देवानामपि वर्णितानि स्युः। यथा बहुकार्यकर्तृत्वमालक्ष्य सुदृढबाहुकल्पना, सर्वत्र प्राप्तिशीलत्वमालक्ष्य त्वरितपादकल्पना, बुद्धिप्रसारकत्वं च वक्तुमुपदेशप्रदमुखकल्पनेत्यादि कल्पिताकारादिवर्णनेनापुरुषविधत्वं व्यवस्थापितम्। एवमुभौ पक्षावुपपाद्य विनिगमनाविरहादुभयविधत्वमुपन्यस्तम्। उभयविधे भिन्ने-भिन्ने कथमेक-विधशब्दप्रवृत्तिरिति शङ्कामपनेतुमुभयोः परस्परसम्बन्धस्थापनाय– **"अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः, यथा यज्ञो यजमानस्य, एष चाख्यानसमयः"**[३६] इत्युपसंहृतम्। अत्र व्याख्याकाराणां दृश्यते व्याख्याभेदः। केचित् पुरुषविधत्वं मुख्यं मन्यमानाः– अपुरुषविधानि तत्त्वानि तेषां चेतनानामनुध्यानरूपया प्रेरणया प्रचलन्ति। यथाऽऽत्मनोनुध्यानेन शरीरं प्रचलति। तदित्थं लोकेषु कार्यकारीणि तत्त्वानि शरीरभूतानि। तेषां परिचालकाश्च चेतनावन्तो देवाः। तदेव प्रोक्तं पुरुषविधानामर्थाच्चेतनानामेव सतां कर्मात्मनः कर्मसम्पादकाः शरीरविशेषा एतेऽशरीरतत्त्वभूताः स्युः। यथा यजमान एकश्चेतनः, तस्य कर्मभूतश्च कर्मात्मा यज्ञ इत्युच्यते।

एतदेव सिद्धान्तमभ्युपगम्य श्रीशंकरभगवत्पादैः चेतनानां देवानां सर्वरूपेणावस्थातुमस्ति सामर्थ्यमित्युक्तम्। एतदेव च– **"अभिमानि व्यपदेशस्तु विशेषानुगतिभ्याम्"**[३७] इति ब्रह्मसूत्रेण निर्दिष्टम्। सर्वेष्वपि लौकिकेषु दृश्यमानेषु पदार्थेषु तदभिमानिन्यः, अर्थात् तान् पदार्थान् स्वप्रेर्यतया स्वशरीराणीवाभिमन्यमानाश्चेतनावन्तो देवा विराजन्ते; तानेवाभिलक्ष्य 'मृदब्रवीत्', 'आपो अब्रुवन्' इत्याद्याः श्रुतय उपपद्यन्ते। प्राणानां स्वश्रेष्ठत्वख्यापनाय परस्परं विवादो यश्छान्दोग्योपनिषदादिष्वाख्यातः, यच्चेन्द्रविरोचनादीनां प्रजापतिसविधे ब्रह्मविद्याग्रहणाय समुपस्थानं तदप्येवंविधान् अभिमानिन एव लक्ष्यीकृत्य संगच्छते। ते चाभिमानिनो देवा द्युलोके तारामण्डलादिषु

---

३६. तत्रैव भाष्ये

३७. ब्रह्मसूत्रभाष्ये - २/१/५

शरीरिणो निवसन्तीत्येकविधा व्याख्या। अन्ये तु तत्त्वान्येव देवरूपेण मुख्यानि मन्वाना निरुक्ते "अपुरुषविधानामेव सताम्" इत्याकारप्रश्लेषेण छित्वा, तैस्तैर्निर्मितशरीराः कर्मात्मानः कर्मफलभोक्तार एते पुरुषविधाः लोकान्तरेषु निवसन्तः प्राणिविशेषा देवा इति व्याचक्षते। तादृग्देवत्वप्राप्तिमुद्दिश्य एव च यजमाना यज्ञमनुतिष्ठन्तीत्युक्तम्– **"यथा यज्ञो यजमानस्य"** इति। 'अभिमानिव्यपदेशस्तु' इति सूत्रे तु सर्वत्रानुप्रविष्टं परं ब्रह्मैव सर्वाभिमानितया सूत्रितम्। "विशेषानुगतिभ्याम्" इत्युक्त्या एतदेव सूत्रकारेण ध्वनितम्। भाष्यकारेण च सूत्रव्याख्याया अन्ते– "तत्तेज ऐक्षत" इत्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगतायाः इयमीक्षा व्यपदिश्यत इति द्रष्टव्यम्।" इत्येवं परब्रह्मण एवाभिमानित्वं स्पष्टं व्याख्यातम्। यच्चास्माभिः शतपथश्रुतिमुदाहृत्य जगदुत्पत्त्यादिष्वन्ये देवा इतिहासेषु चान्ये इति निरूपितम्। तदेव निरुक्तकृता एष चाख्यानसमय इति स्पष्टीकृतम्। आख्यानविदामर्थात् ऐतिहासिकानामेष समयः सिद्धान्तः। शरीरधारिदेवतावादरूपः इति तदर्थः। परब्रह्मण एव सर्वत्राभिमानितया प्रवेश इत्यपि निरुक्तकृता 'यथा यज्ञो यजमानस्य' इत्युक्त्या ध्वनितम्। यज्ञो नाम विष्णुः परमात्मा यजमानादीनां कर्मपरिचालक इति, स आत्मा भूत्वा सर्वं सम्पादयतीत्यपि व्याख्यातुं शक्यते। तस्मात् परमात्मातिरिक्तस्य जडतत्त्वपरिचयात्मकस्याभिमानिनः स्वीकारे मानाभाव इति द्वितीयपक्षवादिनां मतम्। यथा तथा वा भवतु। परस्परं संघर्षाद्युपपत्तये विशेषत इन्द्रादीनां ब्रह्मविद्याशिक्षणाय प्रजापत्युपगमनादेः श्रुत्युक्तस्योपपत्तये लोकान्तरवासिनः प्राणिभूता देवास्तु तैरप्युपगन्तव्या एव। युक्त्यापि चैते साधयितुं शक्यन्ते।

एतेन विवेचनेन सिद्धमेतत् प्रतिभाति यत् प्राणा एव ऋषयः, प्राणा एव देवाः। तथापि न ऋषयो देवाः न च देवा ऋषयः। यथा सुवर्णसञ्चयेन विभिन्नानि कुण्डलादीनि आभूषणानि निर्मीयन्ते, तत्र सुवर्णमेव कटकम्, सुवर्णमेव च कुण्डलम् किन्तु न कटकं कुण्डलम्, न वा कुण्डलं कटकम्। अवस्थाभेदेन तत्तदवस्थाबोधकानां शब्दानामन्यत्राप्रवृत्तेः। तथैव प्राणरूपत्वे समानेऽपि अवस्थाभेदात् देवा ऋषयश्च पृथक् पृथगेवोच्यन्त इति भावः।

**वैज्ञानिकसिद्धान्ताः–**

वैज्ञानिकसिद्धान्तानां प्रतिपादनाय विज्ञानशब्दार्थविषये पूर्वं किञ्चिद्विचार्यते। 'वि' उपसर्गपूर्वकं 'ज्ञा' धातोः ल्युट् प्रत्यये कृते सति विज्ञानशब्दो निष्पद्यते। तत्र "विभिन्नं वस्तुजातमक्षिलक्ष्यीकृत्य मूलान्वेषण-क्रमेणैकतत्त्वपर्यन्तं गतिर्ज्ञानम्। एकं तत्त्वं निरूढं मत्वा क्रमेण तस्यानन्तरूपता-प्रतिपत्तिर्विज्ञानम्। विशिष्य ज्ञानं हि विज्ञानम्, विविधं ज्ञानम्, विभेदेन ज्ञानं वा विज्ञानमिति।"

**अयमभिप्रायः–** एकस्माद् अनेकस्मिन्नवतरणं विज्ञानं यज्ञविद्या। अनेकस्माद् एकस्मिन्नारोहणं ज्ञानं ब्रह्मविद्या। ब्रह्मविद्यातिरिक्ताः सर्वा अपि विद्या अनेकत्वप्राधान्याद् यज्ञविद्यायामर्थाद् विज्ञान एवान्तर्भवन्ति। आभ्यामेव ज्ञानविज्ञानाभ्यां मानवस्य कृतकृत्यता सम्पद्यते। तत्र विज्ञानमभ्युदयहेतुः, ज्ञानं तु निःश्रेयसजनकम्। इदमेव ज्ञानविज्ञानयुगलं मुख्यो धर्मः। अस्यैव **"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"**[३८] इत्यभ्युदय-निःश्रेयससाधकत्वमाह भगवान् कणादः।

सृष्टिक्रमे विकासवादो वेदपुराणादिष्वपि वर्णितः। आधुनिकै-र्वैज्ञानिकैरपि च स एव सिद्धान्तत्वेन मन्यते। तत्र वैदिकदृष्ट्या पार्थिवेषु प्राणिषु सूर्याकर्षणं यावद्वर्धते स एव प्राणिनां विकासः। प्राणिषु बुद्धिः सौरप्राणेभ्य एव प्रादुर्भवति वर्द्धते चेत्यस्मदाराध्येन गायत्रीमन्त्रेणैव सुप्रसिद्ध्यति। यावदधिकं च यस्मिन्प्राणिनि सौरप्राणजनितं सूर्याभिमुखमाकर्षणं तावदेव स पृथिव्या आकर्षणात् विमुच्यते, बुद्धौ च तस्य प्रागलभ्यं प्रवर्द्धते। प्राणिषु सर्वतः प्रथमं वृक्षलताद्या उत्पद्यन्त इति पुराणेष्वपि सृष्टिप्रक्रियायां सर्वत्रैव स्पष्टम्। मुखे प्रारम्भे भवतीति मुख्यसर्गोऽयं पुराणेष्वाख्यातः। तेष्वेतेषु पृथिव्या आकर्षणमतिदृढम्। नैते स्वस्थानादङ्गुलमात्रमपि चलितुं शक्नुवन्ति। सूर्यस्याकर्षणं त्वेतावदेव यत् क्रमेण वर्धन्ते। बुद्धिविकासश्चैतेष्वनुद्भूतप्रायः। **"अन्तः संज्ञा भवन्त्येते सुखदुःखसमन्विताः।"**[३९] इति भगवता मनुना सुखदुःखाद्यनुभव एषामुक्तः। परमन्तः संज्ञितया तादृशमनुभवं प्रकाशयितुमेते

---

३८. मनुस्मृतौ-१/४९

३९. वैशेषिकसूत्रे-१/१/२

न क्षमन्ते। इतः परं सरीसृपसृष्टिः, ते सरीसृपाः पृथिव्या आकर्षणादेतावद्विमुक्ता यत् स्वस्थानात् प्रचलितुं प्रभवन्ति। किन्तु पृथिव्यां सर्वाङ्गलग्ना एव सर्वदा तिष्ठन्ति। ऊर्ध्वमुत्थातुं कदापि न प्रभवन्ति। अथैतेष्वेव केषाञ्चित् पादा अपि निस्सरन्ति। ते सूर्याकर्षणेन किञ्चिद्भूमेरुत्थापिता। तेषु केचन शतपदाः अत्यल्पं तेषां शरीरस्योत्थानम्, अधिकेन भागेन पृथिव्यैव ते बद्धाः। अथ क्रमेण विकासे ये चतुष्पदा भवन्ति, ते पशुषु मृगेषु च गण्यन्ते। तेषां पृथिव्या अति सूक्ष्मेणांशेन सम्बन्धः। उत्थाय ते यथेच्छं धावन्ति, बहुदूरपर्यन्तं च गन्तुं प्रभवन्ति। बुद्धिरपि तेषां स्थावरसरीसृपाद्यपेक्षया बहुप्रवृद्धा। अनुमानशीला अपि ते भवन्ति, शिक्षिताश्च भवन्ति तस्मात् शब्देनापि बोधयितुं शक्यन्ते। किमन्यत् इदानीन्तु शिक्षयित्वा पशवो मृगाश्चापि मनुष्योचितान्यपि कार्याणि कुर्वन्ति। इतः परमपि विकासे मनुष्यतालाभः। मनुष्यो हि केवलं द्वाभ्यां पादाभ्यां पृथिवीं स्पृशति, शेषं सर्वमप्यङ्गमुत्थापयितुं प्रभुर्भवति। सूर्याकर्षणवशादेवास्य शिर उन्नतं सूर्याभिमुखम्। जातमात्रो बालो हि पूर्वं शिर एवोत्थापयितुं यतते चोत्थापयति च। शिरस एव सूर्येण सम्बन्धाद् बुद्धेरपि तदेवायतनम्। बुद्धिश्चेतरप्राण्यपेक्षया मनुष्येष्वधिकेति नैतत् प्रतिपादयितुमपेक्ष्यते। इतः परमपि यदि विकासः स्यात्तर्हि पृथिव्या आकर्षणाभावेन पृथिवीस्पर्शाभाव एव तत्र प्रसज्येतेति युक्तियुक्तम्। तदेवास्मच्छास्त्रेषु सर्वत्र स्पष्टमुक्तं यद्दैवसर्गप्राणिनः पृथिवीं न स्पृशन्तीति। तेष्वपि चाष्टविधेषु क्रमेण अधिकाधिकः सूर्यसन्निकर्षः। विकासश्च पुरुषं नातिक्रामतीति नेश्वरेणाज्ञप्तम्। तस्मान्मनुष्यादप्युपरितनाः प्राणिनः सन्त्येव। ते च पृथिवीं त्यक्त्वाऽन्तरिक्षे दिवि च यथेच्छं विचरन्ति। यथा हि पश्वादयः शिक्षाविशेषेण श्रमेण च मनुष्यकार्याणि कर्तुं शक्नुवन्ति, मनुष्यास्तु प्रकृत्यै तेषु कार्येषु निपुणाः, तथैव मनुष्योऽपि योगक्रियां शिक्षितः सन् पृथिव्या उपर्यन्तरिक्षे कञ्चित्कालं स्थातुं शक्नोति। दैवसर्गान्तर्गताः प्राणिनस्तु स्वभावादेव पृथिव्या आकर्षणाद् विमुक्ता अन्तरिक्षे दिवि च सदैव विचरणशीलाः। तेषां शरीरस्य सूक्ष्मभूतजन्यतया विद्याप्रभावेणान्तर्धानशीलतया च ते अस्मत्प्रत्यक्षा न भवन्ति। तत एव प्रत्यक्षमात्रपराणानामाधुनिक-वैज्ञानिकानां न तत्रान्वेषणप्रवृत्तिः। अस्मच्छास्त्राणि तु योगबलेन स्थूलसूक्ष्म-

विप्रकृष्टादिदर्शनसामर्थ्यवद्भिः सन्दृब्धानीति तेषु देवादीनां बाहुल्येन प्रतिपादनमिति।

त इमे लोकान्तरस्था देवा अपि द्विविधाः शास्त्रेष्वाख्यायन्ते– आजानदेवाः, कर्मदेवाश्च। सर्गारम्भे एव ये देवत्वं प्राप्ताः ते आजानदेवाः। ये तु मनुष्याः यज्ञादिबलेन देवत्वं प्राप्नुवन्ति ते कर्मदेवाः। कर्मणा देवलोकप्राप्तिरपि श्रुतिषु बहुधाऽऽम्नायते– **"दिवं पृथिव्या अध्यारुहाम"** इति, **"मर्तासः सन्तो अमृतत्त्वमानशुः"**[४०] इति ऋभुसूक्ते।

> **"पूषा त्वेताश्च्यावयतु प्रविद्वाननष्टपशुर्भुवनस्य गोपाः।**
> **स त्वैतेभ्यः परिददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः॥"**[४१]

इत्यत्रापि चाग्नेदेर्वेषु प्रापणं मृतानां श्रूयते। एवं बहुषु मन्त्रेषु द्रष्टव्यम्। एत एव देवाः 'अष्टविकल्पो दैवः' इति सांख्यकारिकायां चतुर्दशविधभूतसर्गे व्याख्याताः।

इतोऽन्येऽपि पृथिवीस्था अपि देवाः श्रुतिष्वेवं श्रूयन्ते। तदुक्तं वाजसनेयश्रुतौ–**"द्वया वै देवाः। अहैव देवाः, अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः।"**[४२]

पृथिवीस्थेष्वप्यस्ति द्वैविध्यम्। उत्तरस्यां दिशि शर्यणावतः पर्वतस्योत्तरभागे प्रकृतिरचितां देवसंस्थामुपजीव्य पुरा पृथिव्यामपि देवसंस्था प्रकल्प्यते स्म–**"देवविशः कल्पयितव्यास्ता अनुमनुष्यविशः कल्प्यन्ते"**[४३] इत्याद्यासु ब्राह्मणश्रुतिषु परस्परं संघर्षाः परस्परं सम्मेलनानि चैतेषामेव देवानां निरूपितानि। **"सहस्राश्वीन वा इतः स्वर्गो लोकः"**[४४] अर्थात् एकस्मिन्नहनि यावन्ति योजनानि अश्व एति वै। सोऽश्वैकाहगमो देशो यात्राश्वात् खो विधीयते।। इत्यैतरेयश्रुत्यादिषु स्वर्ग-लोकस्य संकेतः कृतः। स्वर्गलोकविषये किञ्चिदन्येऽप्यर्था अत्र प्रस्तूयन्ते। स्वः लोकम्प्रति

---

४०. ऋ.सं.-१/११०/४

४१. ऋ.सं.-१०/१७/३

४२. श.प.ब्रा.-२/२/२/६

४३. ऐ.ब्रा.-२/३२

४४. ऐ.ब्रा.-२/१७

गमनमिति स्वर्गः। स्वः लोकः कुत्र? इत्याशङ्कायां सप्तभुवनानां दर्शनम्–

(भूः-मनः-अन्नम्)–पृथिवीलोकः

(रोदसी) भूः – (भुवः-प्राणः-आपः)

(स्वः-वाक्-तेजः)

(क्रन्दसी) भुवः – (महः-वायुः-वायुः)–अन्तरिक्षलोकः

(जनः-तेजः-वाक्)

(संयती) स्वः – (तपः-आपः-प्राणः)–द्युलोकः

(सत्यम्-अन्नम्-मनः)

अत्र पृथिवीलोकः जीवलोकः, अन्तरिक्षलोको देवलोकः, द्युलोकश्च पितृलोक इत्येते त्रयो लोकाः। द्वितीयक्रमे पृथिवी जीवलोकः भूरित्येतेन व्याख्यातः, अन्तरिक्षलोकः देवलोकश्च भुवः, द्युलोकः यः खलु पितृलोकः स स्वः इत्येतेन व्याहृतिमाध्यमेन विख्यातः। तत्र स्वः लोकं प्रति गमनं इत्युक्त्या पितृलोकम्प्रतिगमनमेव सिध्यति। अद्यत्वेऽपि श्राद्धक्रियायां द्वादशाहकृत्यसम्पन्नताया अवसरे सपिण्डीक्रियायाः प्रधानता दृश्यते। सपिण्डीक्रियया यस्य प्रेतस्य श्राद्धो भवति तस्य अन्यैः पूर्वजैः सह सम्मेलनं कारयति कर्त्ता। अतः सपिण्डीक्रियायामत्र पञ्चमासिककर्म सम्पाद्यते। तेन तस्य प्रेतस्य पञ्चत्वस्य प्राप्ति–विच्छेदपूर्वकं सपिण्डत्वप्राप्ति-रेवावकल्प्यतेति भावः।

पुराणेष्वपि अस्य स्वर्गलोकस्य विस्तृतं विवरणमुपलभ्यते; दशरथादीनां भारतीयानां राज्ञां देवसाहाय्यार्थं देवासुरयुद्धे गमनम्, महाभारते तीर्थयात्रां कुर्वतां युधिष्ठिरादीनां पाण्डवानां स्वर्गदर्शनम्, कुबेरेण समागमः, अर्जुनस्येन्द्रसमीपेऽध्ययनम्, बहुकालपर्यन्तं स्वर्गे निवासः, निवातकवचादीनां देवद्रुहां संग्रामे हननम्, द्वैतवने दुर्योधनादीनां गन्धर्वैर्युद्धमित्यादि सर्वमेतानेव स्वर्गदेवादीनधिकृत्य सुसंगतं भवति। भारतवर्षे प्राक्तनाः विशिष्टा विद्वांसो महाराजाश्च मनुष्यदेवपदेन व्यपदिश्यन्ते। एषा भूलोकवासिनां देवानां द्वितीया विधा।

तदित्थं संकलनया सप्तविधा देवा अत्र प्रदर्शयितुं शक्यन्ते– १. मुख्याः प्राणरूपाः देवाः २. तेषामध्यात्मं रूपम्, ३. अधिदैवतं तारामण्डलेषु रूपम्, ४. अधिभूतमग्निवाय्वादि, ५. लोकान्तरस्थाः प्राणिनो देवाः, ६. भूमण्डलस्थाः सुमेरुप्रान्तवासिनो देवाः, ७. भारतस्य विशिष्टा विद्वांसो वीराश्च देवाः। एषां परस्परं कः सम्बन्धः?

कुतश्चैकस्यैव देवशब्दस्य तद्विशेषवाचकानामिन्द्रवरुणादिशब्दानां च विभिन्नेषु प्रवृत्तिरित्येव वैदिकं रहस्यम्। तदेवावगन्तुं पूर्वे ब्राह्मणा दीर्घं ब्रह्मचर्यं चरन्ति स्म; ब्रह्मचर्येण तपसा च गूढतमं रहस्यमवगच्छन्ति स्म। तद्रहस्यम् अवगत्य च यज्ञादिविधानेन स्वं देवरूपेण परिणमयन्ति स्म। तदेव भारतीयानां सर्वस्वभूतं रहस्यं वेदविरोधिनां प्रबलैराक्रमणै- र्विलुप्तप्रायम्। एतद्रहस्यज्ञानाधीनैव वैदिकी यज्ञप्रक्रिया, सापि विलुप्तप्राया।

तिस्र एव देवता इति भगवता यास्केन निरुक्ते सिद्धान्तितमित्युक्त-पूर्वम्। अग्निः पृथ्वीस्थानीयः, वायुर्वा इन्द्रो वा अन्तरिक्षस्थानः, सूर्यो द्युस्थान इति त्रयो देवाः। एते च न दृश्यमानभौतिकपिण्डरूपाः, अपि तु तदनुप्रविष्टप्राणरूपा इत्यसकृदुक्तम्। तेषां तद्विशेषाणां च स्तुतिरेव सर्वेषु वेदेषु समुपलभ्यते। स्तुतिरूपेणैव च तेषां देवानां गुणधर्मास्तत्कार्याणि च निरुच्यन्त इति वैदिकी शैली। यथा ऋक्संहितायां प्रथमोऽग्निस्तुतिपरो मन्त्रः–

**"अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम्॥"**[४५]

अत्राग्नेः पञ्चविशेषणानि–पुरोहितम्, यज्ञस्य देवम्!, ऋत्विजम्, होतारम्, रत्नधातममिति। एतानि सर्वाण्यग्नेः स्वरूपस्य कार्यस्य च बोधकानि। प्रथमं विशेषणं पुरोहितमिति। पुरः अग्रे, हितम्=निहितम्, स्थापितमित्यर्थकम्। अस्यायमभिप्रायः–यत् त्रयोऽपि देवाः अग्निपदेन तत्र तत्रोच्यन्ते। इह त्वस्मत्पुरस्थितस्य पार्थिवस्याग्नेरेव स्तुतिरूपेण विवरणं प्रस्तुतमिति **"यत्किञ्चिद्दार्ष्टिविषयकमग्निकर्मैव तत्"**[४६] इति निरुक्तकृतोक्तम्।

---

४५. ऋ.सं.–१/१/१

४६. निरुक्ते दैवतकाण्डे–१ अध्याये

यदस्माभि: पृथिव्यां भूतभौतिकं किमपि पिण्डादि दृश्यते तदग्नेरेव रूपम्, प्राणेनाग्निनैव स्थूलावस्थायां भूतरूपतां गतेन सर्वे पार्थिवा: पिण्डा: निर्मिता:। स भूतरूपतां गतश्चित्योग्निर्मर्त्य:। **"तत् सृष्ट्वा तदेवानुप्राविशत्"**[४७] इति न्यायेन चितेनिधेयो भूत्वा तत्रानुप्रविष्टस्तान् सर्वान् परिपाति; विलयात् रक्षतीति निरुक्ते, अस्मिन् मन्त्रे पुरोहितपदेन च बोधितम्। एवमग्ने: सर्वेषु पुर: स्थितेषु पार्थिवपदार्थेषु स्थितिरनेन विशेषणेन बोधिता। अन्येष्वाग्नेयेषु मन्त्रेषु सा विशेषेण स्पष्टीकृता।

**"गर्भो अस्योषधीनां गर्भो वनस्पतीनाम्।**
**गर्भो विश्वस्य भूतस्याग्नेर्गर्भो अपामसि।।"**[४८]

इत्यादिषु मन्त्रेषु द्वितीयमग्नेर्विशेषणं पूर्वोक्ते मन्त्रे यज्ञस्य देवमिति। सर्वेषु यज्ञेष्वग्निरेव दीव्यतीत्ययमेव यज्ञस्य देव:। यज्ञो वैदिकस्य विज्ञानस्य मुख्यं गम्भीरं च तत्त्वम्।

अथ तृतीयं विशेषणम् 'ऋत्विजम्' इति। अस्यार्थ:-ऋतुभिर्यजतीति, ऋतून् यजतीति वा। ऋतवो हि सौरेणाग्निना चन्द्रसहकृतेन प्रादुर्भाव्यन्ते। सूर्यमण्डलाद् पृथिव्यामागच्छन्नग्नि: 'ऋत' नाम्ना परिभाष्यते। सूर्यस्य पृथिव्याश्च सम्बन्धभेदेन, सौराग्ने: पृथिव्यामागमने तारतम्यं भवति। षण्मासान् स क्रमेण वर्धते। षण्मासांश्च क्रमेण ह्रसते। एवं वृद्धिह्रासाभ्यां पूर्णे संवत्सरे संवत्सराग्नेरेकं चक्रं परिपूर्यते। तस्याग्ने: सम्बन्धेनैव ऋतूनां नामान्यपि संस्कृतभाषायां संघटितानि। अघमर्षणसूक्ते-**"ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।"**[४९] इति मन्त्रोक्त्यनुसारं तपसि माघमासे तस्य पृथिव्यामागमनमारभ्यते। आगच्छन्नेव सोऽग्नि: पार्थिवेषु पदार्थेषु वस्तुमुपक्राम्यतीति प्रथमो वसन्तऋतु:। वसन्तोऽत्राग्नय इति कालोऽपि वसन्त उक्त:। वसंतश्च क्रमेण यदा सर्वान् पदार्थान् गृह्णाति अर्थात् स्वायत्तीकरोति तदा गृह्णन् ग्रीष्मो भवतीति कालोऽपि ग्रीष्म उच्यते। ग्रहधातोर्ग्रीष्म शब्दनिष्पत्ति:। यदा क्रमेणातिवृद्धिं गच्छति तदा वर्षापदेनोच्यते।

---

४७. तै.उ.-२/६

४८. अथर्व-५/२५/७; यजु सं.-१२/३७

४९. ऋ.सं.-१०/१९०/१

वर्धा एव वर्षा। भगवता पाणिनिनाऽपि केषुचित्तद्धितप्रत्ययेषु वर्षादेशो विहितः। यत्प्रचलितं तदेव पाणिनिना विहितम्। भवतु नाम, एवं त्रिषु ऋतुष्वर्थात् षण्मासेषु ऋताग्नेर्वृद्धिर्जाता। परतस्तु 'वर्धते, विपरिणमते, अपक्षीयते" इति यास्कोक्तषड्भावविकारक्रमेण ह्रास आरभ्यते। शीर्णो भवितुं यदा आरब्धस्तदा शरत्कालः, ऋताग्निः शरद्भवतीति कालोऽपि हेमन्तः। शीर्णो भवन् यदा हीनः, स कालो हेमन्तः। हीना अग्नय इति कालोऽपि हेमन्तः। अत्यन्तशीर्णे च शिशिर इति। अनन्तरं पुनरपरः संवत्सराग्निरागन्तुमुपक्राम्यतीति पुनर्वसन्ताद्या ऋतव आवर्तन्ते। यावान्ऋताग्नेर्ह्रासः, तावत्येव सोमस्य वृद्धिः। सोमस्यायतनं चन्द्रमण्डलमिति चन्द्रस्यापि ऋतुजनकत्वं मन्त्रान्तरं उक्तम्। अनेन ऋताग्निना संसृज्य पार्थिवोऽग्निः पृथिव्यामोषध्यादीनि पाचयति। स ऋतुभिर्यजतीति संगतिं करोति, तस्मात् ऋत्विक् इत्युक्तः। 'होतारम्' इति चतुर्थं विशेषणं ह्वातारमिति निरुक्तकृता व्याख्यातम्। 'ह्वेञ्' धातोः सम्प्रसारणान्निष्पन्नो होतृशब्द इति तदाशयः। येन देवानामाह्वाता इत्यर्थः सिद्ध्यति। एतेनैव सह देवाः, आन्तरिक्ष्या दिव्या वा प्राणाः पृथिव्यामागच्छन्ति। जुहोति पक्षे यज्ञेषु यजमानेन हुतं द्रव्यं देवेभ्यः प्रापयतीत्यस्मादेव कारणादयमग्निर्होतृपदेनोच्यते। अर्थाद्यज्ञेषु देवानामाह्वानं हुतद्रव्याणि च देवेभ्यः प्रापणमित्यनयोः कर्मणोः सम्पादयिता अग्निरेव तस्माद्धोता कथ्यते।

अथ पञ्चमं विशेषणं 'रत्नधातमम्' इति तु स्पष्टं वैज्ञानिकम्। रत्नानि सुवर्णमणिप्रभृतीनि यान्युत्पद्यन्ते, तानि पार्थिवोऽग्निरेव विशेषेणोत्पादयति। अस्माकं न्यायशास्त्रेऽपि सुवर्णादिकं तैजसमेव मन्यते। आधुनिका वैज्ञानिका अपि पृथिवीस्तरेष्वेव सुवर्णमणिप्रभृतीनामुत्पत्तिं व्याचक्षते। तैत्तिरीयब्राह्मणे तु– सुवर्णोत्पत्तेः वैज्ञानिकः प्रकारो लौकिक्या भाषया समाम्नातः–

**"आपो वरुणस्य पत्न्य आसन् ता अग्निमभ्यध्यायन्, ताः समभवन् तस्य रेतः परापतत्, तद्धिरण्यमभवत्"**[५०]

---

५०. तै.ब्रा.–१/१/३/८

वरुणस्य देवस्याधीने रसभागेऽग्नेः प्रवेशाद् हिरण्योत्पत्तिर्भवतीति श्रुतेराशयः। एवंविधा विषया परीक्षण-साध्याः। देवतत्त्वं विज्ञायैषां परीक्षणं क्रियेत चेत्, महत्परिवर्तनं जगति सम्भाव्यते। स्वल्पाक्षरैरेव विशेषणैः कियन्ति गम्भीराणि विज्ञानानि वेदे प्रतिपादितानि इत्येव निदर्शनमिदम्।

एवं यजुर्वेदे वायुदेवताको मन्त्रः–

**"इषे त्वोर्जेत्वा वायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मण आप्यायध्वम्"**[५१] इति।

अत्रापि 'देवोवः सविता प्रार्पयतु' इत्यनेन सूर्यरश्मिसंघर्षणादेव वायौ गतिर्जायत इति बोधितम्। 'सवितृप्रसूत एष पवते' इति ब्राह्मणेन च स्पष्टीकृतम्। प्राणिषु ऊर्क्=ओजः=बलम्, इट्=अन्नादिकं च वायुनैवोत्पाद्यत इति 'इषे, ऊर्जे' इत्येताभ्यां पदाभ्यां बोधितम्। वायुसहकारेणैव च यज्ञो निष्पाद्यत इत्यपि 'श्रेष्ठतमाय कर्मणे आप्यायध्वम्' इत्युक्त्या समुपदिष्टम्। **'यज्ञो वै श्रेष्ठतमं कर्म'**[५२] इति ब्राह्मणश्रुतिराह।

सूर्यस्य तु विज्ञानं वेदे बहुतरं विजृम्भते। स हि वेदेषु सर्वासां प्रजानां प्राण एवोक्तः। दिङ्मात्रमिह प्रदर्श्यते अयं सूर्यस्य प्रसिद्धो मन्त्रः–

**"आ कृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च।**
**हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्॥**[५३]**"**

अत्र कृष्णेन रजसाऽऽवर्तमानः, अमृतं मर्त्यं च निवेशयन्, सविता भुवनानि पश्यन्, हिरण्ययेन रथेनायातीति पञ्चविशेषणानि सूर्यस्य श्रूयन्ते। चत्वारि नामपदानि एकं व्याख्यातमिति। तेषु प्रथमेन 'कृष्णेन रजसा' इति पदेनाकर्षणविज्ञानं बहवो विद्वांसः संकेतितं मन्यन्ते। सवितुर्देवस्य, रजः= लोकः= सूर्यमण्डलम्, कृष्णम्=आकर्षणशीलमिति यावत्। अत्राकर्षणस्य संकेतो मन्यतां न वा, आकर्षणविज्ञानं तु स्फुटतरमन्येषु मन्त्रेषु श्रूयते, यन्न केनाप्यपलपितुं शक्यम्। दृश्यताम् तावत्–

---

५१. शु.य.सं.-१/१
५२. श.प.ब्रा.-१/७/१/५
५३. ऋ.सं.-१/३५/२

**"स सूर्यः पर्युरु वरांस्येन्द्रो ववृत्याद्रथ्येव चक्रा।**
**आतिष्ठन्तमपस्यं न सर्गं कृष्णा तमांसि त्विष्या जघान।।"**[५४]

वेदभाष्यकारः श्रीमाधवाचार्य इत्थमत्र व्याचष्टे "सूर्यरूपोऽयमिन्द्रः, वरांसि=तेजांसि, रथचक्राणीव परिववृत्यात्=परिवर्तयतीति भ्रामयति। त्विष्या=स्वतेजसा च कृष्णवर्णानि तमांसि जघान=प्रहरति स्म। यथा तीव्रगामिनमपि कदाचित् स्थितमश्वं सारथी प्रहरति। अत्र पूर्वार्द्धे तेजोमण्डलानां भ्रामणं स्पष्टमेवोक्तम्। श्रीसत्यव्रतसामश्रमिप्रभृतयस्तु वरांसीति पदं लोकार्थकं व्याचक्षते। तद्रीत्या पृथिव्यादिमण्डलानां तारामण्डलादीनां च भ्रामयन् आयातीति स्फुटतममाकर्षणविज्ञानं भवति। इतोऽप्यधिकतया स्फुटं प्रश्नोत्तरपूर्वकमाकर्षणविज्ञानं दृश्यताम्–

**"अनवर्णे इमे भूमी इयं चासौ च रोदसी।।**
**किंस्विदत्रान्तरा भूतं येनेमे विधृते उभे।**
**विष्णुना विधृते भूमी इति वत्सस्य वेदना।।**[५५]
**इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्ये।**
**व्यष्टभ्नाद्रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः।।**[५६]**"**

अत्र पृथिवीमण्डलं सूर्यमण्डलं च केन धृतमिति पूर्वं प्रश्नः कृतः। विष्णुना रोदसी=द्यावापृथिव्यौ विधृते इत्युत्तरम्। अस्य विज्ञानस्याविष्कारको वत्सऋषिरित्यप्युक्तम्-"वत्सस्य वेदना" इति। अत्रांशे 'इरावती' इत्यादिमन्त्रोऽपि प्रमाणत्वेनोपन्यस्तः।

तत्र पूर्वार्द्धे यजमानायान्नतृणादिदानपरे भवितुं द्यावापृथिव्यौ प्रार्थिते, उत्तरार्द्धे तु विष्णुः स्तुतः। "हि विष्णो! भवान् द्यावापृथिव्यौ व्यष्टभवात्=समानान्तरे रक्षति, पृथिवीं च मयूखैः=स्वकिरणैः, दाधर्थ=धृतवानसि" इति द्वादशस्वादित्येष्वन्तिमो विष्णुरिति पुराणादिष्वादित्यनामसु स्पष्टम्। ऐतरेयब्राह्मणस्यारम्भे एव च– **"अग्निर्देवानामवमो विष्णुः परमः,**

---

५४. ऋ.सं.-१०/८९/२
५५. तै.आ.-१/८/२
५६. ऋ.सं.-७/९९/३

**तदन्तरेण सर्वा अन्या देवताः"**[५७] इति यदाम्नातम्, तेनाप्यन्तिमे द्युलोके स्थितस्यादित्येष्वपि चरमस्य विष्णुपदवाच्यता स्फुटीभवति। यस्तु सर्वजगदुत्पत्तिस्थितिसंहारकारकः परमात्मा विष्णुनाम्नोपास्यते; स ईश्वरः। न स देवमध्ये गण्यते, देवानां जीववर्गान्तःपातित्वात्। निघण्टुष्वपि द्युस्थानदेवेष्वेव विष्णुपदं पठितम्। अत्रैवंविधो वैदिकविज्ञानस्योत्कर्षो ध्येयो यदाधुनिकं विज्ञानं सूर्यमण्डलाकर्षणादेव पृथिवी धृता वदति। वैदिकं तु विज्ञानं सूर्यमण्डलेऽपि प्राणविशेषो विष्णुरेवाकर्षणे प्रधान इत्यपि सुसूक्ष्मं परिचाययति। एवं शतशो मन्त्रेष्वाकर्षणविज्ञानचर्चा। भवतु नाम 'कृष्णेन रजसा आवर्तमानः' इति विशेषणं त्वन्यदपि महद् रहस्यं संकेतयति, यद्रजःपदवाच्यलोकरूपं सूर्यमण्डलं कृष्णवर्णम्, तस्य रथपदवाच्य[५८] किरणजालं तु हिरण्ययम्= स्वर्णवर्णम्। मण्डलेन विचरन्नादित्यप्राणो यदाऽभितो व्याप्ते सोममण्डले प्रविशति तदा तत्संघर्षेण सोमः प्रज्ज्वलति, तदेव सोमस्य किरणजालम्। तदेव च प्रकाशम्। आधुनिकाः वैज्ञानिकाः सूर्यमण्डले महान् भागः कृष्णवर्णः मन्यन्ते, स च वृद्धिह्रासशील इति प्रतिबिम्बग्राहक-यन्त्रसाहाय्येन वदन्ति। परं श्रुतिस्तु सर्वमपि मण्डलं कृष्णं वदति। सोमप्रज्वलनजनितस्य हिरण्यवर्णस्य मण्डले प्रवेशः, मण्डले कृष्णवर्णस्य वृद्धिह्रासौ च प्रतीयेते इत्येव अनुमिनुमः। 'अमृतं मर्त्यं च निवेशयन्' इति विशेषणेनामृतरूपाणां महर्लोकादीनां मर्त्यरूपादीनां पृथिव्यादीनां च निवेशनं धारणं सूर्यायत्तमेवेत्युक्तम्। तदेतत् **"तिस्रोभूमीर्धारयंस्त्रीरुतद्यून्"**[५९] इत्यादिषु मन्त्रेषु स्फुटीकृतम्। सप्तलोकविज्ञानमिदं पूर्वं संक्षेपेण विवृतम्। सवितेति विशेषणेन सर्वोत्पादकत्वम्, भुवनानि पश्यन्निति च सर्वप्रकाशकत्वं स्फुटमाख्यातमेव।

**"उदुत्यं जातवेदसं देवं वहन्ति केतवः।**
**दृशे विश्वाय सूर्यम्।।"**[६०]

इति सुप्रसिद्धे सूर्योपस्थाने द्विजैः प्रत्यहमुच्यमाने मन्त्रे केतवः=

५७. ऐ.ब्रा.-१/१
५८. "आत्मैवैषां रथः" निरुक्ते: ७/४/१७
५९. ऋ.सं.-२/२७/८
६०. ऋ. १/५०/१, अथर्व-१३/२/१६, साम.-३१, शु.य.सं.-७/४१, तै.सं.-१/२/८/२

किरणाः, विश्वाय दृशे=सर्वं लोकं दर्शयितुं, जातवदेसं देवम्, उद्वहन्ति=उपरि नयन्तीत्युच्यते। परं सूर्यस्य सर्वस्योपरिष्टात् स्थितस्य, उद्वहनेन उपरि प्रापणेन, लोकानामस्मदादीनां सूर्यदर्शनं कथं स्यादित्यस्ति विचारविषयः। किरणा अधो नयन्तीत्युच्येत चेत्, तत्तु उपपद्येत, परं मन्त्रस्तूर्ध्वनयनं ब्रवीति, तेनैव च लोककर्तृकं दर्शनमप्यामनतीति कथमेतदुपपाद्यताम्। अत्रेदमेव वैज्ञानिकं रहस्यं स्फुटीभवति, यत् सूर्योदयात् प्रागेवोपरितने वायुमण्डले सूर्यकिरणाः पतिता वायौ परिव्याप्ते द्रवरूपे सोमे वक्रीभूय पृथिवीं प्राप्ता उदयात्प्रागेवास्मान्दर्शयन्तीति उदयाचलादधो वर्तमानमेव सूर्यमुद्वह्यास्मान्दर्शयन्तीत्युक्तम्। तेनैव किरणसोमसम्पर्केण दृश्यमानः सूर्यः रक्तवर्णस्तदात्वे प्रतीयते। ते च वक्रीभूयागताः किरणा हानिकारका इत्युदयमानस्य सूर्यस्य दर्शनं स्मृतिषु प्रतिषिद्धम्। तदुपद्रववारणायैव च तस्मिन् काल एव सूर्यार्घ्यदानं विहितम्, येन वक्रीभूताः किरणा जलसम्पर्कात् पुनर्वक्रीभूय सरलतां गच्छेयुरिति।

एवं विधं गहनतरं विज्ञानमतिस्वल्पेष्वक्षरेषु वेदे विद्योतते। सर्वमिदं परीक्ष्याविष्क्रियेत चेन्महानुपकारो जगतो भवेदित्युक्तमेवेति।

### पञ्चमोऽध्यायः

## वैदिकऋषिभिर्जगतो मूलकारणस्यान्वेषणम्

वैदिका मनीषिणः परमतत्त्वस्योद्घोषकाः स्वीयां आश्रमरूपि-प्रयोगशालायां यज्ञशालायां वा कृष्णाजिनेषूपविष्टाः सन्तः न केवलमैहिकानामेवापितु पारलौकिकगतिविधीनामपि सम्यगन्वेषणं कुर्वन्तः यं यं तत्त्वं यं यं भावमनुगच्छन्तं दृष्टवन्तः तथैव प्रकाशनं कृतवन्तः। परमवैज्ञानिकानां शिष्याः तत्तद्विज्ञानभूतानां परिभाषाणां तत्तदर्थमवगच्छन्तः तपः श्रमेण यदा प्रकटितवन्तस्तदा तानि विज्ञानानि मन्त्ररूपेण ऋषिमुखान्निर्गत्य भूलोके अवतरितवन्तः। तेषामेव मन्त्राणां यत्सामूहिकं स्वरूपं तच्छ्रुतिः। श्रुतौ विद्यमानानां मन्त्राणां शब्दराशीनां श्रवणमाध्यमेन प्रशिष्यैर्ग्रहणत्वादस्याः परम्परायाः नाम श्रुतिपरम्परा सञ्जाता। कालान्तरे विज्ञानबोधकानां श्रुतीनां 'वेद' इत्येतत्पदेन व्यवहारः प्रचलितः। तदाऽरभ्य 'वेद' इति पदेन वैज्ञानिकानां सूत्रसमूहभूताः मन्त्रा एव ज्ञायन्ते। तेषां मन्त्राणां त्रिविधत्वाद्वेदत्रयीति कथ्यते। परं संकलनदृष्ट्या चतुर्षु (क्रमेषु) भागेषु विभक्तत्वात् संहिताः चतस्रो वर्तन्ते ऋग्यजुस्सामाथर्वभूताः।

अद्यत्वे 'वेद' इति पदश्रवणात् ऋगादयश्चतस्रः संहिताः परिगृह्यन्ते। यद्यपि 'वेद' इत्येतत्पदस्य पाणिनीयव्याकरणानुसारेण विद्धातोनिर्मितिर्ज्ञायते। महर्षिणा पाणिनिना चतुर्ष्वर्थेषु विद्धातोः प्रयोगो दर्शितः। येन वेदशब्दस्य पुरुषार्थचतुष्टयानां संसिद्धौ साहाय्यं सिध्यति। परं वेदभाष्यकारेण श्रीमता सायणाचार्येण स्वकीयायां ऋग्वेदभाष्यभूमिकायां वेदपदस्यार्थं कुर्वता प्रोक्तं यत्–

**"इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः।"**[1] एतस्याः परिभाषायाः प्रमाणमपि तत्रैवोक्तम्–

---

१. ऋग्वेदभाष्यभूमिकायां सायणाचार्यः।

"प्रत्यक्षेणानुमित्या वा यस्तूपायो विद्यते।
एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥"[२]

अर्थादस्मिंल्लोके यद्वस्तु विद्यते तस्य परिशीलनं तु कृतमेव ऋषिभिः, परं यस्य वस्तुनः प्रत्यक्षानुमानाभ्यां न कश्चिदुपायः प्राप्तः, तद्विषयेऽपि तैर्यदनुसन्धानं कृतं तेषामाविष्काराणां सूत्ररूपेण मन्त्ररूपेण वा प्रवचनमेव वेदस्य वेदत्वं साधयति।

आधुनिके युगे प्रकृतेः रहस्यानां यदन्वेषणं तदेव वैज्ञानिकैः 'आविष्कारः' इत्युच्यन्ते। यतो हि प्रकृतेर्यत् स्थूलस्वरूपं तत्त्वं वा तस्यान्वेषणं यद्यपि सरलं तथापि तत्र विद्यमानानां सूक्ष्मभावेन विशिष्टतत्त्वानामन्वेषणं कठिनं भवति। अतः प्रकृतेः सूक्ष्मस्थूलतत्त्वानां गवेषणात्प्राक् एतज्ज्ञानमावश्यकं यत् कथं सृष्टिर्निर्मिता किमर्थञ्च? तत्र किमर्थं सृष्टिरुत्पादिता एतस्य विषयस्य वर्णनं तु बहुत्रोपलभ्यते। परं कथमियं सृष्टिः सर्जिता एतत्तु वैज्ञानिकमेव तथ्यम्।

यद्यपि अस्माकं तत्त्ववेत्तार एतस्मिन्विषये समानं मतं प्रस्तुवन्ति स्म यदस्यां सृष्टौ न किमपि निर्मीयते न विलीयते च, केवलं रूपान्तरणमेव सम्भवति। अतः सृष्टिनिर्माणस्य प्रश्न एव नोदेति। यथा गीतोपनिषदि भगवता श्रीकृष्णेनोक्तम्–

"नासतो विद्यते भावो नाभावो विद्यते सतः।"[३]

अर्थाद् भावात् भावस्योत्पत्तिर्न भवितुमर्हति। विषयेऽस्मिन् आधुनिकवैज्ञानिकस्य श्रीमतः डाल्टनमहोदयस्य सिद्धान्तानुसारं पदार्थस्य विनाशो न भवति। यदि पदार्थः अनन्तोऽस्ति चेत् अनादिरपि भवेदेव। परमनादिसृष्टौ परिवर्तनमर्थादुत्थान-पतनयोः सृजन-संहारयोश्च युगलत्वं दृश्यते। अस्य मूलं कारणं गतिशीलता गतिहीनता चास्ति। उभयोरेव गत्योः संकेतो भवति यदांशिकं निर्माणमांशिको ध्वंसश्च भवतीति। एतावुभावेव निर्माणध्वंसौ प्रवाहेणानादिरुच्यते। यथा लोके नद्याः सकाशान्नलिकाः

---

२. ऋग्भाष्यभूमिकायाम्–उल्लेखः वैदिकवाङ्मयस्येतिहासे विषयप्रवेशे सप्तमाष्टमपृष्ठयोः।
३. श्रीमद्भगवद्गीतायाम्–२/१६

निर्मीयन्ते। तासां नलिकानां जलानि स्रोतसा अग्रे आगच्छन्ति, परं यदा जलस्य गतिर्मन्दत्वमाप्नोति चेत्तदा तत्रावरोधो निर्मीयते। यत्रोर्ध्वभागादधोभागे जलानि निपात्य पुनस्तत्र गतिर्दीयते। एवमेव मूला प्रकृतिः विकृतिरूपमवाप्य सृष्टिरूपेणास्माकं समक्षमागच्छति। नियतसमयपर्यन्तं आदिगत्या निष्पंदिता भवति, गतिहीना सती पुनः मूलरूपम्प्रति गच्छति। अयमेव क्रमः 'प्रलयः' इत्युच्यते। परं सृजनप्रलययोरेषः क्रमः अनादिरनन्तश्च वर्तते। प्रत्येके नूतनसर्जने एतत् केनचित् नियन्त्रणेन यथापूर्वं रच्यते।

**"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।"**[४]इति सिद्धान्तानुगुणम्।

अत्र प्रश्नः समुदेति यत् किमियं रचना आकस्मिकी भवति यथा पाश्चात्याः स्वीकुर्वन्ति? आकस्मिकशब्दस्य परिभाषा तु इत्थमस्ति यत्– एकस्याः सकारणघटनायाः अपरस्यां सकारणघटनायां सम्मेलनम्। अतः आकस्मिकी स्थितिः सकारणस्थितेरनन्तरं तस्य फलमात्रञ्चास्ति। पुनः सृष्टौ तु सर्वत्र नियम-बुद्धि-प्रयोजनञ्च दृश्यते। सामान्यतः हाइड्रोजन-नामकः पदार्थः आकस्मिकतया ऑक्सीजननामकेन पदार्थेन युक्तं भवितुमर्हति, परं तस्य अणुद्वयं ऑक्सीजनपदार्थस्य एकेनैवाणुना युक्तो भवेत् तथा चोष्णतां प्राप्य युक्तो भवेत् एतज्ज्ञानं प्रयोजनञ्च नाकस्मिकं वर्तते।

**जगतो वास्तविकत्वम्–**

यदा-कदाचित् कतिपयाः विचारकाः कथयन्ति यत् इदं सर्वं दृश्यमानं जगद् नास्त्येव अपितु एतत्सर्वं स्वप्नवत् काल्पनिकमेवास्ति। ये जनाः इमं संसारं स्वप्नवत् काल्पनिकं कथयन्ति तेषु न कश्चिदेवं कथयति यदिदं जगदस्त्येव नहि। केचन वदन्ति यत् १. संसारः परिवर्तनशीलोऽस्ति अतः अवास्तविकः। २. जगदिदं काल्पनिकं वर्तते यतो ह्यत्र वास्तविकं सुखं नोपलभ्यते। ३. इदं वास्तविकं नास्ति यतोऽत्र वास्तविकाः सिद्धान्ताः न दृश्यन्ते। परं यदि संसारेऽस्मिन् लघुसिद्धान्तानां पद्धतीनामन्तः कश्चिदेको बृहत् सिद्धान्तो निहितो वर्तते चेदस्यार्थो नैतद्भवति यदत्र लघुसिद्धान्ताः सन्त्येव नहि। वस्तुतोऽस्मिन् ते सर्वे उभयनिष्ठाः

---

४. ऋग्वेदे-१०/१९०/२

सन्ति। नैव चान्यान्यसिद्धान्तः एकया पद्धत्या घटनया च विमुखो भवति। यदि घटनाः स्वप्नवत् अवास्तविकाः सन्ति चेत् तत्र निहितं मूलकारणं कदापि भ्रामकं अवास्तविकञ्च न भवति। यदिदं जगदस्ति सृष्टिप्रलययोः चक्रे च वारम्वारं समागच्छति चेत्तस्य चलितसत्रस्य सर्जनं कथं कदा चाभवत्, एतद्विचारः परमावश्यकः।

**सृष्टिसंरचनाक्रमः–**

सृष्टिसंरचनाविषये वेदेषु विभिन्नस्थलेषु विभिन्नानि तथ्यान्युपलभ्यन्ते। सर्वेषामपि विभिन्नतथ्यानामवलोकनेनेदमेव सिध्यति यदस्य विषयस्य प्रतिपादनमाधिदैविकाधिभौतिकाध्यात्मिक्या च दृष्ट्या त्रिभिस्सम्पादयितुं शक्यते।

निरुक्तशास्त्रप्रवक्त्रा श्रीमता यास्काचार्येणाधिदैविकी सृष्टिविषयिणी-चर्चामुपस्थापयता प्रोक्तं यद् **"तिस्र एव देवताः इति नैरुक्ताः"**[५]

आसां तिसृणां देवतानां स्पष्टीकरणं मनुमहोदयैः इत्थं कृतम्–

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्।।"**[६]

अन्ये च व्याख्याकाराः इत्थं वदन्ति यत् मनुमहोदयैः 'सनातनं ब्रह्म' इत्यनेन पदप्रयोगेणाग्निवायुरवीणां सर्गादावप्युपस्थितिं वर्णितम्। अत इमे आजानदेवा उच्यन्ते। अन्ये च ये देवाः कल्पितास्ते प्राकृतिकाः यतो हि तेषामुत्पत्तिः सृष्टिसंरचनाऽनन्तरं जाता।

परं सामान्यतः देवतानामायतनविशेषेण त्रिविधत्वमेव स्वीकृतं निरुक्तकृता। तत्राधिभूताधिदैवाध्यात्मदृष्ट्या प्रत्यक्ष-परोक्षाध्यात्मिक्याः देवाः इत्येवमेवोक्ताः। मूलरूपेणाधिभूताधिदैवाध्यात्मविज्ञानदृशा चतुष्पद्याः सृष्टेर्वर्णनमनेकत्रोपलभ्यते। वेदेष्वप्येतदेवाभिलक्ष्यीकृत्य हिरण्यगर्भसूक्त-नासदीयसूक्त-पुरुषसूक्तेषु सृष्टिसंरचनात्मिका चर्चाऽवलोक्यते। तत्र हिरण्यगर्भसूक्तेन–

---

५. निरुक्ते-दैवतकाण्डे प्रारम्भे

६. मनुस्मृतौ-१/२३

**"हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥"[७]**

अर्थात् सर्गादौ सर्वप्रथमं हिरण्यगर्भनामकः 'क' संज्ञकप्रजापतिरुत्पन्नोऽभूत् यश्च खलु सर्वेषां प्राणिनां पतिरासीत्। स एव परमात्मभावेनेमां पृथिवीं द्याञ्च धृतवानिति। सर्वेषां भूतजातानां पालकत्वादस्य हिरण्यगर्भस्याधिभौतिकीसृष्टेरुत्पादकत्वं सिध्यति।

नासदीयसूक्ते अपां मर्यादा सुवर्णिता। **"आपोऽस्मान्मातरः"[८]** इत्यनया श्रुत्या मातृदेवत्वमस्य सूक्तस्य कल्पितम्। मनुस्मृतावपि–

**"आपो नारा इति प्रोक्ता आपो वै नरसूनवः।"[९]**

अनेन स्मृतिवचनेन अपां सृष्टिरेव दैवतसृष्टेर्व्याख्यानं प्रतिपादयति। **"अग्नीषोमात्मकं जगत्"[१०]** इत्यनेन वचनेन अग्नीषोमयोर्यत् सम्मेलनं तेनैव सम्मेलनेनस्य जगतः प्रतिष्ठा वर्णिताऽस्ति। एषा सृष्टिः आधिदैविकी सृष्टिः तस्मात् अधिदैविकं सूक्तमिमं नासदीयम् इति सिध्यति।

पुरुषसूक्तस्याध्यात्मिकदृष्ट्या विशिष्टसृष्टेर्वर्णनं सर्वत्रोद्घोषितम्। **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।"[११]**

प्रथमे एव मन्त्रे एतद् द्रष्टुं शक्यते यद्ययं पुरुषः अधिभूतश्चेदस्य सहस्रशीर्षाणि वर्तन्ते तत्र सहस्रद्वयमक्षीणि सम्भाव्यन्ते। परं न तथा वर्णितं केवलमध्यात्मदृष्ट्याऽस्य सूक्तस्य प्रवचनं ऋषिभिः कृतम्। अग्रेऽपि **"अबध्नन् पुरुषं पशुम्"** इत्यनेन वाक्येन पुरुषरूपपशोः नियोजनं यूपेषु निर्दिष्टम्। सामान्यतया चिन्तयितुं शक्यते यत् कस्यचिदपि पुरुषस्य नियोजनं कस्मिंश्चिदपि यज्ञे न भवति, किन्त्वत्र तस्य व्याख्यानं प्रतिपादयता पुरुषसूक्तस्याध्यात्मिक्याः सृष्टेर्वर्णनमेव ऋषिभिरुपवर्णितम्।

अतोऽनेन विवेचनेन हिरण्यगर्भसूक्तस्याधिभौतिकी सृष्टिः, नासदीय–

---

७. ऋ.सं. – १०/१२१/१

८. यजु.सं.–४/२

९. मनु.– १/१०

१०. बृहज्जाबालोपनिषदि– २/४

११. यजु.सं.–३१/१

सूक्तस्याधिदैविकी सृष्टिः, पुरुषसूक्तस्य चाध्यात्मिकी सृष्टिर्व्याख्याताऽस्ति।

सेयं त्रिगुणात्मिका सृष्टिरेव सर्वत्र अवलोक्यते।

**सृष्टेर्मूलकारणान्वेषणप्रसङ्गे स्वर्गस्थदेवतानां दश मतानि–**

अत्र प्रश्नः समुदेति यदस्याः त्रिगुणात्मिकायाः सृष्टेर्मूलकारणं किम्? विषयेऽस्मिन् स्वर्गस्थाः देवाः (साध्याः) विप्रतिपन्नास्तु सृष्टिमूलेऽस्मिन्। यथा–

**१. सदसद्भ्यां विदुरेके २. अमृतमृत्युभ्यां परे विदुः सृष्टिम्।**

**३. अन्येऽहोत्राभ्याम् ४. आवरणात् ५. अथाम्भसस्त्वन्ये॥**

**६. रजसः ७. व्योम्नः ८. अपरतः केचित् ९. दैवादपरेऽभिमन्वते सृष्टिम्। १०. इत्थं विप्रतिपत्त्या, संशयमातन्वते त्वन्ये॥**

किन्तु परस्परविरुद्धवादेषु तेषां परितोषो न जायते। अथ परमेष्ठी ब्रह्माप्रजापतिस्तान् विरुद्धमतवादान् प्रत्यालोचयमानः प्रत्याचष्टे तत्तदैकान्त्यम्। अत्रादौ तेषां एकान्तत्वं निरस्य ब्रह्म च प्रपद्य तस्मिन्नेव ब्रह्मणि एवामीषां दशवादानां सृष्टेर्मूलं प्रतिपादितम्।

साध्यदेवानां दशमतेष्वादिब्रह्मणो विप्रतिपत्तिवादः–

**"नासदासीन्नो सदासीत्तदानीम्**
**नासीद्रजो नो व्योमा परो यत्।**
**किमावरीवः कुह कस्य शर्मन्**
**अम्भः किमासीद् गहनं गभीरम्॥[१२]"**
**न मृत्युरासीदमृतं न तर्हि**
**न रात्र्या अह्न आसीत् प्रकेतः।[१३]**
**अवार्ग्देवा अस्य विसर्जनेन**
**अथाको वेद यत आबभूव॥"[१४]**

---

१२. ऋ.सं. १०/१२९/१
१३. ऋ.सं. १०/१२९/२ पूर्वार्धे
१४. ऋ.सं. १०/१२९/६ उत्तरार्धे।

अर्थात् नासदीयसूक्तस्यैतयोर्द्वयोः मन्त्रयोः दशवादेषु प्रत्येकं नामतः स्पष्टसंकेतेन ब्रह्मा निरसनं करोति। एतयोरुभयोर्मन्त्रयोरयं भावः यत् सृष्टिसंरचनातः प्राक् यदा सत्ता कस्यचिदपि नासीत् न सदासीत्, न चासदासीत्, न रजांसि आसन्, न चाकाशः, न परः, न चापः, आवरणमपि नासीत् तर्हि आवरणादियं सृष्टिर्जातेति कथं वक्तुं शक्यते? न गभीरं जलमासीत् न चामृतं मृत्युश्च, न रात्रिरासीन्नचाहानि। देवतानां सृष्टिस्तु जगतः सृष्ट्यनन्तरमभूत् ते देवा अपि मूलस्रष्टारो न भवितुमर्हन्ति, अतः निश्चितरूपेण को विज्ञातुर्महति यदियं सृष्टिः कुत्र कथं कदा चोत्पन्ना जातेति?

**ब्रह्ममते सिद्धान्तवादाभ्युपगमः**

**आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंच नास।**
**तम आसीत् तमसा गूढमग्रेऽप्रकेतं सलिलं सर्व मा इदम्।**
**तुच्छ्येनाभ्वपिहितं यदासीत् तपसस्तन्महिनाऽजायतैकम्॥**
**कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।**
**सतो बन्धुमसतिनिरविन्दन् हृदि प्रतीष्या कवयो मनीषा॥**
**तिरश्चीनो वितो रश्मिरेषामधः स्विदासीदुपरीस्विदासीत्॥**
**रेताधा आसन् महिमान आसन्**
**स्वधा अवस्तात् प्रयतिः परस्तात्॥**
**को अद्धा वेद क इह प्रवोचत्**
**कुत आजाता कुत इयं विसृष्टिः॥**
**इयं विसृष्टिर्यत् आबभूव यदि वा दधे यदि वा न॥**
**यो अस्याध्यक्षः परमे व्योमन् सो अङ्गवेद यदि वा न वेद॥"[१५]**

न किमपि नूतनमुत्पादयति अपूर्वम्। स्वान्तःस्थस्य जगतो बहिः-प्रकाशनमेव 'प्राणनम्' इत्युच्यते। यद्यप्यस्माकं शरीरे प्राणनक्रियाया-मप्युदरगतवायुः बहिरेव निर्गच्छति, किन्तु तथैव वायुरूपोऽयं प्राण इत्याशङ्का नोद्भवेत् एतदर्थमत्र मन्त्रे "अवातम्" शब्दप्रयोगेण निराकृतं यत् मुख्यः प्राणः वायुरूपो नास्ति।

१५. ऋ.सं. १०/१२९/३-७

सम्पूर्णोऽयं संसारः यद्ब्रह्मणि संभूतः सन्नवलोक्यते तद् ब्रह्मण एव परिणामः नैतद्वक्तुं शक्यते। यतो हि जगतः प्रतिपदप्राकट्येऽपि ब्रह्मणि न कापि न्यूनता समागच्छति, नैव च ब्रह्मस्वरूपो विच्युतो भवति अत एव परिणामत्वेन न विज्ञातुं शक्यते। एतस्माद्धेतोरेवागमदर्शनं मन्यमानाः संसारं ब्रह्मणो विकासः' कथयन्ति। वैदिकं दर्शनं जगद्ब्रह्मणः प्राणनम्-इत्थम्मन्यते। साम्प्रतं जिज्ञास्यते यद् निर्विकारब्रह्मण्येतत् प्रथमं प्राणनं कथमुद्भूतम्? एतदर्थमुत्तरति यन्मंत्रे प्राणनक्रियायाः हेतुभूतब्रह्मणः पराशक्तेर्वर्णनं **"स्वधया तदेकम्"** इत्यनेन शब्देन कृतमस्ति। तच्छक्तिरेवादि-प्राणस्य हेतुः। मूलतत्त्वमिदं रसनाम्ना, शक्तिश्च बलनाम्ना व्यवहृता भवति शास्त्रे।

सिद्धान्तप्रतिपादनानन्तरं प्रजापतिर्ब्रह्मा सृष्टिरचनाकालिकारम्भा-वस्थामुपवर्णयति यत्तदानीं सर्वत्राज्ञानान्धकारो व्याप्तः सन् आसीत्। यथा असीमिते जले निमग्नस्य पदार्थस्य संकेतो न मिलति एवमेवाज्ञानान्धकारे सर्वमिदं जगत् आसीत् निमग्नः। अन्धकारस्य पर्यायवाचकः शब्दोऽस्ति कृष्णः। कृष्णवर्णस्यात्रार्थत्रयं स्वीकर्तुं शक्यते आस्माभिः। निरुक्तकृष्णः, अनिरुक्त- कृष्णः, अनुपाख्यकृष्णश्चेति। तत्रानुपाख्यरूपः कृष्णवर्णः सृष्टेरादिमामवस्था- मुपवर्णयति। अज्ञानान्धकाररूपतमस एव तत्र संकेतोऽस्ति। यद्यपि तस्य स्पष्टसंकेतोऽत्र मन्त्रस्योत्तरार्द्धे 'तुच्छ्यरूपेणाभ्वेन सर्वमाच्छादित-मासीत्' इत्युक्त्वा अज्ञानस्यैवार्थद्योतकौ तुच्छ्याभ्वौ शब्दौ स्त इति सिध्यति। वस्तुतः अभ्वपिहितं शब्दस्यार्थस्तु आच्छादनमेवास्ति तथाऽप्यज्ञानाद्व्यक्ति-राच्छादितो भवत्येव। तीव्रतपसः प्रभावात् यत् खलु स्वमहिम्ना युक्त आसीत् अर्थात् तत् तपः स्वात्मन्येव तपति स्म। तत्र तपः कर्त्ता कश्चिदन्यो नासीत्, तथा च स तपोमहिमा चतुर्षु दिक्षु प्रसृतो भवतिस्म, तेन तपो माहात्म्येन अज्ञानान्धकारः नष्टो भूत्वा एकामन्यां ज्योतिर्मयीमवस्थां प्राप्य द्योतनात्मकेन तत्त्वरूपेण परिणतोऽभवत्, तत् एव प्रकाशवत् तत्त्वं खलु संसारे आदिपुरुषेणाव्ययपुरुषेण वोच्यते। अस्मिन् अव्ययपुरुषे (आदिपुरुषे) सर्वप्रथमं (कामस्तदग्रे) आन्तरिकः कामः समुत्पन्नोऽभवत् यः कामनादिभिः नामभिर्लोके ज्ञायते, तस्य च कामस्यैकः अधिष्ठातृदेवोऽभवत् यस्य

संज्ञाऽस्ति कामदेव इति। तस्य कामदेवस्य शास्त्रेषु पञ्चबाणाः कथिताः–

**"अरविन्दमशोकं च चूतं च नवमल्लिका।**
**नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः॥"**[१६]

(अमरकोषे)

अनेनैव पञ्चबाणेन सः कामदेवः संसारे सर्वत्र समेषामपि जीवानामन्तःकरणे स्वमाधिपत्यं स्थापयति। मन्त्रे यथा–

**"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्"**[१७]

इति अत्र मनसः प्रथमो रेतः (वीर्यः) काम उक्तः। अव्ययपुरुषस्य पञ्चकलासु आनन्दः; विज्ञानं, मनः, प्राणः, वाक् च वर्णिताः सन्ति। अत्र तावत् पुरुषविषये किंचिद्विचार्यते–

सर्गारम्भे जगतः दृश्यमानपदार्थेषु बलस्यैव प्रधानता भवति। बल-विशिष्टरसस्यायं पुरुषभाव एव प्रथमं रूपं भवति। अतो बल एव जगद्भावे धर्मिरूपेण कथ्यते– तस्यां चावस्थायां रसोऽपि सत्तापदेन व्यवहृतो भवति। तदानीं बलरूपेण धर्मेण सम्बद्धोऽयं रसः धर्मी भवति। बलविशिष्टोऽयं धर्मी रस एव पुरुषपदेन प्रसिद्धो भवति। एतस्मादेव कारणात् वेदान्ते ब्रह्मणः व्यापकता सत्ता-चेतना-आनन्दरूपेण प्रतिपादिता भवति। कथनमेतत् प्रक्रियायाः भेदमात्रमस्ति। तत्र मूलतत्त्वरूपरसस्यैक्ये न कश्चिद्भेदो भवति। अत इमे त्रयोऽपि एकरूपा एव भवन्ति।

वेदस्य प्रक्रियानुसारं पुरुषशब्दस्यानेके व्युत्पत्तयः भवन्ति। तत्र प्रथमा व्युत्पत्तिरस्ति– "पुरुधा-स्यति इति पुरुषः", अर्थात् सर्वप्रथमं क्रियावान् भूत्वा यः स्वयं नानाभावे क्रियारतो भवति स पुरुषः।

वैदिकीपरिभाषायाम् अयं पुरुषोऽपि कथ्यते। अतः **"पुरुधा-स्यति"** इत्यस्यर्थोऽप्यस्ति यत् यः स्वतः स्वयमेवानेकरूपताम्प्राप्नोति स पुरुषः। अथवा **"पुरा-रुष्यति इति पुरुषः"** अत्र हिंसार्थकात् रुष्धातोः पुरुषशब्दो निर्मितः। अथवा **"पूर्षु-रुष्यते इति पुरुषः"** अत्र रुष् इत्यस्य शब्दस्यार्थोऽस्ति

---

१६. अमरकोशे स्वर्गवर्गे ५, ६
१७. ऋ.सं. १०/१२९/५

बन्धनमिति। अर्थात् नवद्वाररूपपुरि यो बद्धो भवति स पुरुषः। तस्मादेव कारणात् निरुक्तकारैरुक्तम्–"पुरि शेते इति पुरुषः", "पुरिशयः पुरुषः" वेति।

एकाऽन्या व्युत्पत्तिरस्ति "पुरा-औषत्" इति पुरुषः। अर्थात् मनः-प्राण- वाङ्मये पुरि मायावरणे आबद्धः सन् मनः-प्राणादीनां सम्पूर्णं पापभावं सर्वप्रथमं भस्मसात् करोति सः पुरुषः। एषा अन्तराकाशस्य भस्मीकरण- प्रक्रिया सृष्टिभावात् पूर्वस्य क्रिया वर्तते। अयमेव पुरुषः आत्मरूपेण मन्यते।

अत्रात्मारूपस्य पुरुषस्य सप्तविभागाः तेषाञ्च विभागानां प्रजापतिना सह सम्बन्धो दर्श्यते। तद्यथा–

**सप्तपुरुषः प्रजापतिरात्मा**

तदुक्तं शतपथश्रुतौ–**"सप्तपुरुषो ह्ययं पुरुषो यच्चत्वार आत्मा त्रयः पक्षपुच्छानि"** इति (श.प.ब्रा. ६/१/१/६)




अत्र पञ्चकलात्मकोऽव्ययोऽक्षरक्षरपुरुषा एककलात्मकश्च परात्परो युक्तो भूत्वा षोडशकलाभिः पूर्णः पुरुषो भवति, तेनेदं समस्तं चराचरं पूर्णं भवति। अत एवोक्तं – पूर्णमदः पूर्णमिदमिति।

**षोडशकलं वा इदं सर्वम्।** (श.प.ब्रा. १३/२/२/१३)

अन्याऽपि मुख्या व्युत्पत्तिरस्ति - 'पुरे वसति' इति पुरुषः पुरि-शरीरे वसति वासं करोति स पुरुषः। अर्थात् प्रत्यक्षदृश्यमानशरीरे सम्पूर्णभावेन यो वसति स पुरुषः। उत वा शरीरान्तर्गतदहराकाशे "ब्रह्मपुरे" वसतीति पुरुषः।

स च पुरुषः क्षराक्षराव्यय[१८] भेदेन त्रिविधो भवति। वेदेषु प्रतिपादितस्य पुरुषस्यास्य विभागत्रयस्य स्पष्टीकरणं श्रीमद्भगवद्गीतायां वर्तते। एकस्याः पुरुषसंस्थायाः इमे त्रयो विभागाः संसर्गभेदत्वाद् भवन्ति। संसर्गभेदावस्थाभेदो जायते। तस्मादेव कारणात् संसर्गीभूतरसबलयोश्चापि भेदो भासितो भवति। शुद्धबलस्य शुद्धे रसे सम्बन्धत्वात् पुरुषरूपता सिध्यति। रसस्योदरे बलम् प्रविशति, इत्यनेन कथनेनात्र रसस्य प्रधानता ख्यातिं गच्छति। अयमेव परपुरुषोऽव्यय पुरुषोऽस्ति। अयमव्ययः कार्यभावेन कारणभावेन चोभाभ्यामतीतो भवति। नायं किमप्युत्पादयति न वास्तविकरूपेण कस्मिंश्चिदुत्पादनेऽस्य कारणत्वमपि भवति, न च कश्चिदन्यः अस्योत्पादकोऽस्ति। केवलं सर्वेषामालम्बनं भूत्वा सर्वाधाररूपेण तिष्ठति। अस्मिन् परपुरुषे विद्यमाना या बलरूपिणी परा सर्वादिशक्तिरस्ति तयैव सम्पूर्णस्यास्य जगतः उत्पत्तिर्भवति। ज्ञान-बल-क्रियारूपैश्च सा सर्वत्रानुप्रविष्टा भवति। अनया श्रुत्या अव्ययपुरुषस्य विकारशून्यता तथा शक्तेः सर्वजनकता समुद्घोषिताऽस्ति।

अस्य परपुरुषस्य-उत्तम-अनुत्तम-पर-अव्यय-शाश्वतनामानि श्रुति-स्मृतिषु वर्णितानि सन्ति। अनुत्तमस्यार्थोऽस्ति-यस्मादुत्तमः न कश्चिदन्यः स्यात्। एतेषां सर्वेषामपि नाम्नां क्रमशोऽर्थसंगतिरत्रोच्यते- क्षराक्षराभ्यां सूक्ष्मत्वादयं परः, क्षराक्षरभावमतिक्रम्य अत्यूर्ध्वे तिष्ठति तस्मादयमुत्तमः, एतस्मादुत्तमः न कश्चिदन्यः तस्मादनुत्तमः। यथा अक्षरपुरुषः विविध-शक्तिभिर्युक्तो भूत्वाऽनेकरूपेषु विभज्य नानाप्रकारैः भेदयुक्तः सन् भवति। बहुभिस्तस्य योगोऽपि भवति तथैव परपुरुषः कदापि विभक्तः सन्नपि विभक्तो न भवति। अतोऽस्य नामाव्ययो भवति, अर्थात् यस्मिन् कश्चिदपि

---

१८. द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।। गीता-१५/१६

विकारः न स्यात् सोऽव्यय इत्युच्यते। अक्षरपुरुषस्य द्वे स्वरूपे स्तः, पराक्षरः सामान्याक्षरश्च। पराक्षरे विविधा सामान्याक्षराः उदिताः भवन्ति तथा च ततः निष्क्रामन्त्यपि। यद्यपि अस्मिन् परपुरुषे न कश्चिदुदेति न च निष्क्रामति। अयं सर्वदा एकरूप एव भवति अतोऽयं शाश्वतः (नित्यः) मन्यते।

तत्राव्ययपुरुषस्य[19] पञ्चकलासु मनसः सकाशात् प्रथमो रेतोभूतः कामः समुत्पन्नोऽभवत्। कामः कामना, भावना, इच्छा च इत्यादिभिः शब्दैः पूर्वाचार्याः कामतत्त्वस्य वर्णनं कृतवन्तः। जगन्निर्माणस्येच्छा स्वधाशक्तेः परामर्शेनोत्पन्ना। अस्यानन्दघनचैतन्यपुरुषस्यानुभवोऽस्मिन्ननित्यशरीरे स एव क्रान्तदर्शी तपस्वी कविः कर्तुमर्हति यः खलु केन्द्रगतहृदयरूपी दहराकाशं स्वजीवने मूलं लक्ष्यं करोति। यस्मिन् परमव्योम्नि स सदाऽवस्थितो भवति। ते तपस्विनः नित्यं सत्यं असत्येनाबद्धमिति जानन्ति।

पूर्वं यदुक्तं स्वतः तपः प्रसूत महिमामण्डलस्य व्याप्तिः अस्तीति तस्य स्पष्टीकरणमिदं वर्तते यद् महिमारश्मयः ऊर्ध्वाधोभागयोः सर्वत्र तिर्यग्भावेन व्याप्ताः भवन्ति स्म। तथा चेयं तपःप्रसूता महिमरूपि-ज्योतिर्मयरश्मिः मनसः सकाशात् कामभावेन प्रथमं समुत्पन्ना, तस्य कामरूपस्य महारेतसः तपोमहिमानं सर्वत्र व्याप्य, तस्य रेतसः पानं करोति स्म। अस्य महिमरूपिणो रेतसः समुचितसीमाबन्धनायै अग्रे पृष्ठे च सदा स्वधारूपिणी मायाशक्तिः सहैव तिष्ठति।

**"को अद्धा वेद क इह प्रवोचत्।**
**कुत आयाता कुत इयं विसृष्टिः।"[२०]**

पूर्णनिश्चयेन को वक्तुमर्हति यदियं सृष्टिः कुतः आविर्भूतेति? तथा चास्यां नाना भेदाः कथमभूवन्? ब्रह्मा वदति यत् कः एतादृशः पूर्वगुरुः येनास्य प्रवचनं कृतं स्यात्। तथापि यदिमे नानाभेदाः विसृष्टिरूपाः अस्यां सृष्टौ भवन्ति, इमे भेदाः संभवतः ज्ञातुं शक्याः न वा शक्याः

---

१९. उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः।। गीता-१५/१७

२०. ऋ.सं. १०/१२९/६

द्वयमपि तथ्यमस्ति। अर्थात् **"हृदि प्रतीष्या कवयो मनीषा"**[२१] उभे तथ्ये ज्ञातुं शक्याः न ज्ञातुं शक्याः एकत्र कथम्? एतस्मिन् विषये ब्रह्मणा उक्तम्– ज्ञानस्य साधनानि तु इन्द्रियसञ्चालकाः देवा एव सन्ति, एवं ते देवाः स्वयं "अर्वाग् देवा" अनन्तरं उत्पद्यमानाः सन्ति, अतस्तस्य तत्त्वज्ञानस्य साधकाः कथं सम्भवितुमर्हन्ति। एतदर्थं साधनं विनैव तज्ज्ञानलाभं केवलमीश्वरकृपया ते मनीषिणः प्राप्तवन्तः। जगतो वैचित्र्यमवलोक्यैतद् ज्ञानं भवति यद् सम्पूर्णस्यास्य जगतः एक एवाध्यक्षः परव्योममयः अव्ययपुरुषोऽपि स्वीयया एव मायाशक्त्या, यस्याः नाम स्वधेत्युक्तं प्राक् सा खल्वस्याः विचित्रतायाः सम्पूर्णं रहस्यं सम्यक्तया जानाति न वा जानाति? कथं ज्ञातव्यम्? यतो हि सः ज्ञानमयोऽस्ति। न कथं ज्ञातव्यम्? यतो हि स स्वभावतः मायया निरपेक्षोऽस्ति। इति प्रश्नद्वयं सहसैवोत्पद्यते यस्य समाधानमन्वेष्टुं देवानां जिज्ञासाऽत्र नासदीयसूक्ते प्रस्तुताऽस्ति।

एभिर्मन्त्रवाक्यैरत्र सृष्टिविज्ञानरूपमेतत् तत्त्वज्ञानं परमगम्भीरं दुर्लभञ्चास्ति एतदेव संकेतितोऽस्ति।

### महर्षेर्विश्वकर्मणः सिद्धान्तवादः

अन्येषां च ऋषीणाम् अभिप्रायं प्रस्तोतुमत्र मन्त्राः उद्ध्रियन्ते–

**प्राग्विश्वकर्मापि महामहर्षिर्द्यावापृथिव्योरनयोः प्रसृष्टौ।**
**प्रश्नान् जनानामवतार्य बुद्ध्या प्रष्टुं समामिदश्य च निर्णिनाय॥**

**"किं स्विद्वनं क उ स वृक्ष**
**आस यतो द्यावापृथिवी निष्टतक्षुः।**
**मनीषिणो मनसा पृच्छतेदु तद्**
**यदध्यतिष्ठद् भुवनानि धारयन्॥"**[२२]

अर्थात् पुरा महर्षिर्विश्वकर्मा स्वर्ग-पृथिव्योः प्रकृष्ट-रचनाविषये विचारकाणां जिज्ञासात्मकान् प्रश्नान् सम्यगवगत्य स्वबुद्ध्या निर्णयं कृतवान्। ते प्रश्नाः आसन्–

---

२१. ऋ.सं. १०/१२९/५
२२. ऋ.सं. १०/८१/४

तत् कीदृशं वनमासीत्? उतवा स कीदृशः वृक्ष आसीत्? यत एतौ स्वर्ग-पृथिव्यौ अन्विष्य पृथक्कृतौ। हे मनीषिन् विद्वद्गण! स्वमनसा मननं कृत्वा पृच्छतु यत् कः एतानि चतुर्दशभुवनानि धारयन् अध्यक्षपदे विराजमानोऽस्ति?

अस्य प्रश्नस्योत्तरं तैत्तिरीयब्राह्मणे इत्थं दत्तम्–

**"ब्रह्मवनं ब्रह्म स वृक्ष आस**
**यतो द्यावापृथिवी निष्टतक्षुः।**
**मनीषिणो मनसा विब्रवीमि वो**
**ब्रह्माधितिष्ठद्-भुवनानि धारयन्॥"[२३]**

अर्थात् अनेकेषां अदृष्ट-अज्ञात-विचित्रवस्तूनां भण्डाररूपस्य स्थानस्य नाम भवति कान्तारः वनं वा। ब्रह्म एव तद् वनमासीत्, अथापि च ब्रह्म एव स वृक्ष आसीत् यस्मात् स्वर्ग-पृथिव्यौ विभक्ते। हे मनस्विन् विद्वद्गण! अहं मननपूर्वकं निश्चितं कृत्वा दृढतया एवं कथयामि यत् एतानि सर्वाण्यपि भुवनानि धारयन् ब्रह्मैव अस्याः सृष्टेः अध्यक्षो भूत्वा तिष्ठति।

### विश्वसृष्टौ दीर्घतमसः प्रश्नाभिनयः

यथा जगत्प्रसृष्टौ प्रश्नाः सन्ति तथैव अध्यात्ममपि च ते श्रुताः। महर्षिः दीर्घतमाः च अध्यात्माधिदैवविषयकान् बहून् प्रश्नान् पृच्छ्यते। यथा–

**"न विजानामि यदि वेदमस्मि**
**निण्यः सन्नद्धो मनसा चरामि।**
**यदा माऽगन् प्रथमजा ऋतस्यादि-**
**द्वाचो अश्नुवे भागमस्याः॥"[२४]**

**"अचिकित्वाञ्चिकितुषश्चिदत्र**

---

२३. तै. ब्राह्मणे - २/८/९

२४. ऋ.सं. १/१६४/३७

**कवीन् पृच्छामि विद्मने न विद्वान्।**
**वियस्तस्तम्भ षडिमा रजांस्यजस्य**
**रूपे किमपि स्विदेकम्॥"**[२५]

इत्थमनेकेषां ऋषीणां सम्मतौ अनेके प्रश्नाः अस्माकं पुरतः समागच्छन्ति। प्रत्येकेषां प्रश्नानां संक्षिप्तरूपेणोत्तराणि संकलय्य मयाऽत्रोद्ध्रियन्ते–

उक्तानां दशवादानामेकस्मिन्ब्रह्मणि समन्वयाद् एकेनैव ब्रह्मणा सम्पूर्णा सृष्टिर्भवतीत्यत्र विचार्यते। अस्य विश्वस्य मूलं तद्ब्रह्म, तदेकमाद्यम् अद्वितीयञ्च। अद्वितीयस्वरूपेण तत् सम्पूर्णे ब्रह्माण्डे व्याप्तमस्ति। अर्थाद् तद् ब्रह्म एवास्य नानाविधविश्वस्य एकमात्रं बीजं (मूलाधारः) वर्तते। तस्यैकस्यैव बीजस्य विस्तारः सर्वत्र दृश्यते। तत्रादृश्यताम्प्रदर्शनायामुष्यशब्दस्य प्रयोगः क्रियते। यथैकमूलात् फल-पुष्प-पर्ण-प्रकाण्ड-शाखा-विटपादि-सिद्ध्यति, तथैव तस्यैकभावादनेकभावोदयेन विश्वमवलोक्यते।

अत्र विश्व-संरचनाविषये प्रदत्ते वृक्षस्योदाहरणे बीजात् फल-पुष्पपर्ण-शाखादीनामुत्पत्तौ भूम्युर्वराशक्तिर्जलवाय्वादयः सहकारिणो भवन्ति। परं ब्रह्मणा सृष्ट्युत्पत्तौ न कश्चिदन्यत् मौलिकतत्त्वं सहकारित्वेन तिष्ठति। यतो हि तस्यामाद्यावस्थायां न कस्याप्यन्यतत्त्वस्य सत्ताऽऽसीत्। इत्थमत्र दृष्टान्तेन विरोधो जायते। यद्यपि रसरूपब्रह्मणः सहचररूपे बलस्य (मायाशक्तेः) साहचर्यं भवति, तथापि तद्बलं ब्रह्मणः स्वधाशक्तिरस्ति इति पूर्वमेवोक्तम्। शक्ति-शक्तिमतोरभेदत्वात् बलं (माया) रसात् (ब्रह्मसकाशात्) सर्वथा भिन्नं नास्ति। अतः अन्ययोगो न शक्यते वक्तुम्। दृष्टान्ते या विषमता सा तु भवितव्या एव। यतो ह्यलौकिकतत्त्वस्य साधने सर्वोऽपि लौकिको दृष्टान्तः पूर्णरूपेणासम्भवः। अतो यत् पदार्थं यथा भवति तस्य केवलं निर्वचनमेव शक्यम्। अलौकिकविषये सर्वत्र हेतुरूपस्य तर्कस्य फलं न लभते। आधुनिकमपि विज्ञानममुकपदार्थेनामुकपदार्थ-स्योत्पत्तिर्भवती' त्येवमेव कथयति, कथं भवति? नैतद् वक्तुं समर्थं भवति।

---

२५. ऋ.सं. १/१६४/६

परमगहनमलौकिकब्रह्मविषयं विहाय प्रत्यक्षलोके प्राणिनामुत्पत्तौ पश्यामश्चेत्तत्रापि। जीवशरीरस्योत्पत्तौ मूलतः एकः शुक्रबिन्दुः कारणमस्ति। तस्मादेकस्माद्बिन्दुसकाशादेव विविधाः शरीरावयवाः निर्मीयन्ते। भेदत्वेऽस्मिन् को हेतुः? एकस्य बिन्दोश्च विविधाः भावाः कथमभवन्? को विज्ञातुमर्हति।

रेतसश्चक्षुरभूत् ततः श्रोत्रं च वाक् चाऽभूत् विशेषेण पृथक्-पृथक्। कथमेतत्सर्वं जातम्? तथा च नेत्रवन्नेत्रस्य कार्यमन्यानीन्द्रियाणि कथं न कुर्वन्ति? उत वा अन्येषाम् अङ्गानां कार्यं नेत्रमेव कथं न कुरुते? सर्वमेतच्चिन्त्यं वर्तते।

ब्रह्मशब्दस्य 'बृंहणाद् ब्रह्म' इत्येतन्निर्वचनमस्ति। अनेन निर्वचनेन ब्रह्मशब्दस्यार्थो भवति सर्वव्यापकः, अतिविस्तृतः च। अतः तस्मादधिको विस्तृतो न कश्चिदन्यो वर्तते। अतो यत् सर्वस्मादधिकं व्यापकं (विस्तृतं) अस्ति तदेव ब्रह्म तत एव सम्पूर्णं जगदुत्पन्नमिति।

वेदेषु ब्रह्मशब्दः रसत्वेनाख्यातः, अस्यैव ब्रह्मणः अभिन्ना पराशक्तिः बलमित्युच्यते। परब्रह्मणि परशब्दस्य योऽर्थो भवति तदेवार्थः पराशक्तौ पराशब्दस्य भवति। एतद्बलं रसाद्भिन्नं न मन्यते। अत अद्वैततत्त्वस्य विरोधो न दृश्यते। मायायाः प्रसुप्तावस्था बलमित्युच्यते। कार्यार्थं कृतसंकल्पावस्थायां जागृतं सद् बलं शक्तिरुच्यते। संसारस्य सम्पूर्णा अपि क्रियारूपचेष्टाः शक्तेरेव परिणामाः। एवमेकस्यैव बलस्य इमास्तिस्रोऽवस्थाः- बल-शक्ति-क्रियाः कथ्यन्ते। विषयेऽस्मिन् श्रुतिः- **"संशितं वीर्यं बलम्"**[२६] **"बाह्वोरेव बलं धत्ते"**[२७] **"इन्द्रो बलम्"**[२८] **बृहदारण्यकोपनिषदि च- "नमस्ते तुरीयाय दर्शिताय पदाय परोरजसे"** गायत्र्याः अस्योत्तरभागस्य व्याख्याने- **"सैषा गायत्री एतस्मिन्, तुरीये दर्शने पदे परोरजसि प्रतिष्ठिता, तद्वै तत् सत्ये प्रतिष्ठिता, तद्वै तत् सत्यं बले प्रतिष्ठितम् प्राणो वै बलम्, तत् प्राणे प्रतिष्ठितम्, तस्मादाहुर्बलं सत्याद् गरीय इति। एवमेषा गायत्री अध्यात्मं प्रतिष्ठिता।"**[२९]

---

२६. श.प.ब्रा.-६/६/३/१४

२७. श.प.ब्रा.-१३/३/२/५

२८. श.प.ब्रा.-११/१४/३/३

धारणात्मको धर्मः रस-बलरूपेण च द्विधा भवति। अर्थात् रसोऽपि धर्मरूपः बलमपि च। आभ्यां धर्मरूपरसबलाभ्यां युक्तः सन् यत्किमपि पदार्थं सृज्यते स धर्मवान् धर्मी भवति। इमे रसबलरूपे धर्मे परस्परमयुतसिद्धे स्तः। अर्थात् एकेन विना अपरो न कदापि तिष्ठति।

सृष्टि-संरचना-प्रक्रियायां परब्रह्मणि; परात्परब्रह्मण्योश्च ये धर्मा उक्तास्ते भातिसिद्धाः सन्ति। सत्तासिद्धाः अन्यरूपाः धर्माः क्षरपुरुषे अक्षरपुरुषे च प्रकारद्वयेन तिष्ठन्ति-एषैव स्थितिः वास्तविकी।

रसः अमृतरूपः, बलञ्च मृत्युशीलं वर्तते। मरणधर्मा बलस्य सत्ता न स्यात् चेत् अमृतमयस्य रसस्य प्रकाशः कुतः? एवमेव यदि रसस्य चैतन्यप्रकाशो न भवेच्चेत् बलं कुत्र तिष्ठेत? अत उभावपि रसधर्मौ सदा अभिन्नौ-अत एवायुतसिद्धौ स्तः।

जलेन रसस्यैकरूपत्वाज्जलमपि रसपदेन निरुच्यते। यथा-आध्यात्मिकसंस्थायां चित्तस्यानेकविषयप्रसङ्गात् द्रवणशीलता भवति, तथैव सर्वत्र द्रवणभावस्य विद्यमानत्वाज्जलं रस इत्युच्यते।

यद्यपि रसः स्वयमेकरूप एवास्ति तथापि जलप्रसंगादस्य रसस्यानेकरूपता सिध्यति। यथा जगति नानाभावत्वं प्रत्यक्षमवलोक्यते-तस्मिन् सम्पूर्णे विश्वरूपनानाभावे द्रवणशीलस्य जलस्य प्रवाहवत् रसः सर्वत्र प्रवाहितो भवति-अत एवैतत् जलं रसपदेन व्यवह्रियते।

बृहद्रसम्प्राप्तमित्युक्त्वा सुखभावस्यानुभवो भवति- अतः सुखं रसरूपमस्ति। एतेन व्याख्यानेन ब्रह्म-सुख-रसेष्वेकत्वं सिध्यति। अर्थात् वेदेषु **"रसोऽमृतम्", "अमृतं वै ब्रह्म"** इति प्रसिद्धमेव। अत एव ब्रह्मानन्दरूपो रसः अमृतत्वेन भजते। लोकदृष्ट्याऽपि रसः (आनन्दः) अमृतरूपमेवास्ति।

अत्र जलेन रसस्य साम्यं दर्श्यते। यथा जले बलं (प्राणः) त्रयाणामपि मार्गाणामनुसरणं करोति तद् बलं जलम् अधोभागे, वायुना च

---

२९. श.प.ब्रा.-१४/८/१५/४; बृहदारण्यकोपनिषदि-७/१३/४-६

तिर्यक् भागेषु उत वा सूर्यकिरणानां साहाय्येनोर्ध्वभागे गच्छति तथैवास्मिन् जगति ऊर्ध्वाध:तिर्यक् भागेषु सर्वत्र बलं रससहितमेव व्याप्तं भवति।

तस्मादमृतमयाद्रसात् बलममृतांशं वारम्वारमादाय नानाविधसृष्टिं करोति, तेनानेकविधानां प्राणिनां सृष्टिर्भवति। एषु सर्वेषु भूतेषु रसांशस्यैव प्रधानता वर्तते। अतोऽयं वक्तुं शक्यते यद्– सम्पूर्णमिदं जगद् रसस्य समुदायोऽस्ति।

वस्तुतो रसबलयोः पार्थक्यमस्ति। एतावुभौ पृथक्–पृथक् विरुद्ध–लक्षणसम्पन्नौ स्तः। रसः पवित्रम्, बलञ्च पापपूर्णं वर्तते, रसो व्यापकः बलञ्च तुच्छं (सीमितम्) अस्ति, रसः सत् बलञ्चासत्, रसो विद्या (ज्ञानस्वरूपः) बलमविद्यारूपमस्ति, रसोऽमृतम्, बलं मृत्युरूपम्, रसः पूर्णः बलं च शून्यम्, रसः अकर्मा बलं कर्ममयम्, रसः सुस्थिरः, बलञ्च स्थिरतारहितम् अस्ति।

## ब्रह्मणो निरुक्तानिरुक्तत्वम्




तत्रावयवशः सम्पूर्णं विभाजनं निरुक्तमुच्यते, यत्र विभागो न भवति स चानिरुक्तः। जन्ममरणशीलमनन्तं विश्वं निरुक्तम्। विश्वस्येयमुत्पत्तिविनाशावस्था शाश्वती नास्याः क्वचिदन्तः। अस्मिन् विनाशशीले विश्वे यदेकमविनश्वरं नित्यतत्त्वमस्ति तदनिरुक्तब्रह्मेत्युच्यते।

अनिरुक्तब्रह्मणः स्वरूपद्वयमुक्तम्– सर्वानिरुक्तं आपेक्षिकनिरुक्तञ्च तत्रादिकालिकस्य ब्रह्मणः प्रथमावस्था सर्वानिरुक्तावस्था अस्ति। एतस्मिन् विषये यजुर्वदति–

**"न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः"**[३०]

अर्थादेतदनिर्वचनीयं, न केनापि लक्षणेन ज्ञातुं योग्यञ्चास्ति। एतदेवानिर्वचनीयं ब्रह्म नभ्य-प्रजापतिरित्यप्युच्यते। तस्मादेवानिरुक्तं ब्रह्म-सकाशाद् इमे सर्वे भावाः समुत्पद्यन्ते। यथा च श्रुतिः–

**"एकोऽहं बहुस्याम्"**[३१] इति। तद्ब्रह्म यदा बहुत्वमाप्नोति तदा तस्य विविधानि स्वरूपाणि निर्वचनयोग्यानि भवन्ति। एषु सर्वेष्वपि विभक्तनानाभावेषु विद्यमानं तदनिरुक्ततत्त्वं सूक्ष्मभावेनावस्थितं भवति यद् ज्ञानाय सर्वे प्रयत्नं विदधति। अत एवोक्तमुपनिषदि–

**"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥"**[३२]

अर्थात् दृश्यमानं स्थूलं जगत् माध्यमेनैव स्थूलस्य उत्पादकं सूक्ष्मातिसूक्ष्ममममनिरुक्तं तत्त्वं विज्ञातुं शक्येतेति ममाभिप्रायः। तत्र दृष्टान्तः– आकाशे यदा मेघाः सूर्यबिम्बमाच्छादयति तदा वयं मैवं स्वीकुर्मो यत्सूर्यः सत्ताविहीनो जातः। तथैव मेघवन्नानाविधकर्मजालेनाबद्धा बुद्धिः सहसाऽभ्यन्तरस्थितममृतमयं तत्त्वं नानुभवितुमर्हति। तस्मादेवमुच्यते यत् तद् ब्रह्म–अगोचरं, अक्षयं, नित्यं, सर्वव्यापकञ्चास्ति।

अस्य दृश्यमान-स्थूलजगतः एकमात्रं मूलाधारः 'ब्रह्म' अस्ति। तच्च ब्रह्म सृष्ट्यादौ पूर्णभावेनावस्थितं भवति, सृष्टावपि तस्मात् पूर्णात् पूर्णभावस्येवोदयो भवतीति निश्चितः। पूर्णात् पूर्णस्यादानेनापि अन्ते यत् शेषः तदपि पूर्ण एव। अत एवोक्त[३३] महर्षिभिः–

**"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥"** (उपनिषत्)

---

३०. यजुर्वेदे–३२/३

३१. ऐत.उप.–१/३

३२. अमृतविन्दूपनिषदि–१७ ; मैत्रायण्याम्–६/१२

३३. अथर्ववेदे यथा– पूर्णात् पूर्णमुदञ्चति पूर्णं पूर्णेन सिच्यते।
उतो तदद्य विद्याम् यतस्तत् परिषिच्यते॥ (१०/८/२९)

तत्पूर्णब्रह्म केन प्रकारेण पूर्णः भवति? अस्याः शंकायाः समाधानं श्रुतावुक्तम्– **"षोडशकलो वै पुरुषः"**[३४]

अर्थात् सप्तशीर्षण्याः प्राणाः, अवाङ्प्राणः एकः, इत्यष्टौ प्राणाः, चत्वारि दोर्बाहवानि, चत्वारि ऊर्वष्ठीवानि चेत्यष्टावंगानि। एतत् षोडशावयवात्मकं खलु तस्य परमपुरुषस्य शरीरम्। यद्यपि इमे अवयवाः तु लौकिकपुरुषाणां तस्मात्कथं परमपुरुषे एषामवयवानां कल्पनमिति? अस्मिन् सन्दर्भे प्रश्नोपनिषदि समाधानं प्रस्तुतम्। तद्यथा–

**"स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते। एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः॥"**[३५]

यथा विभिन्ननामरूपात्मिका अनेकाः नद्यः स्वोद्गमस्थानं समुद्रं प्रति धावन्त्यः महार्णवे गत्वा च विलीनाः भवन्ति, विलीनानन्तरं तासां नदीनां पृथक् नामरूपाणि न भवन्ति, अपितु समुद्र इव भवन्ति। तद्वदेव सर्वसाक्षी–सर्वात्मरूपात् परब्रह्मपरमेश्वरादुत्पन्नाः इमाः षोडशकलाः प्रलयावस्थायां परमाधारे परमपुरुषे गत्वा विलीनाः भवन्ति। अनन्तरम् आसां कलानां पृथङ्नामस्वरूपाणि न भवन्ति शेषास्तु परमपुरुषस्वरूपे तदाकारा एव भवन्ति। तदानीं परमात्मनि न कश्चित्संकल्पो भवति अतस्स सर्वाभिः कलाभिर्विरहितः अमृतस्वरूप उच्यते। तथा च–

**"अरा इव रथनाभौ कला यस्मिन् प्रतिष्ठिताः।**
**तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा** इति॥"[३६]

यथा रथचक्रे सन्निहिताः सर्वेऽप्यराः रथनाभौ प्रविष्टाः भवन्ति। अनेन सिध्यति यत्तेषां सर्वेषामप्यराणामाधारो नाभिः। नाभिं विना ते स्थिराः न भवितुमर्हन्ति। तथैव प्राणाद्याः परमेश्वरस्य षोडशकलाः तस्मिन् परमपुरुषे

---

३४. श.प.ब्रा.–११/१/६/३६

३५. प्रश्नोपनिषदि– ६/५

३६. प्रश्नोपनिषदि– ६/६

निगूढाः भवन्ति। परमपुरुषं विना कलानां न क्वापि अन्यत्र कश्चिदन्य आश्रयः। इत्युक्त्वा महर्षि-पिप्पलादेनोक्तं यत्- **"एतावदेवाहमपरं ब्रह्म वेद। नातः परमस्तीति॥"**[३७]

एतस्य परमपुरुषस्य स्वरूपवर्णनप्रसङ्गे मुण्डकोपनिषद्युक्तम् यत्-

**"यथोर्णनाभिः सृजते गृह्णते च**
**यथा पृथिव्यामोषधयः सम्भवन्ति।**
**यथा सतः पुरुषात्केशलोमानि**
**तथाऽक्षरात्सम्भवतीह विश्वम्"॥**[३८]

मन्त्रेऽस्मिन् त्रिभिर्दृष्टान्तैः परब्रह्मपरमेश्वरस्स्य जड़-चेतनात्मकस्यास्य जगतो निमित्तभूतत्वमुपादानकारणत्वञ्चोक्तम्। प्रथमं तत्र ऊर्णनाभिः उदरस्थं जालं बहिर्निष्काश्य विस्तीर्य च पुनः गृह्णाति इत्यनयैव प्रक्रियया परमेश्वरोऽपि स्वान्तःस्थां सूक्ष्मभावेनावस्थितां जड़-चेतनात्मिकां सृष्टिमारम्भे विविधं विस्तीर्य प्रलयकाले स्वान्तःस्थे लीनं करोतीत्युक्तम्। द्वितीयेनोदाहरणेन पृथिव्यां यथाऽन्न-तृण-वृक्ष-लतादीनामोषधीनां बीजवपनं भवति तथैव विभिन्न-भेदयुक्ताः ओषधयः तत्रोत्पन्नाः भवन्ति, न तत्र पृथिव्याः कश्चित् पक्षपातः। एवमेव जीवानां विविधकर्मरूपबीजवपनानुसारमेव परमात्मा विभिन्नयोनिषु तानुत्पादयति, न तत्र कश्चित् विषमतायाः निर्दयतायाश्च दोषः इति ध्वन्यते। तृतीयेनोदाहरणेन च एतत् स्पष्टीकृतं यत् यथा मनुष्याणां शरीरेषु सर्वथा विलक्षणलोमकेशादयो स्वयमेव प्रादुर्भूताः भवन्ति वृद्धिं च गच्छन्ति, एतदर्थं तैः जीवैः न कमपि विशिष्टः प्रयत्नः क्रियते तथैव परब्रह्म-परमेश्वरादिदं जगत् स्वभावत एव समयानुसारमुत्पद्यते वर्धते च। नैतत् कार्यसम्पादनाय स परमात्मा किमपि विशिष्टमाचरणं विदधाति। अत एवोक्तं श्रीमद्भगवद्गीतायां भगवता श्रीकृष्णेन-

**"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।**
**तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्॥"**[३९]

---

३७. तत्रैव-६/७

३८. मुण्डके-१/७

३९. श्रीमद्भगवद्गीतायाम्-४/१३

सम्प्रत्यत्र मुण्डकोक्तस्य जगदुत्पत्तिक्रमस्य वर्णनं क्रियते। तद्यथा–

**"तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।**
**अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम्॥"[४०]**

यदा जगद्रचनायाः सुकालः समागच्छति तदानीं परब्रह्म–परमेश्वरः स्वकीयेन संकल्पशक्तिरूपेण तपोबलेन वृद्धिमाप्नोति। अर्थात् परमात्मनि विविधस्वरूपसम्पन्नायाः सृष्टेः निर्माणस्य सङ्कल्पो जागृतो भवति। जीवानां कर्मानुसारं तस्मिन् परब्रह्मणि सृष्ट्यादौ या स्फुरणा भवति सैव तस्य तपः वेदितव्यः। तया स्फुरणया स परमात्मा यः खलु पूर्वमतिसूक्ष्मभावेनावस्थितो भवति स्थूलतामाप्नोति। अर्थात् स सृष्टिकर्त्ता ब्रह्मणः रूपमादधाति, ब्रह्मणा च सर्वप्राणिनामुत्पत्तिस्तथा वृद्धिप्रदात्र्यन्नमुत्पद्यते। पुनः अन्नात् क्रमशः प्राणः, मनः, कार्यरूपाकाशादयो पञ्चमहाभूतानि, समस्तप्राणिनः तत्तद् वासस्थानानि च, तेषां जीवानां विविधानि कर्म्माणि, कर्मभिश्च तेषामवश्यम्भावि सुख–दुःखरूपं फलमुत्पतत्येवमेव सम्पूर्णमिदं चराचरं जगदुत्पन्नं भवति।

स सम्पूर्णस्यास्य जगतः कारणभूतः परमपुरुषः परमेश्वरः साधारणतया, विशेषतया च सर्वान् जीवान् सम्यक्तया जानाति, तस्यैकमात्रं तपः ज्ञानमित्यस्ति। तस्य परमेश्वरस्य संकल्प–मात्रेणैवेदं प्रत्यक्षं दृश्यमानं विराट्स्वरूपं जगत् स्वयमेवाविर्भूतं भवति। तं सर्वशक्तिसम्पन्नं सर्वज्ञं सर्वकर्त्तारमव्ययपुरुषं ज्ञात्वा एतत् सर्वं ज्ञातम्भवतीति।

अत्र तावत् वैदिकविज्ञानानुसारं पुरुषस्वरूपं विविच्यते–

**"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमि ँ सर्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम्॥"[४१]**

अनेन मन्त्रेण तस्य परमपुरुषस्य विराट्स्वरूपं वर्ण्यते। यथा सहस्राणि शीर्षाणि यस्य स सहस्रशीर्षा, सहस्राण्यक्षीणि यस्य स सहस्राक्षः, सहस्रं पादाः यस्य स सहस्रपात्। सहस्रशब्दोऽत्रानन्तपर्यायः एतेनाभिप्रायेणास्य परमपुरुषस्यानन्तस्वरूपमुपवर्ण्यते। स च परमात्मा भूमिं सर्वत्र व्याप्य

---

४०. मुण्डकोपनिषदि–१/८

४१. शु.य.सं.–३१/१

जीवशरीरे दशाङ्गुलपरिमिते क्षेत्रे तिष्ठति इति भावः।

**"पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्।**
**उतामृतत्वस्येशानो यदन्नेनातिरोहति॥"**[४२]

स सर्वव्यापकः सच्चिदानन्दघनपरमात्मा एव यदिदं दृश्यमानं जगदस्ति तत्सर्वं वर्तते। यदतीतं जगत् यच्च भविष्यज्जगत् तत् सर्वं पुरुष एवेति।

**अन्यच्च– "एकं वा इदं विबभूम सर्वम्"।** ऋ.सं.८/५८/२
**"सर्वं खल्विदं ब्रह्म"।** छां. उप. ३/१४/१
**"एकमेवाद्वितीयं ब्रह्म"।** छां. उप. ६/२/१
**"ऐतदात्म्यमिदं सर्वम्"** छां. उप. ६/८/७

इत्यादिभ्यो मन्त्रब्राह्मणश्रुतिवचनेभ्यो ब्रह्मैवेदमेकमेव सन्नाना व्यपदिश्यते इत्यवगम्यते। तत्र चेयमेकैका व्यक्तिः–

**"चतुष्टयं वा इदं सर्वम्"** कौ. २/१

इति कौषीतकश्रुत्या चतुर्धा-चतुर्धा कृत्वा विभक्ता भवति–

पुरम्–

पुरुषः–

परात्परः–

निर्विशेष इति।

### चतुष्पाद्ब्रह्मणः पुरमिति प्रथमः पादः

तथा हीदं सर्वं यावदिह किञ्चिद्बहिर्धा दृश्यते स सर्वोऽयं विकारसंघो भूतग्रामत्वादात्मग्रामत्वाच्च पुरमित्यभिधीयते। विकारकूटा-नामेषामात्मना विगृहीतत्त्वादात्मनो वैविध्येन ग्राहकत्वाच्चेदं पुरं विग्रह इत्युच्यते। तत्रेते विकारकूटास्त्रेधा विभज्यन्ते–

औपपादिकाः, औपसर्गिकाः, औपजनिकाश्चेति।

---

४२. शु.य.सं.-३१/२

तत्र दिग्-देशः-कालः-संख्या-परिमाणम्-पृथक्त्वम्-संयोगः-विभागः परत्वमित्येते दश धर्माः केवलं भातिसिद्धाः स्वत एवोपपद्यन्ते। तस्मादौपपादिका एते भावनामया उपनामानः औपनामिका वोच्यन्ते।

अथ शुक्रशोणिते अन्नजलौषधानि-पृथवीरसाः-अन्तरिक्ष-रसाः-सूर्यचन्द्रादिद्युरसाः इतरसंसर्गजाश्च सर्वे धर्माः पार्ष्टिकाः परतः स्वस्मिन् संसृष्टा उपसर्गा औपसर्गिका वोच्यन्ते।

अथ प्रतिव्यक्ति स्वस्मादात्मन एव लोहकिट्टवज्जलफेनवद्दुग्ध-शरवत् स्वभावत उत्पद्यमानाः कतिपये विकारा उपजना औपजनिका वोच्यन्ते।

इत्थमेषां त्रिधा विभक्तानां विकाराणां संघः ईश्वरपुरुषापेक्षया विश्वमित्युच्यते, जीवपुरुषापेक्षया तु शरीरमित्युच्यते। तत्रेदं विश्वं त्रिधा विभक्तमाधिदैविकमाधिभौतिकमाध्यात्मिकञ्च अथेदं शरीरमपि त्रिधा विभक्तम्-कारणशरीरम्, सूक्ष्मशरीरम्, स्थूलशरीरञ्चेति। तच्च शरीरं पुरुषोपकरणतया बहिर्धाऽस्मिन् पुरुषे संसज्जते। स एष त्रिविधविकारसंघो ब्रह्मण एकः पादः।

### पुरुषो द्वितीयः पादः

### इदमेव शरीरं पुरम्। तत् त्रिविधम्–

आत्ममयम्, दैवतमयम्, भूतमयञ्चेति। त्रिष्वेतेष्वधिकरणेष्वन्तः प्राणविशेषः पुरवासित्वात्, पुरुषो भवति। स त्रिविधः क्षरः, अक्षरः, अव्ययश्चेति। एते त्रयः क्रमेण अवरः, परावरः, परः, इत्युच्यते।

तत्र क्षरपुरुषः सर्वेषां विकारसंघानामुपादानकारणं भवति। स हि प्रभवप्रतिष्ठापरायणत्वाद् विकाराणात्मात्मा। सर्वे विकाराः क्षरपुरुषाधारेण तिष्ठन्ति। यथा घटो मृत्तिकायाम्, पटस्तन्तुषु, एवं क्षरपुरुषे विकाराः।

तदन्तर्गतोऽक्षरपुरुषः। स हि सर्वेषां विकाराणां जनको निमित्तकारणम्। स हि कार्ये समन्वितोऽपि अविकुर्वाणस्तिष्ठति।

ततोऽप्यन्तर्गतोऽव्ययपुरुषः। स च यद्यपि कार्यत्वकारणत्वाभ्यां

शून्यो विशुद्ध आश्रयमात्रम्, तथापि तक्षुः-साध्यायां सृष्टौ सूर्यप्रतापादिवत् स्वरूपसत्कारणं भवत्येव।

सोऽयं त्रिपुरुषभेदोऽयमात्मग्रामो ब्रह्मणो द्वितीयः पादः।

**परात्परस्तृतीयः पादः**

अविनाभूतैरेभिस्त्रिभिः पुरुषैः कश्चिदेकः पुरुष उपपद्यते गूढोत्मा प्रजापतिर्नाम। मायाबलौपाधिकमात्रानिमित्तेऽव्ययपुरुषेऽक्षरपुरुषस्य, तत्र पुनः क्षरपुरुषस्य निगूढतया त्रयाणामप्यन्यूनानतिरिक्तैकायतनत्वेन प्रतिपन्नत्वात्।

स एष एक एवाविभक्तो गूढोत्मा पुरुषो विभक्तेषु तत्तत् भूतेषु प्रत्येकं परिव्याप्त्या तत्तदवच्छेदाद् विभक्तवत् स्थितः प्रतिव्यक्ति भिद्यते। अनन्ताश्चैते प्रतिव्यक्तिभिन्नास्त्रिपुरुषैकपुरुषरूपा योगमायोपाधिपरिच्छिन्नाः प्रजापतयः। तेषामनन्तानामुत्पद्योत्पाद्यकाले समवलीयमानानां प्रजापतीनामन्यः कश्चिदसीमो निरुपाधिकः प्रभवपरायणप्रतिष्ठापरायणभूतोऽवलम्बः सम्भाव्यते। अवश्यञ्चापां समुद्रे बुद्बुद्वत् सर्वेऽप्येते तत्तदुपाधिपरिच्छिन्ना बलवन्तो भावाः कश्मिंश्चिदपरिच्छिन्ने बलसमुद्रे ब्रह्मण्यवलम्बन्ते। सोऽयं दिग्देश-कालाद्यनवच्छिन्नः कश्चिदसीमो बलसमुद्रात्मा ब्रह्मभावः परात्पर इत्युच्यते।

क्षराक्षरपुरुषप्रतिष्ठावत्वादव्ययः पुरुषेषु परो भावः। ततोऽप्यय-मनवच्छिन्नो भावः परो भवति, अपरिच्छिन्नस्य सर्वपरिच्छिन्नातिष्ठा-वत्वोपपत्तेः। तस्मादनन्तबलसमुद्रोऽयमसीमो ब्रह्मभावः परात्पर इत्युच्यते। स चानन्तानन्तबलोत्थानविलयनाश्रयभूतो रसस्तादृक्सर्वविधबलविशिष्टः प्रतिपत्तव्यः। विनश्वरस्वभावतया प्रतिक्षणोत्पन्नविनष्टान्यपीमान्यशेषाणि भिन्न-भिन्नलक्षणानि बलानि कस्मिंश्चिदेकस्मिन्नविनाशिनि रसे नित्यं सन्निहितानि भवन्ति। तेन सर्वविधबलविशिष्टमेनं नित्यैकरसं परात्परभाव-मभयशब्देनाप्याहुः। सोऽप्यमेकोऽद्वितीयः परात्परो ब्रह्मण एकः पादः।

**निर्विशेषस्तुरीयः पादः**

यद्यपि रसबलयोरनयोरमृतमृत्युरूपयोर्मध्ये नैकमप्यन्येन विना कृतं भवति, उभयोरयुतसिद्धत्वात्, तथापि यदि बुद्ध्या बलोपाधिकं विशुद्धं रसमात्रं पृथग् भाव्यते, तदा स रसो निर्विशेष इत्युच्यते। यथा परात्परः

सर्वधर्मोपपन्नो ब्रह्मभाव आख्यातस्तथा अनिर्वचनीयश्च वेदे श्रूयते। तस्य निर्लक्षणतया विशिष्यज्ञानाभावादज्ञेयत्वाद्। सामान्यतस्तु सत्तामात्रेण रसः सर्वविधविकारात्पृथग्भूतः परिज्ञायत एव। सोऽयं निर्विशेषो विशुद्धैकरसो निर्विशेषस्तुरीयः पादः।

## पुरुषस्य चितिसम्बन्धात् सृष्टिहेतुत्वम्

परात्परस्य पुरुषस्य च सर्वविधबलवैशिष्ट्यसाम्येऽपि पुरुषे तावच्चितिसम्बन्धेन सर्वविधबलानि परस्परतः सम्बध्नन्ति। चयनाच्च बलसम्पन्नं रूपं जगत्सृष्टिमधिकुरुते। चितिरेव हि सृष्टिः। एकस्य बलस्यान्यबलोपरि चयनादयस्तयोः संसर्गः परस्परसम्बन्धात्मकः स एव बन्धो बलसंसृष्ट्यात्मकत्वाद् संसृष्टिरित्युच्यते। तत्र हि सृष्टौ क्वचिद् बलानां हृदयेऽन्योन्यबन्धनं ग्रन्थिरूपं जायते। स हृदयग्रन्थिर्हृद्ग्रन्थिरित्युच्यते। हृद्ग्रन्थिसम्पादनमेव चयनमित्युच्यते। बले बलचयनेन यो हृद्ग्रन्थिस्तेन बलानां परस्परबन्धात् परस्परोपसृष्ट्योर्यदपूर्वमेकं सम्पद्यते सा सृष्टिः। तदेव रूपं विश्वं जगन्नामाख्यायते। सर्वे हीमे परिदृश्यमाना विकारसंघा बहूनां बलानां बन्धरूपाः सृष्टयो द्रष्टव्याः।

## सृष्टिप्रतिसृष्टिकारणबलनिरुक्तिः

द्विविधानीमानि बलानि–संसर्जकान्यन्यानि, व्यवच्छेदकानि चान्यानि। तत्र संसर्जकबलानामुदये स्वभावत एवैतानि बलानि परस्परतः संस्रष्टुमुपक्रमन्ते। उत्तरोत्तरमधिकाधिकं च संसृज्यमानानि बलानि पुनर्ग्रन्थिः पुनरन्यं ग्रन्थिमुत्पाद्योत्पाद्य क्रमेण सूक्ष्मात्स्थूलं स्थूलं रूपं जनयन्तीति सृष्टिक्रमो भवति। अथैतस्मिन्नेव बन्धे व्यवच्छेदकबलोदयात् क्रमेण तेषां बलानामुद्बन्धनं जायते। हृद्ग्रन्थिविभेदनाद्बलबन्धविमोक्षः। ततश्च सृष्टिविच्छेदः इत्येवं प्रतिसंचरोपपत्तौ क्रमेण स्थूलात्सूक्ष्मं सूक्ष्मं रूपं संपद्यते। सैषा प्रतिसृष्टिर्द्विविधा सम्पद्यते–नित्या साध्या च। स्वत एव प्रकृत्या जायमाना नित्या। तत्र कदाचिदवश्यमेषां सर्वेषां सृष्टिरूपाणामुद्-बन्धनान्मोक्षो भवतीति मन्यामहे। किन्तु नैतावता सृष्टिविच्छेदः सम्भाव्यते। आसां सृष्टीनामुद्बन्धनेऽपि तत्कालमेवान्येषां बलानां प्रकृत्यैवोदयसंभवात्

सृष्टिक्रमस्य धारावाहिकतया प्रवाहरूपेण नित्यत्वात्।

यथा खल्वयुतवर्षेभ्यः प्रागुत्पन्नानां पृथिवीपृष्ठे यत्र तत्र प्रतिष्ठितानां वृक्षविशेषाणामिदानीं काले कुत्रापि स्थितिर्नास्ति। तथाऽप्यस्मिन् कालेऽपि पृथिवीपृष्ठे यत्र तत्रैतेऽसंख्या वृक्षविशेषा न सन्ति– निर्मूलमुत्सन्नानामपि तेषां प्रातिनिध्येनान्येषामन्येषां वृक्षाणां यत्र तत्र पुनरुत्पन्नत्वात्। एवमेव ये यावन्तो वृक्षा इदानीं काले यत्र तत्रोपलभ्यन्ते, सर्वेऽप्येतेऽयुतवर्षोत्तरमुत्पन्नाः सन्तः क्वचिदपि न स्थास्यन्तीति मन्यामहे। किन्तु तदानीमप्यन्येऽन्ये वृक्षा उत्पद्य प्राग्वत् पृथिव्यामवश्यं स्थास्यन्तीति विश्वसिमः। दृष्टान्तोऽयं सृष्टिपरिवर्तनवन्मोक्षस्याप्युपपादको द्रष्टव्यः। परः सहस्रादेभ्यः प्राक्कालिका बलानां बन्धाः सर्वेऽप्युद्बन्धनाद्विमुक्ताः प्रत्येतव्याः। अपरे चापरे च बलानां बन्धा इदानीं सृष्टिहेतवो विद्यन्ते। तेषामपि कदाचिन्मुक्तिर्भविष्यति। अपरे च बन्धा उत्पत्स्यन्ते। इत्येष बन्धविमुक्तिक्रमो धारावाहिकप्रवाहे अस्मिन्संसारेऽनुवर्त्तमानो द्रष्टव्यः। स एष प्रतिसृष्टौ मुक्तिक्रमो नित्यः प्राकृतिकत्वात्। एवमेव स कृत्रिमोऽपि सम्पाद्यते। तत्र कर्मैकान्तनिवृत्त्या निष्कामकर्मणा वा प्रवर्तमानो विद्वान् विशुद्धात्मज्ञानेन सर्वविधानि सुकृतदुष्कृतानि कर्माणि निस्तीर्य विमुक्तो भवतीति ज्ञानिनः प्रतिजानते। तथा चेत्थं द्विविधा बन्धमुक्तिर्भवतीति सिद्धम्। इत्थं द्विविधोऽपि प्रतिसृष्टिक्रमः सृष्टिक्रमो वा रसे बलानामन्योन्यचयनात्सम्पद्यत इति बोध्यम्।

इति विज्ञानविद्युति समीक्षाचक्रवर्ति म.म. श्री मधुसूदन ओझाजीनां विचाराः। अत्र प्रकृतौ ज्ञानकर्मात्मकाव्ययात्मनः कलानां निरूपणं भवति। अव्ययपुरुषोऽयं स्वस्वरूपेण सर्वथा ज्योतिर्मयो वर्तते। ज्योतिर्घनोऽयमव्ययात्मा प्रकृतिकृपया विश्वरूपेण परिणतो भवति। प्रकृतेः अनुग्रहात् अव्ययस्य एकांश एव विश्वरूपेण विराजते। विश्वनिर्माणानन्तरं विश्वे प्रविष्टः सन् स एवाव्ययात्मतत्त्वं विश्वरूपप्रजायाः ईशो भूत्वा 'प्रजापतिः' इत्यनेन नाम्ना प्रसिद्धो भवति। उक्तं हि यथा वेदे–

**"ततो व्विराडजायतव्विराजो अधिपूरुषः।**
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥"[४३]**

---

४३. शु.य.सं.–३१/५

तत्तदुपाधिभेदवशात् विश्वावच्छिन्नस्य अस्य प्रजापतेः परमप्रजापतिः, प्रतिमाप्रजापतिः, देवसत्यप्रजापतिः, शिपिविष्टप्रजापतिश्चेमे चत्वारो विवर्ताः निर्मीयन्ते। पूर्वं यद्विज्ञानविद्युति चतुष्पाद्ब्रह्मणः स्वरूपं वर्णितं तदुपलक्षीकृत्यैव "चतुष्टयं वा इदं सर्वम्" इति श्रुतिष्वाम्नातम्।

शिपिविष्ट-देव-प्रतिमा-प्रजापतीन् स्वगर्भे प्रतिष्ठापकः, विश्वे सर्वप्रथमं स्वयम्भूरूपेणाभिव्यज्यमानः क्षराक्षरविशिष्टः अव्ययमूर्तिः षोडशीप्रजापतिः "परमप्रजापतिः" वर्तते।

अस्य प्रथमो विश्वव्यापको विकासः स्वयम्भूरस्ति – अतः स्वयम्भू एव परमप्रजापतिर्मन्यते। परमेष्ठी-सूर्य-चन्द्रमा-भूपिण्डाश्चेमे चत्वारः प्रतिमाप्रजापतयः सन्ति। तृतीयश्च प्रजापतिः देवसत्यः साक्षी-भोक्ता भेदेन द्विविधः। द्वयोरनयोः प्रजापत्योः स्वरूपं भूपिण्डेन संलग्नया प्राणमयी अमृता पृथिव्या सहास्ति। प्राणमय्यां पृथिव्यां त्रिवृत् (९), पञ्चदश (१५), एकविंश (२१) स्तोमभेदात् लोकत्रयस्य विकासो भवति। इदमेव त्रैलोक्यं स्तोमसम्बन्धात् "स्तोम्यत्रिलोकी" कथ्यते। एषु त्रिष्वपि स्तोमेषु क्रमशः- विराडग्निः, हिरण्यगर्भो वायुः, सर्वज्ञः इन्द्रश्च अग्नेरवस्थात्रयभेदेनावतिष्ठन्ति। इमानि त्रीण्यपि तत्त्वानि देवतारूपाः सन्ति तथा चैमे त्रयोऽपि देवाः एकस्य सत्याग्नेः विकासः। अतः त्रयाणां देवतानां समष्टिः 'देवसत्यप्रजापति' रित्युच्यते। त्रैलोक्यव्याप्तोऽयमेव प्रजापतिः "सर्वभूतान्तरात्मा" "साक्षी सुपर्ण" आदिभिः नामभिः व्यवहृतो भवति। वैज्ञानिक-भाषायां अयमेव देवसत्यप्रजापतिः ईश्वरप्रजापतिरुच्यते। जीवनामको देवसत्यप्रजापतिः शिपिविष्टप्रजापतिश्च उभे प्रजापती साक्षीप्रजापतेः उदरे भुक्ताः भवन्ति। स शास्ता अस्ति इमौ शासितौ। सः साक्षी अस्ति, इमौ च भोक्तारौ। स सर्वभूतान्तरात्माऽस्ति, इमौ स्वभूतान्तरात्मानौ। सः त्रैलोक्यव्याप्तोऽस्ति, इमौ शरीरव्याप्तौ स्तः।

साक्षीदेवसत्यप्रजापतेः विराड्भागात् वैश्वानराग्नेः विकासो भवति, हिरण्यगर्भभागात् तैजसः वायोः जन्म भवति तथा च सर्वज्ञभागात् प्राज्ञेन्द्रस्य जन्म भवति। इत्थमीश्वरीयदेवसत्यात् वैश्वानर-तैजस-प्राज्ञस्य च समष्टिरूपस्य जीवसत्यस्य विकासो भवति। अयमेव 'मध्वद्' "भोक्ता-सुपर्ण"

आदिभिर्नामभिर्व्याख्यातोऽस्ति। अस्य जीवप्रजापतेः द्वौ विभागौ भवतः– १. वैश्वानर-तैजस-प्राज्ञः २. वैश्वानर-तैजसश्च। वैश्वानर-तैजस-प्राज्ञ-मूर्तिः संसज्ञजीवाः कृमि-कीट-पशु-पक्षि-मनुष्य-अष्टविधदेवयोनिः एषु षट्सु विभागेषु विभक्ताः सन्ति। एतेषाम्पुनरनेकविभागाः भवन्ति। वैश्वानर-तैजसमूर्तिः अन्तःसंज्ञजीवादारभ्य सम्पूर्णौषधि-वनस्पत्यादिभिः सम्बन्धिताः सन्ति।

चतुर्थः शिपिविष्टप्रजापतिरस्ति। येषु पदार्थेषु केवलं वैश्वानरोऽग्निः विकसितो भवति, यश्च खलु लोकभाषायामचेतन इत्युच्यते, स एव सर्वपदार्थप्रपञ्चः शिपिविष्टप्रजापतिरित्येतेन नाम्ना प्रसिद्धोऽस्ति। जीवसंस्थाक्रमे अयमेवासंज्ञजीवः उच्यते। धातु-उपधातु-रस-उपरस-विष-उपविषादीनां रसवर्गाणां, पुस्तकं-लेखनी-पुस्तिका-ज्ञानपीठिका-उत्पीठिका-आसन्द्यादीनां भूतभौतिकवर्गाणां सर्वेषां शिपिविष्टकोट्यामन्तर्भावो विद्यते।

सांख्यदर्शनानुसारम् उपर्युक्तः प्रजापतिसर्गः चतुर्दशभागेषु विभक्तोऽस्ति। ससंज्ञजीवप्रजापतेः षड् विभागेषु देवयोनयः किं बहुना देवसर्गः राक्षस- पिशाच-यज्ञ-गन्धर्व-पितर-ऐन्द्र-प्राजापत्य-ब्राह्मभेदैः अष्टभागेषु विभक्ताः सन्ति। अयमष्टविधदेवसर्गः "सत्त्वविशालसर्गः" इत्युच्यते। कृमि-कीट-पशु-पक्षि-मनुष्याणां पञ्चानामपि ससंज्ञजीवानां समष्टिः "रजोविशालसर्गः" मन्यते। अन्तःसंज्ञ-असंज्ञसर्गः "तमोविशालसर्गः" कथ्यते। सांख्यशास्त्रे शिपिविष्टस्य तमोविशालसर्गे एवान्तर्भावो मन्यते। परं विज्ञानशास्त्रे शिपिविष्टविभागं स्वतंत्रं मत्वा तस्य पञ्चदशविभागाः मन्यन्ते। एषां पञ्चदशविभागानामधिष्ठाता ईश्वरीयः देसत्यप्रजापतिरस्ति। सम्पूर्णेषु भूतसर्गेषु स देवसत्यः व्याप्तोऽस्ति। "स भूमिं सर्वतस्पृत्वाऽप्यतिष्ठद्दशाङ्गुलम्।"[४४] अत एव तस्य "सर्वभूतान्तरात्मा" इति संज्ञा अन्वर्थिका भवति। अस्य षोडशतमस्य ईश्वरीयदेवसत्यस्य सम्बन्धात् सर्गप्रपञ्चमिदं षोडशकलं भवति। इमामेव सर्गव्याप्तिं लक्ष्यीकृत्य **"षोडशकलं वा इदं सर्वम्"**[४५] इत्युक्तम्। तद्यथा–

---

४४. शु.य.सं.-३१/१
४५. श.प.ब्रा.-५.४.४.२

१. परमप्रजापतिः– स्वयम्भूरूपेण व्यक्तः षोडशीपुरुषः
२. प्रतिमाप्रजापतिः– परमेष्ठी–सूर्यः–चन्द्रः–पृथिवी
३. देवसत्यप्रजापतिः– अग्नि–वायु–इन्द्रात्मकः चतुष्पाद्ब्रह्म
४. शिपिविष्टप्रजापतिः– असंज्ञजीवः (अग्निमयः)

**देवसत्यप्रजापतिः –**

१. ईश्वरीयदेवसत्य प्रजापतिः (विराट्–हिरण्यगर्भ–सर्वज्ञमूर्तिः)
२. जीवदेवसत्यप्रजापतिः (वैश्वानर–तैजस–प्राज्ञमूर्तिः)

**2. जीवदेवसत्यप्रजापतिः ( वैश्वानर–तैजस–प्राज्ञमूर्तिः )**

| सर्गः | | योनयः | भेदाः | |
|---|---|---|---|---|
| सत्त्वविशालसर्गः | 3 | देवयोनयः | १. ब्राह्मः<br>२. प्राजापत्यः<br>३. ऐन्द्रः<br>४. पैत्र्यः<br>५. गान्धर्वः<br>६. यक्षः<br>७. पैशाचः<br>८. राक्षसः | वैश्वानर– तैजस–प्राज्ञमयाः ससंज्ञजीवाः (अग्नि–वायु–इन्द्रमयाः) |
| रजोविशालसर्गः | 2 | तिर्यग्योनयः | ९. मनुष्याः<br>१०. पशवः<br>११. पक्षिणः<br>१२. कीटाः<br>१३. कृमयः | |
| तमोविशालसर्गः | 1 | भूतयोनयः | १४. औषधिवनस्पतयः | वैश्वानर– तैजसमयाः प्राज्ञगर्भिताः अन्तः संज्ञजीवाः (अग्नि–वायुमयाः–इन्द्रगर्भिताः) |
| | | भूतभौतिकयोनयः | १५. शिपिविष्टः (अचेतनवर्गः) | वैश्वानरमयाः– तैजसप्राज्ञगर्भिताः असंज्ञजीवाः (अग्निमयाः–वाय्विन्द्रगर्भिताः) |

इत्थं भूतभौतिकसर्गसम्बन्धात् विराट्-हिरण्यगर्भ-सर्वज्ञ-मूर्तिरीश्वरीय-देवसत्यप्रजापतिः (सर्वभूतान्तरात्मा साक्षी सुपर्णः) षोडशकलाभिः परिपूर्णो भवति। अयमेव षोडशीगर्भितः परमप्रजापतिः अश्वत्थवृक्षोऽस्ति। पृथिवीरूपिण्यां शाखायां ईश्वरीयदेवसत्यरूपः साक्षी सुपर्णः, तथा च पञ्चदश (१५) विधाः भूतभौतिकरूपः जीवसुपर्णः प्रतिष्ठितोऽस्ति। एकः भोक्ता अपरश्च साक्षी। उभावपि तस्य महाविश्ववृक्षस्यैकशाखायां अमृतायां पृथिव्यामाधारे प्रतिष्ठितौ स्तः। एकः कर्मबन्धने लिप्तः, अपरः सततं कर्मरतः सन् अपि अलिप्तो वर्तते।

तत्र "एकं वा इदं विबभूव सर्वम्"[४६] इति श्रुतिवचनात् सम्पूर्णमिदं प्रपञ्चं तस्यैव विवर्तोऽस्ति। स एव षोडशीपुरुषः अक्षरव्यापारात् क्षररूपेण सर्वमभवत्। यदियं जड़सृष्टिः तदपि स एव यच्चेतन सृष्टिस्तदपि स एवास्ति। देवः, असुरः, ऋषिः, पितरः, गन्धर्वः, मनुष्यः, पशुः, पक्षी, कृमिः, कीटः, वृक्षः, औषधिः, वनस्पतिः, समुद्रः, नदः, नदी, लौहः, पाषाणः, सुवर्णम्, रजतम्, सर्वं स एव। यथोक्तमीशावास्योपनिषदि–

**"ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।"[४७]**

अत्र प्रश्नः समुदेति यत् यदि षोडशीपुरुषः अव्ययः अभिन्नरूपोऽस्ति तर्हि तस्मादेकस्मात् नानाभावाः कथं समुत्पन्ना अभवन्? यतो हि कारणस्य गुणा एव कार्ये समागच्छन्ति। यथा मृत्तिकायाः धर्मः निश्चितरूपेण घटस्यारम्भकः। अत्र यदि कारणब्रह्म एक एवास्ति तर्हि अस्याम् अवस्थायां कार्यरूपे प्रजासर्गे नानात्वस्योदयः कथं संभवः? अस्याः शंकायाः समाधानाय विद्याकर्म्ममयस्याव्ययात्मनः कर्मभागमभिलक्ष्य विशेषरूपेण कर्मभागस्य मनः-प्राण-वागिति तिसृषु कलासु वाक्कला एव प्रधाना।

आनन्द-विज्ञान-मनोमयोऽव्ययः विद्यामयोऽस्ति। विद्यामयोऽव्ययो मुक्तिसाक्षी विद्यते। मन-प्राणवाङ्मयोऽव्ययः कर्ममयोऽस्ति। अयं कर्ममयः अव्ययः सृष्टिसाक्षी। प्रकृतौ (सृष्टिप्रकरणे) अस्यैव प्रधानता भवति। मनः

---

४६. ऋ.सं. ६/४/२९
४७. शु.य.सं.-४०/१

ज्ञानशक्तिघनः, प्राणः क्रियाशक्तिघनः, वाक्-चार्थशक्तिघनाऽस्ति। अपरस्मिन् शब्दे मनः ज्ञानमूर्तिः, प्राणः क्रियामूर्तिः, वाक्च बलमूर्तिरस्ति। मनोरूपं ज्ञानं, प्राण-रूपी क्रिया, वाक्रूपं बलञ्च त्रयो हीमे अव्ययात्मनः स्वाभाविक्यः शक्तयः सन्ति। अव्ययपुरुषः शक्तिरूपोऽस्ति, अतः स सृष्टिकर्तृत्वभावेन सर्वथा बहिर्भूतोऽस्ति। शक्तिमन्तं तत्त्वमेव सृष्टिसर्जने समर्थं भवति। अव्यये-परा-प्राकृतिनाम्ना प्रसिद्धेऽक्षरे चाव्ययस्य तिसृणामपि शक्तीनां समावेशो भवति। अक्षरस्य ज्ञानशक्त्या अक्षरः सर्वज्ञः, क्रियाशक्त्या सर्वशक्तिमान्, बल-शक्त्या च सर्ववित् सृष्टिकर्ता भवति। तत्राव्ययः न कर्ता, न कारणं न च कार्यरूपोऽस्ति अपितु आलम्बनमात्रः सन् केवलं शक्तिरूपोऽस्ति। अव्ययस्य स्वरूपमभिलक्ष्य श्रुतावुक्तम्-

> "न तस्य कार्यं करणञ्च विद्यते
> न तत् समश्चाभ्यधिकश्च श्रूयते।
> परास्य शक्तिर्विविधैव श्रूयते
> स्वाभाविकी ज्ञानबलक्रिया च॥"[४८]

अनेकेषु स्थलेषु मनः-प्राण-वाङ्मयोऽव्ययः उक्तः। वस्तुतः सृष्टिकर्त्ता अक्षरपुरुष एव मनः-प्राण-वाङ्मयो विद्यते। अयमेव विश्वस्यात्मा, अयमेव च विश्वकर्त्ता विश्वेशो विद्यते। एतस्मात् विश्वकर्तुरक्षरपुरुषात् तत्रस्थिताः ज्ञान-क्रिया-बल-शक्तयः क्षरपुरुषकृपया विश्वरूपेण परिणताः भवन्ति। तत्र मन-प्राणौ सर्वथा विकृतिरहितौ परन्तु वाक्भागः क्षरसम्बन्धात् विकृतो भवति। वाक्भागः स्थूलत्वात् विकृतत्वाच्च विश्वकोट्यां समाविष्टो भवति। इदमेव वाक्तत्त्वं पश्चात् पञ्चभौतिकसृष्टिक्रमे "आकाश" नाम्ना प्रसिद्धं भवति। आकाशरूपायाः वाक्शक्तेः विकासभूमिः मनः-प्राणरूपी आत्मा एवास्ति। वाक् बलरूपं भवति। बलं संसर्गः अनन्तञ्च। एकं बलम् अन्येन बलेन सम्मिलितं भवति। अयमेव बलसंसर्गः चितिरित्युच्यते। वाग्बले अन्यबलानां चितिर्भवति; अंशरूपेण चितिधर्मावच्छिन्नं वाग्बलं स्थूलं सत् वायुरूपेण परिणतं भवति। यदा वायुः स्थूलतां प्राप्नोति तदा स

---

४८. श्वेताश्वतरोपनिषदि ६/८

तेजस्तत्त्वं कथ्यते। एवं प्रकारेण क्रमशः तैजसः जलम्, जलेन च पृथिवी निर्मीयते। अतः एकमेव वाक्तत्त्वं स्वस्वरूपबलकारणतः पञ्चरूपाणि धारयति। वाक्तत्त्वस्यैतामेव सर्वभूतव्यापकतामभिलक्ष्य श्रुतावुक्तम् **"अथो वागेवेदं सर्वम्"**[४९] अस्य आशयस्य स्पष्टीकरणं इत्थं श्रुतिषु प्रतिपादितम्–

**"तस्माद्वा एतस्मादात्मनः मनःप्राणाभ्यां आकाशः (वाक्) सम्भूतः। आकाशाद् वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी।"**[५०]

पूर्वं यदुक्तं षोडशीपुरुषविषये यद् "षोडशकलं वा इदं सर्वम्" इति। तत्रोक्ताः षोडशकलाः बलकोशाः उच्यन्ते। अर्थात् परब्रह्मपरमात्मनि षोडशबलकोशाः विद्यन्ते। तैः बलकोशैः परिपूर्णोऽयं परमात्मा षोडशकलाभिः परिपूर्णः कथ्यते। तद्यथा– षोडशबलकोशेषु १-४-४-४-३ इति क्रमो वर्तते। तत्र प्रथमे बलकोशे विद्यानामकः स्वतन्त्रोऽस्तिबलकोशः। द्वितीये बलकोशे– माया, जाया, धारा, आपः चैते चत्वारो बलकोशाः सहकारिणः सन्ति। तृतीये बलकोशे– हृदयं, भूतिः, यज्ञः सूत्रञ्च इमे चत्वारो बलकोशाः सहचारिणः। चतुर्थे बलकोशे– सत्यं, यज्ञः, अम्बः, मोहाश्चैमे चत्वारो बलकोशाः सहचारिणः। पञ्चमे च बलकोशे– वयः, वयोनाधः, वयुनश्चैते त्रयः बलकोशाः सहचारिणः सन्ति।

एवंविधान् यच्चयावत् (बलकोशानुगृहीत) बलान् स्वकीये उदरे प्रतिष्ठापकः शान्तमूर्तिः रसतत्त्वमेव परात्परपुरुषोऽस्ति। धर्मस्वरूपसम्पादकानि सर्वाण्यपि बलानि अस्य गर्भे प्रविष्टानि सन्ति। अत एवायं सर्वधर्मोपपन्नः इत्यनेन नाम्ना व्यवहृतो भवति। निर्विशेषवद् व्यापकः, अतः विश्वातीतः उच्यते। अयमेव परात्परः 'ब्रह्मवनम्' इति नाम्ना प्रसिद्धोऽस्ति।

---

४९. ऐ. आ. ३/१/६
५०. तै.उ.-२/१

अस्य परात्परपुरुषस्यैकः अपरः विस्तारः–




**"इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु निचित्य धीराः प्रेत्यादस्माल्लोकादमृता भवन्ति॥"**

केनोपनिषदि–२/५

षोडशीपुरुषस्याव्ययकला आलम्बनरूपेण विश्वातीतोऽस्ति। अक्षरस्य विश्वातीतता सेतुभावेन सम्बन्धं स्थापयति। आत्मक्षरस्य विश्वातीतत्वं मर्त्यरूपस्य वैकारिकविश्वस्य भिन्नताभिस्संम्बन्ध्यते। महामायाऽपेक्षया अव्ययः विश्वेऽस्मिन् प्रविष्टः, विश्वापेक्षया अव्ययः अप्रविष्टः, अतो विश्वातीतः। विश्वापेक्षया अक्षरो विश्वस्य सीमा, अत एव विश्वस्य सेतुः (तटः) कथ्यते। वैकारिकविश्वापेक्षया आत्मक्षरविश्वस्यापादानम्, अत एव वस्तुतः

आत्मक्षर एव विश्वप्रविष्टो मन्यते। आत्मक्षरोऽयं अक्षरात् अव्ययात् च नित्ययुक्तो वर्तते, अत एवान्ततः 'षोडशीपुरुष' एव विश्वप्रविष्टो मन्यते। अत एव षोडशीपुरुष एव विश्वसृष्टेः कारणं भवति।

अव्ययः आलम्बनं, धरातलः, अक्षरः असमवायिकारणम्। मनःप्रधानोऽव्ययो ज्ञानमूर्तिः, प्राणप्रधानोऽक्षरो क्रियामूर्तिः, वाक्प्रधान आत्मक्षरोऽर्थमूर्तिः। ज्ञानमयोऽव्ययः धरातले प्रतिष्ठितो भूत्वा अव्ययज्ञानात् सर्वज्ञो भूतः सन् विश्वरचनां करोति। आत्मक्षरस्य ब्रह्मा, विष्णुः, इन्द्रः, अग्निः, सोमश्च पञ्चैताः मर्त्यकलाः उक्ताः। अक्षरव्यापारात् एभ्यः कलाभ्यः क्रमशः प्राणः, आप्, वाक्, अन्नादः, अन्नं च इमे पञ्चविकारक्षराः उत्पन्नाः भवन्ति। आत्मक्षरस्य पञ्चकलासु प्रथमा ब्रह्मा नाम्नी कला मूलरूपाऽस्ति। अन्याश्च विष्णु-इन्द्र-अग्नि-सोमा इत्येताः चतस्रः कलाः तूलरूपाः सन्ति। सा मूलकला (ब्रह्मकला) एव तूलकलाः स्वगर्भे स्थापयन्ती प्राणादिपञ्च-विकारकलाः अग्रे कृत्वा विश्वनिर्माणे समर्था भवति। अत्र पञ्चविकारक्षरेषु अन्नादोऽग्निरूपो; अन्नं सोमरूपश्चास्ति। अन्नादोऽग्निः रूद्ररूपः। एतस्य रुद्रस्य कृपया अन्नसोमस्य स्वतंत्रता नष्टा भवति। एतदेव अन्नसोमस्यान्नादाग्निरूपे रुद्रेऽन्तर्लीनत्वमेवान्नसोमस्य ग्रीवाकृन्तनं मन्यते। एवंविधानि ब्रह्मणः सृष्ट्यारम्भे यानि प्राणादीनि पञ्चमुखानि आसन्, रुद्राग्निना सोममुखस्य कृन्तनात् चत्वारि एव मुखानि अवशिष्टानि भवन्ति। अयमेव चतुर्मुखो ब्रह्मा सम्पूर्णस्यास्य चराचरविश्वस्य मूलमस्ति। एभिः चतुर्भिर्मुखैः क्रमशः प्राणमुखात्- वेदसृष्टिः, आपोमुखात्- लोकसृष्टिः, वाङ्मुखात्- देवसृष्टिः, अन्तर्गर्भितात् अन्नादमुखात्- भूतसृष्टिः इत्येताः चतस्रः सृष्टयो भवन्ति।

ऋग्वेदस्य पुरुषसूक्तानुसारं सृष्टिर्महायज्ञोऽस्ति। यथा-

**"यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।**
**ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥"[५१]**

५१. ऋग्वेदे-१०/९०/१६

निरुक्तकर्त्रा यास्काचार्येणोक्तम्–

**"अग्निनाग्निमयजन्त देवाः। अग्निना जीवेनान्तःकरणेन वाग्निं परमेश्वरमयजन्त॥"**[५२]

सृष्टिर्महायज्ञोऽयमनादिकालात् प्रचलति। सृष्टिमहायज्ञस्य महाक्रतुः, यजमानो विष्णुः, यजमानपत्नी चादितिः स्वधा प्रकृतिरस्ति। **"अदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय॰"**[५३] इति मन्त्रः यजुर्वेदे पठ्यते। अनेन मन्त्रेणादितिः विष्णोः पत्नी इति सिध्यति। सृष्टिमहायज्ञस्य यजमानः सर्वदा युवा, जनिता, उत्पादकः, जनकः, विधाता चास्ति। **"स नो बन्धुर्जनिता स विधाता"**[५४] यजमान-पत्नी अदितिः प्रकृतिरुक्ता साऽपि नित्या सदा सौभाग्यवती सृष्टेः जननी अस्ति।

महायज्ञेऽस्मिन् एकं चेतनतमं महाशक्तिसम्पन्नं, सर्वव्यापकं तत्त्वं विद्यते। एतदेव तत्त्वं कदाचित् पुरुषरूपेण पिता, स्त्रीरूपेण माता, तात्त्विक-रूपेण च नपुंसकमस्ति। वेदेषु त्रिषु लिङ्गेषु तस्य वर्णनमुपलभ्यते। तद्यथा– **"सा विश्वायुः सा विश्वकर्मा सा विश्वधायाः।"**[५५] सृष्टिमहायज्ञेऽस्मिन् हिरण्यगर्भः विराट्पुरुषः अन्तस्तापभूतेऽग्निकुण्डे शक्तिरूपां घृताहुतिं प्रयच्छति। उक्तं हि यथा पुरुषसूक्ते–

**"यत्पुरुषेण हविषा देवा यज्ञमतन्वत।**
**वसन्तोऽस्यासीदाज्यङ्ग्रीष्म इध्मः शरद्धविः॥"**[५६]

सृष्टियज्ञेऽस्मिन् वसन्ताद्याः ऋतवः एव आज्येध्महवीरूपाः व्याख्याताः। अत एवास्य यज्ञस्य नाम महायज्ञः महाक्रतुः महाकविः अभवत्। महायज्ञेनानेकानि विविधानि तत्त्वानि निर्मीयन्ते। तत्त्वनिर्माणपुरः-सरमनेकविधस्य जड़रूपिब्रह्माण्डस्य निर्माणं भवति। ब्रह्माण्डे द्युलोकः पृथिवी च परस्परं पति-पत्नीभावेन सृष्टिं करोति। श्रुतिषु "पृथिवी माता द्यौः पिता" अनेकत्र पठ्यते।

---

५२. निरुक्ते-१२/४१
५३. यजुर्वेदे-२९/६०
५४. यजुर्वेदे-३२/१०
५५. यजुर्वेदे-१/४
५६. यजुर्वेदे-३१/१४

सृष्टौ विविधानि कार्याणि परस्परं यज्ञरूपाणि सन्ति। सूर्यः उष्माणम्, ऊर्जाञ्च, सोमः, प्रकाशञ्च निरन्तरं यच्छति। वृक्षादयः परस्परं यज्ञमाचरन्ति। मानव-पशु-पक्षि-कृमि-कीट-पतङ्गादयोऽपि विविधैः कर्मभिः यज्ञं कुर्वन्ति। यथा- कृमयः भूमये उर्वराशक्तिं यच्छन्ति, जलचर जीवाः जलं शोधयन्ति, पक्षिणः जलचरान् दूषितान् जीवान् भुक्त्वा भूमेरुदकं शोधयन्ति, वृश्चिकः-सर्पादयो विषधरजीवाः मशकादीन् रोगकारकान् जीवान् भुक्त्वा वातावरणं शोधयन्ति। इत्थं सर्वे प्राणिनः स्वाभाविकतया यज्ञे सहायतां कुर्वन्ति।

इत्थमुक्तविवेचनेन यागसम्बन्ध एव सृष्टेः कारणम्। अनया सामान्यपरिभाषया अव्यय-अक्षर-आत्मक्षरेषु त्रिष्वेव सृष्टेः सम्बन्धो मन्यते। आनन्दादीनामव्ययस्य पञ्चकलानां विकासो मुमुक्षामूलया अन्तश्चित्या तथा च सिसृक्षामूलया बहिश्चित्या जातः। एता एव पञ्चकलाः चितिसम्बन्धात् (यज्ञसम्बन्धात्) अव्ययसृष्टिः उच्यते। एवमेवामृताः ब्रह्माद्याः पञ्चकलाः अक्षरसृष्टिः मर्त्यब्रह्माद्याश्च पञ्चकलाः आत्मक्षरसृष्टिः कथ्यते। अतो मायापुरे रसबलयोः यच्चयावत् चितिसम्बन्धो भवति तत् सृष्टिनाम्ना व्यवह्रियते। मायापुरे एतादृश्यः अनन्ताः सृष्टयो भवन्ति। चितिसम्बन्धोपलक्षिताः ताः सर्वा अपि सृष्टयः द्वादशसृष्टिष्वन्तर्भाविताः सन्ति।

द्वादशधा विभक्तानां सृष्टीनां प्रथम-मध्यमोत्तराश्चैते त्रयः सामान्यभेदाः सन्ति। प्रथमा सृष्टिः चतुर्षु भागेषु, मध्यमा सृष्टिः पञ्चभागेषु, उत्तरा सृष्टिश्च त्रिषु भागेषु विभक्ताः सन्ति। आहत्य सर्वाः द्वादशसृष्टयो भवन्ति। चतुर्धा विभक्ता प्रथमासृष्टिः "तात्त्विकीसृष्टि"रुच्यते। पञ्चधा विभक्ता मध्यमा सृष्टिराधियाज्ञिकी सृष्टि"रित्युच्यते। त्रिविधा विभक्ता उत्तरासृष्टिश्च "आधिभौतिकी सृष्टिः" कथ्यते।

तत्र प्रथमा सृष्टिः तात्त्विकीसृष्टिः, अस्याः सृष्टेः अवान्तराः- चत्वारो विभागा भवन्ति। तेषु चतुर्षु विभागेषु प्रथमो विभागो मायासृष्टिरस्ति। व्यापके परात्परे मायाबलस्योदयो जातः, परात्परस्य प्रदेशः, सीमितः अभवत्। सीमाभावोऽयं सृष्टेः प्रथमं स्वरूपम्। अस्याः जननी 'माया' अस्ति। अत एव विशुद्धायतनरूपेयं प्रथमा तात्त्विकीसृष्टिः मायासृष्टिः कथ्यते। अग्रे भूयमानानां सर्वासामपि सृष्टीनां मूलभूता सृष्टिः एषैव मायासृष्टिर्विद्यते।

अस्याः सृष्टेः कर्त्ता स एव परात्परोऽस्ति।

द्वितीया तात्त्विकीसृष्टिः "मानसीसृष्टिः" विद्यते। मायावच्छिन्नः परात्परः "श्वोवसीयसमनः" नाम्ना व्यवहृतः। अस्य मनसः कामरूपेण रेतसा अन्तश्चित्या बहिश्चित्या च स एवैककलोऽव्ययमन आनन्दादिभेदैः पञ्चकलो भवति। अस्याः अव्ययकलासृष्टेः अव्यवहितोत्तरकाले हृदयबलावच्छिन्नः पञ्चकल अक्षरः, पञ्चकलः क्षरमूर्तिः, दशकल-प्रकृतिभावस्योदयो भवति। इमाः सर्वाः अव्ययस्य मनोभावेन सम्बन्धिताः सृष्टयः सन्ति। अस्यां सृष्टौ भूतभागस्य सर्वथा अभावो भवति। केवलं भावस्य (ज्ञानस्य) प्रधानता भवति। अत एवाव्ययमनसः सकाशात् भूयमाना सृष्टिः "भावसृष्टिः" इत्युच्यते। पराव्ययसम्बन्धात् "परासृष्टि" रपि कथ्यते। षोडशीपुरुषरूपा आत्मसृष्टिरपि मानसीसृष्टिरेवास्ति।

तृतीया तात्त्विकीसृष्टिः "याज्ञिकीसृष्टिरस्ति। प्राणादि विश्वसृट्-पञ्चजनसृष्टिः याज्ञिकीसृष्टिः कथ्यते। अस्याः सृष्टेः प्रवर्तकः अक्षरतत्त्वमस्ति। अत एवेयं "अक्षरसृष्टिः" कथ्यते। सृष्टिरियं गुणसृष्टिनाम्नापि व्यवह्रियते।

चतुर्थी तात्त्विकीसृष्टिः मैथुनीसृष्टिर्विद्यते। पञ्चीकृता आपः द्विब्रह्मणोः समन्वयेन च मैथुनीसृष्टेः स्वरूपं निष्पादयति। अस्याः सृष्टेरपि प्रवर्त्तकः अक्षर एवास्ति।

एवंविधा माया, मानसी, याज्ञिकी, मैथुनीभेदैः तात्त्विकीसृष्टिः चतुर्धा विभक्ता भवति। तत्र मायासृष्टेरधिष्ठाता परात्परः, भावनाम्ना प्रसिद्धायाः मानसीसृष्टेरधिष्ठाता अव्ययपुरुषः, गुणनाम्ना प्रसिद्धयोः याज्ञिकी-मैथुनी सृष्ट्योरधिष्ठाता अक्षरपुरुषोऽस्ति।

द्वितीयासृष्टिः मध्यमासृष्टिर्विद्यते। इयमेव सृष्टिः आधियाज्ञिकी-सृष्टिरपि कथ्यते। सृष्टिरियं पिण्डात्मिका भूतत्वात् 'मूर्तिसृष्टिः' 'सत्यसृष्टिः' आदिभिः नामभिः प्रसिद्धाऽस्ति। स्वयम्भू-परमेष्ठी-सूर्य-चन्द्रमा-पृथिवी-भेदैरस्याः सृष्टेः अवान्तर पञ्चविभागाः भवन्ति। सृष्टिरियं क्षरमूलासृष्टिरस्ति, अत एव वैकारिकीसृष्टिरूपा मध्यमासृष्टिरेव क्षरसृष्टिरित्यप्युच्यते।

तृतीया सृष्टिः उत्तरासृष्टिः। पूर्वोक्ता मूर्त्तिसृष्टिरेव अस्याः उत्तरासृष्टेः जननी अस्ति। अस्याः सृष्टेरपि त्रयो विभागाः चेतन-अर्द्धचेतन-अचेतन भेदैः सन्ति। इयमेव सृष्टिः आधिभौतिकीसृष्टिनाम्ना प्रसिद्धा "जीवसृष्टिः" विद्यते। यद्यपि "सन्त्ययोनिजाः" इति श्रुतिवचनात् एका अयोनिजा नाम्नी भौतिकीसृष्टिः अन्याऽपि मन्यते, परन्त्वस्याः सृष्टेः चेतनसृष्टावेव अन्तर्भावो भवति। इयमपि सृष्टिः क्षरसृष्टिरित्युच्यते।

**"सृष्टिर्द्वादशधा भाव्या चतुर्धा पञ्चधा त्रिधा।**
**चतुर्धा पञ्चधा त्वेता मध्यमाथोत्तरा त्रिधा॥"**

एवमुक्तप्रकारेण सृष्टिर्द्वादशधा प्रविभक्ता मन्यते। द्वादशाक्षरस्य छन्दसः नाम जगती। जगतीछन्द एवास्य जगतः (सृष्टेः) प्रतिष्ठा। अर्थात् जगतीछन्दस्येव जगत् प्रतिष्ठितमस्ति। उक्तेन सृष्टिविभागनिरूपणेन एतत्सिध्यति यद्भावसृष्टिरव्ययेन सम्बद्धाऽस्ति। अमृतप्रकृतिरूपादक्षराद्गुणसृष्टिर्भवति मर्त्यप्रकृतिरूपादात्मक्षराद्विकारसृष्टिश्च भवति। भावसृष्टिरेव मानसीसृष्टिरित्युच्यते। भावात्मिका ऋषिप्राणसृष्टिः, चतुर्विधमनुसृष्टयश्चास्यामेवाव्ययकृद्भावसृष्टौ अन्तर्भाविताः सन्ति। एतदेव सृष्टिविज्ञानमभिलक्ष्य स्मार्त्त्य उपनिषदोऽप्याहुः-

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा।**
**मद्भावा मानसा जाता एषां लोक इमाः प्रजाः॥** गीता-१०/६
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः॥** गीता-१०/५
**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश्चैते विद्धि प्रकृतिसंभवान्॥** गीता-१३/१९

विकारसृष्टि-गुणसृष्ट्योश्चोभयोः मूलाधारा क्षर-अक्षर-प्रकृतिः। क्षराक्षरौ अव्ययपुरुषस्य स्वभावौ, स्वकीयभावत्वात् पृथङ् न भवितुमर्हति। अत एव परमार्थतः प्रकृत्या क्रियमाणायाः गुण-विकारसृष्ट्योर्मूलाधारः मनःप्राणवाङ्मयः सृष्टिसाक्षी अव्यय एव भवति। अव्ययः सर्वस्यान्तिम-प्रभवप्रतिष्ठापरायणः। सर्वमत एव प्रादुर्भूतम्। रात्र्यागमेऽव्यक्तरूपे परिणतः सन् सर्वमस्यां लीनं भवति। विश्वस्य विकारक्षरे, विकारक्षरस्यात्मक्षरे,

आत्मक्षरस्याव्यये लयो भवति। "सा काष्ठा सा परागतिः"। अव्ययस्यैमां सर्वधर्मोपपन्नतां निरूपयन्ती श्रुतिः-

**"एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।**
**एतदालम्बनं ज्ञात्वा यो यदिच्छति तस्य तत्॥"**[५७]

**गताः कलाः पञ्चदश प्रतिष्ठां देवाश्च सर्वे प्रति देवतासु।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकी भवन्ति॥२॥**

**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय।**
**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्॥३॥**[५८]

"स यथेमाः नद्यः स्पन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति, भिद्येते चासां नामरूपे, समुद्र इत्येवं प्रोच्यते, एवमेवास्य परिद्रष्टुरिमा षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति, भिद्येते तासां नामरूपे, पुरुष इत्येवं प्रोच्यते। स एषोऽकलोऽमृतो भवति।।"४।।[५९]

**"गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।**
**प्रभवः प्रलयस्थानं निधानं बीजमव्ययम्॥५॥"**[६०]

**"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥"६॥**[६१]

पूर्वं यदुक्तं तात्त्विकीसृष्टिरिति तस्याः सृष्टेः विश्वदृष्ट्या रूपान्तरणमिह क्रियते। भौतिकविश्वस्य मौलिकतत्त्वानामन्वेषणेन तात्त्विकीसृष्टिस्त्रिविधा विज्ञायते-

**तत्र प्रथमा- "गुणभूतसृष्टिः"-** रूप-रस-गन्ध-स्पर्श-शब्दरूपा तन्मात्राभिधा सांख्यमतानुसारिणी।

**द्वितीया- "अणुभूतसृष्टिः"-** सजातीयगुणभूतैर्निष्पद्यमाना

५७. कठोपनिदि-१/२/१७
५८. मुण्डकोपनिषदि-३/२/७-८
५९. प्रश्नोपनिषदि-६/५
६०. गीता-९/१८
६१. गीता-७/७

वैशेषिकमतानुसारिणी परमाणुसृष्टिः।

**तृतीया– "रेणुभूतसृष्टिः"–** विजातीयत्रिंशत्परमाणुसंयोगजा न्यायमतानुसारिणी परमाणुसृष्टिः।[६२]

इमाः सृष्टयः अमूर्ता उच्यन्ते। "नासतो विद्यते भावो नाभावो विद्यते सतः" इति गीतोक्तवचनानुसारं अमूर्तसृष्टेः वर्णनेन मूर्तसृष्टेः विद्यमानत्वं स्फुटमेव। अतः मूर्तसृष्टिविषयेऽपि अस्माभिः चिन्तनीयमेव।

**मूर्तसृष्टिदृष्ट्या तात्त्विकीसृष्टिर्द्विविधा दृश्यते–**

**१. भूतसृष्टिः–** पृथिवी-जल-तेज-वायु-आकाशात्मिका पञ्चीकृतरूपा महाभूतसृष्टिः प्रथमा।

**२. भूत-भौतिकीसृष्टिः–** महाभूतेभ्यः सम्पद्यमाना चेतन-अचेतन[६३] अर्धचेतन-अयोनिज-भेदभिन्ना भूतभौतिकीजीवसृष्टिर्द्वितीया।

पञ्चभूतसृष्टिरूपामिमामेव विद्यां प्रशिक्षणाय न्यायदर्शने रेणुरूपो परमाणुर्निरवयवः कथितः। भूतभौतिकसृष्टेरन्तिमावस्था परमाणुरस्ति। परमाणुतत्त्वस्य ग्रन्थिभेदनेन अणुभूतः प्रकटीभवति। अणुभूतस्य च चरमावस्था गुणभूतः, स च वैज्ञानिकपरिभाषायां विश्वसृट्नाम्ना प्रसिद्धः विकारक्षरोऽस्ति। विकारक्षरस्य चरमावस्था आत्मक्षरः, आत्मक्षरस्य अप्ययस्थानम् अक्षरः, अक्षरस्य अप्ययस्थानम् अव्ययः अव्ययस्यान्तिमः परायणः परात्परो विद्यते। इत्थं संचरक्रमानुसारं मायाबलप्रभावेण परात्परः अव्ययो भवति, अव्ययोऽक्षररूपेण परिणतो भवति, अक्षरः क्षररूपेण विकसितो भवति, क्षरविकाररूपः गुणभूतरूपे, गुणभूतः अणुभूतरूपे, अणुभूतः रेणुभूतरूपे, रेणुभूतः पञ्चीकृतभूतरूपे, पञ्चीकृतभूतः पञ्चमहाभूतरूपे, पञ्चमहाभूतश्च भौतिकसृष्टिरूपे परिणताः भवन्ति। तत् एक एव ब्रह्म संचरकाले एकं सन् नानाभावमाप्नोति। अनेनैवाभिप्रायेण **"ब्रह्मैवेदं सर्वम्"** इत्युच्यते। वचनमिदं ब्रह्माणमुद्दिश्य सर्वत्त्वस्य विधानं करोति। प्रतिसंचरकाले सम्पूर्णोऽयं प्रपञ्चः तस्यामेकावस्थायां परिणतो भवति। अस्यैव प्रतिसंचर- पक्षस्य निरूपणं कुर्वती श्रुतिः–

---

६२. ईशोपनिषद् विज्ञानभाष्ये-२९७ तमे पृष्ठे

**"सर्वं खल्विदं ब्रह्म"** अत्रोद्देश्यं 'सर्वम्' अस्ति, विधेयश्च ब्रह्म, सर्वोद्देश्येन ब्रह्मत्वस्य विधानं वर्तते।

मायावच्छिन्नः परात्पर एवास्मिन् विश्वे प्रविश्य विश्वचर उच्यते। प्रविष्टं तत्त्वमिदं भौतिकविश्वस्यात्मा। अस्यैव विश्वात्मनः पूर्वप्रकरणे षोडशीपुरुषत्वेन निरूपणं जातम्। प्रविष्टस्य षोडशीपुरुषस्य क्षरभागात् प्राणादीनां सर्वेषामपि विकाराणां सृष्टिः भवति। तेषां सर्वेषामपि विकाराणां संघातः (समष्टिः) विश्वमुच्यते। यथा परात्परब्रह्मणः रसबलरूपे द्वे कलेऽन्योन्ये अविनाभूते भवतः, एवमेव विश्वात्मनोत्पद्यमानं विश्वं विश्वात्मा च उभे अविनाभूते स्तः। स एकांशेनैव-सृष्टो भूत्वा शेषांशात् स्वकीये सृष्टरूपे प्रविश्य तस्य आत्मानं भूत्वा विश्वात्मा नाम्ना प्रसिद्धो भवति। अमुमेवाविनाभावरहस्यमभिलक्ष्य विश्वमात्मन्वी उक्तः। अयमेव आत्मन्वी ईश्वरः प्रजापतिरस्ति। षोडशीपुरुषोऽपि प्रजापतिर्नास्ति; विश्वमपि ईश्वरो नास्ति अपितु समष्टिः ईश्वरो वर्तते। ईश्वरप्रजापतिमूर्तिरात्मन्वीविश्वमिदं द्वादशधा विभक्तम्। इमाः द्वादश कलाः पृथक्-पृथक् द्वादशब्रह्मणः सन्ति। पूर्वकथनानुसारमिदमेव द्वादशाक्षरा जगती अस्ति। अत एव द्वादशाक्षरात्मकं प्रपञ्चमिदं जगत् नाम्ना प्रसिद्धं भवति।

**द्वादशकल-आत्मन्वीविश्वम्**

| | | |
|---|---|---|
| १. अव्ययः | ५. पञ्चजनः | ९. मनः |
| २. अक्षरः | ६. पुरञ्जनः | १०. भूतम् |
| ३. परिणामी | ७. महत् | ११. जीवः |
| ४. विश्वसृट् | ८. बुद्धिः | १२. शिपिविष्टः |

उपर्युक्तस्यात्मन्वीविश्वस्य द्वादशकलास्वारम्भयोरव्ययाक्षरयोर्द्वयोः कलयोरेकः स्वतन्त्रो विभागः, शेषाणां परिणामी-विश्वसृडादीनां दशकलानामेकः स्वतन्त्रो विभागो वर्तते। एषा दशकलसमष्टिः क्षरविवर्त उच्यते। एषु परिणामी आत्मक्षरः, विश्वसृट् विकारक्षरः, पञ्चजनः यज्ञक्षरः, पुरञ्जनः सत्यक्षरः, महद्ब्रह्म परमेष्ठी, बुद्धिक्षरः सूर्यः, मनः चन्द्रः, भूतः पृथिवी, जीवः सेन्द्रियसत्त्वः, शिविविष्टश्च निरिन्द्रियसत्त्वो विख्यातः। एषां

दशक्षरकलानां समष्टि: विराट्पुरुष इत्युच्यते। विराट्मूर्ति: दशाक्षरकूटे प्रतिष्ठित: "कूटस्थोऽक्षर" उच्यते। भौतिकक्षर: कूटस्थस्याक्षरस्यालम्बनाव्यय:। स चाव्ययप्रभु: कूटस्थस्याक्षरावच्छिन्नस्य क्षरकूटरूपविराट्पुरुषस्य स्वकीयेन मन:-प्राण-वाङ्मयसृष्टिसाक्षी कर्मभागेन सञ्चालनं करोति। अक्षर: क्षरकूटस्य शास्ता, अव्ययश्चानुशास्ता। एवमुक्तप्रकारेण षोडशीपुरुष: अव्यय:- अक्षरावच्छेदेन प्रविष्ट:, आत्मक्षरावच्छेदेनेदं विश्वं वर्तते। आत्मक्षर: परिणामित्वाद्विश्वेऽन्तर्भूतो मन्यते। परिणामिभूत: सन्नपि स्वस्वरूपाद- विकृतोऽयं तिष्ठति। अतोऽयमात्मक्षर आत्मन्यन्तर्भूतो मन्यते। एवंविधोऽयं परिणाम्यात्मक्षर: आत्मन: विश्वस्य चोभयोरनुग्राहको यथा-

तदिदं सर्वम्-

| | | | |
|---|---|---|---|
| १. | अव्यय: ........... आलम्बनम् | षोडशीपुरुष: विश्वात्मा | |
| २. | अक्षर: ........... कूटस्थ: | | |
| ३. | आत्मक्षर: ............ अविकृत: | | |
| | आत्मक्षर:.............परिणामी | | विश्वात्मन: शरीरम् (विराट्) |
| ४. | विश्वसृट् .......... विकारक्षर: | | |
| ५. | पञ्चजन: .......... यज्ञक्षर: | | |
| ६. | पुरञ्जन: ............ सत्यक्षर: स्वयम्भू: | | |
| ७. | महत् ............ महद्ब्रह्म-परमेष्ठी | | |
| ८. | बुद्धि: ........... हिरण्यगर्भ: सूर्य: | | |
| ९. | मन: ............ देवसत्य: चन्द्रमा: | | |
| १०. | भूतम् ........... चित्यग्नि:-पृथिवी - | | |
| ११. | जीव: ........... चेतनसत्त्ववर्ग: | | |
| १२. | शिपिविष्ट:............अचेतनसत्त्ववर्ग: | | |

**"सैषा द्वादशाक्षरा जगती, जगत्यां जगत्।**
**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्।"**

उपर्युक्तेन विवरणेनात्मा-शरीरभेदेन द्वादशकलात्मकः सर्वप्रपञ्चः आत्मा-शरीरयोर्द्वयोः विभागयोर्विभक्तः। तत्रात्मा भोक्ता, दशकलविश्वरूपं शरीरं भोग्यम्। आत्मा अत्ता, विश्वमाद्यञ्च। अनया दृष्ट्या इदं सर्वं द्वयमेव, तृतीयस्य सर्वथा अभावो विद्यते। सर्वप्रपञ्चस्य द्विकलात्मिका आत्मकला दशकलात्मिका च विश्वकला। उभयं कलाभेदमभिलक्ष्य श्रुतिर्यथा–

**"द्वयं वा इदं न तृतीयमस्ति, अत्ता चैवाद्यं च।**
**तद्यदोभयं समागच्छति-अत्तैवाख्यायते, नाद्यम्॥"**[६४]

विश्वमाद्यम्, परममत्ता षोडशीपुरुषेण समन्वितम्। अत एवोक्तेन श्रुतिवचनेन **"पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्"** इत्यादिरूपेण सर्वत्र अत्तारूपो आत्मपुरुष एव व्याप्तः सन् वर्तते।

**"द्वयं वा इदं न तृतीयमस्ति सत्यञ्चैवानृतं च।"**[६५] अनेन श्रुतिसिद्धान्तेनेदं दृश्यं प्रपञ्चं सत्यानृतभेदेन द्विविधं मन्यते। पूर्वप्रतिपादितः षोडशीपुरुषः (प्रविष्ट-ब्रह्म) "सत्यम्" विराड्विश्वञ्च "अनृतम्" वर्तते। यथोक्तम् श्रुतौ– **"सत्यमेव देवा ऽअनृतम्मनुष्याः"**[६६] अनृतेन मिथ्याभावं न कदापि तत्राभिप्रेतम्। अर्थात् नामरूपकर्मात्मकविश्वमनृतम्, मनः प्राण-वाक्-प्रधानः विश्वसाक्षी षोडशी पुरुषः "सत्यम्"। सत्यात्मा अनृतविश्वस्यात्मा भवति। सत्यात्मनः गर्भे प्रतिष्ठितत्वादेवानृतविश्वमपि सत्यस्वरूपं भवति। आत्मसत्येनानुगृहीतं विश्वमपि सत्यमेव। अत एव सत्यानृतयोर्द्वैत-भावमुन्मूल्यात्मविश्वसमष्टिरेव सत्यशब्देनात्र व्यवह्रियते। यथा– **"सत्यं ज्ञानमनन्तं ब्रह्म" "ब्रह्मैवेदं सर्वम्"** इत्यादिभिः श्रौतप्रमाणैः सुस्पष्टमेव। विश्वमिदं ब्रह्मनाम्ना ज्ञायते। यतो हि सत्यकारणात् कार्यरूपं विश्वमवश्यमेव सत्यम्। अत्र प्रश्न उत्पद्यते यत् सत्यं नाम किम्? समाधानं प्रस्तुवन् अत्रेदमुच्यते यत् यथा सवितृमन्त्रे 'वरणीयम्' इत्यस्य शब्दस्योच्चारण-

---

६३. तत्रैव-२९८ तमे पृष्ठे
६४. श.प.ब्रा.-१०/६/३/१
६५. श.प.ब्रा.-१/१/१/५
६६. श.प.ब्रा.-१/१/१/५

सुलभत्वात् 'वरेण्यम्' इति शब्देन प्रदर्शनं कृतम् ऋषिभिः। तद्वदेवात्रापि 'सत्यम्' शब्दोच्चारणे मूलशब्दः "सतियम्" भवेदिति आशङ्क्यते। यद्येवं स्यात्तर्हि 'सत्यम्' शब्दस्य विच्छेदो भवति 'सत्+इ+यम्'। मध्यस्थः इकारः इदं विश्वमिति शब्देन विश्वस्याभिनयं करोति। अर्थात् सत्-यम् उभयोर्मध्ये इदं शब्दवाच्यं अनृतविश्वं प्रतिष्ठितमस्ति, मध्यपतित इकार एतदेव सूचयति। विश्वे बलस्य प्रधानता, नास्ति-अस्ति-नास्ति (अव्यक्तः-व्यक्तः-अव्यक्तः) इति लक्षणानुसारं बलप्रधानविश्वं नास्तिसारं दृश्यते। नास्तिसारस्य क्षणिकबलधारायाः समष्टिः ऋतुरूपं विश्वमेवानृतम्। यथा सत्स्वरूप-सम्पादकः प्राणः "प्राणे प्राणाभावः" इत्यनेन सिद्धान्तानुसारेण "असत्" नाम्ना व्यवहृतो भवति। एवमेव ऋतमूर्तिः विश्वम् "ऋते ऋताभावस्तस्माद् ऋतं विश्वमनृतम्" इत्यनेन निर्वचनेन विश्वमिदमनृतमुच्यते। आत्मा सद्रूप-रसप्रधाना। अत एव "सति (रसे) भवम्" इत्यनया व्युत्पत्या आत्मा सत्यमित्युच्यते। विश्वं स्वयं ऋतरूपं वर्तते। ऋते ऋतं न भवति, तस्मात् ऋतरूपं विश्वमनृतं कथ्यते, अर्थात् नास्तिलक्षणं विद्यते। नायं भावः यद् विश्वं मिथ्या अस्ति। बलस्य स्वरूपमेव नास्तिरूपम् अमृतभावस्येदमेव तात्पर्यम्। इत्थं सत्यम् मध्ये इकारः (विश्वम्) नास्तिरूपेण विद्यते, पुनरपि इकारः श्रूयते अर्थात् आत्मनः मध्यपतितो विश्वरूप इकारो नास्तिसारः सन् अपि आत्मानुग्रहात् सद्वत् प्रतीयते। यथा अन्नं अन्नादगर्भे-प्रतिष्ठितम्भवति तथैवेदमनृतविश्वं सत्यात्मनोऽन्नं भूत्वा तद्गर्भे प्रविशति। यतः विश्वविशिष्टात्मा प्रजापतिरिति कथ्यते। अन्नरूपं विश्वं सत्यमन्नादात्मनि गत्वा स्वीयां स्वतन्त्रसत्तां विहाय सत्यरूपेण परिणतं भवति। तस्मादुक्तं श्रुतिषु- **"सत्यमु वै प्रजापतिः।" "प्रजापतिस्त्वेवेदं सर्वं यदिदं किञ्च" "अर्द्धं ह वै प्रजापतेरात्मनो मर्त्यमासीदर्द्धममृतम्"** इति। 'सत्' शब्दे स्-अ-त् त्रयो विभागाः सन्ति। तेषु सकारः अक्षरस्य वाचकः, अकारोऽव्ययस्य वाचकः, तकारश्चात्मक्षरस्य वाचकः। एते एव सकार- अकार-तकाराः समष्टिरूपेण 'सत्' अमृतात्मा इत्युच्यन्ते। दशकलां निरूपयता उक्तं यत् अव्ययाक्षरयोरेकः स्वतन्त्रो विभागः। विभागोऽयम् आत्मविभाग उच्यते तथा च आत्मक्षरादीनां दशकलानां समष्टिः विश्वम् उच्यते। आत्मक्षरः अविकृतरूपेण आत्मस्वरूपेऽन्तर्भुक्तो भवति। स स्वकीयेन

मर्त्यविकारेण विश्वस्योपादानं भूत्वा विश्वस्मिन्नन्तर्भुक्तो वर्तते। अक्षररूपः सकारः, अव्ययरूपः अकारश्च उभयोः समष्टिः (स्+अ) 'स' इत्यस्ति। मर्त्यरूपः तकारः (त्) स्वतन्त्रः आत्मक्षरः। अविकृतावस्थायां एषः वर्णः अव्ययाक्षररूपेण सकारेण सह युक्तः सन् 'सत्' स्वरूपस्य समर्पकः (षोडशीपुरुषस्य स्वरूपसमर्पकः) भवति। एष एव तकारः (आत्मक्षरः) इकार रूपस्य अनृतविश्वस्य स्वरूपसमर्पकः सन् इकारेण सह युज्यते। एतस्यां स्थितौ आत्मा 'सत्' विश्वं च 'ति' इत्युच्यते। अस्यामृतरूप सत् आत्मनः, मृत्युरूपस्य 'ति' विश्वस्य च परस्परं संबन्धनियामकः सुप्रसिद्धं मायाबलमस्ति। माया मर्यादया (सीमान्तर्गता) एव आत्मनः विश्वस्य च नियन्त्रणं सम्भवति। अस्य नियन्ता तत्त्वस्य वाचकः 'यम्' इति शब्दोऽस्ति। अर्थात् सत्-आत्मा, ति-विश्वम्, यम-नियन्ता, एषां त्रयाणां समष्टिरेव 'सतियम्' वर्तते। मध्यपतित इकारः किंवा तिकारः आत्मनि संश्लिष्टो भूत्वा 'सतियम्' भावं 'सत्यम्' रूपेण परिवर्तयति। अत एव नानारूपात्मकं अनृतविश्वसत्यम्' **'नामरूपे सत्यम्'**[६७] कथ्यते। सत्यतत्त्वस्य अमुमेव वैज्ञानिकं स्वरूपमभिलक्ष्य धर्मशास्त्रेषु स्वापराधं मन्यमानानां जनानां दण्डविधानेषु शिथिलता प्रदर्शिताऽस्ति। यदि कश्चित् अनुचितं कार्यं कृत्वा सत्यं (यथातथ्यम्) स्पष्टयति चेत् तस्यापराधः न्यूनः सिध्यति। अस्य कारणं 'सत्यमहिमा' एवास्ति। तस्यानृतभावः सत्यगर्भे प्रतिष्ठितः सन् तथैव सत्ययुक्तो भवति, यथा सत्यगर्भितमनृतविश्वं सत्यभूतो भवति। आत्मविश्वसमष्टिरूपस्यामृतमृत्युमूर्तिः आत्मन्वीप्रजापतेरिमां सत्यविभूतिं निरूपयती श्रुतिर्वदति–

**"अथ य एष सम्प्रसादोऽस्माच्छरीरारात् समुत्थाय परं ज्योतिरूप- सम्पद्य स्वेन रूपेणाभिनिष्पद्यते-एष आत्मा-इति होवाच। एतदमृतम्, अभयम्, एतद् ब्रह्म। तस्य ह वा एतस्य ब्रह्मणो नाम 'सत्यम्' इति।। तानि ह वा एतानि त्रीण्यक्षराणि सतियमिति (सत्-ति-यम्-इति) तद्यत् तत् 'सत्' तदमृतम्। अथ यत् 'ति'**

---

६७. श.प.ब्रा.-१४/४/४

**तन्मर्त्यम्। अथ यत् 'यम्' तेनोभे (अमृतमर्त्ये) यच्छति, यद्येनेनोभे यच्छति तस्मात् 'यम्'॥"**[६८]

एतदात्मविश्वसृष्टेः सामान्यमितिवृत्तम्। इदानीं सामान्य अनुबन्धश्चिन्त्यन्ते–

## सृष्टेः सामान्या अनुबन्धाः

काम-तप-श्रमाश्च सृष्टेः त्रयः सामान्यानुबन्धाः मन्यन्ते। सृष्टिधारा च भाव-गुण-विकारभेदैस्त्रिविधेत्युक्ता। भावसृष्टेः प्रवर्त्तकः अव्ययपुरुषः, गुणसृष्टेः सञ्चालकः अक्षरपुरुषः, विकारसृष्टेश्चारम्भकर्त्ता आत्मक्षरपुरुषः कथितः। भावसृष्टिः पुरुषसृष्टिः, गुण-विकारसृष्टी च प्रकृतिसृष्टिरित्युच्येते। आसां तिसृणामपि सृष्टीनां काम-तप-श्रमाः त्रयः सामान्याः अनुबन्धाः विद्यन्ते। अर्थात् भाव-गुण-विकाराणां तिसृणामपि सृष्टीनाम्मूलप्रवर्त्तकाः काम-तप-श्रमा एव सन्ति। यतः भावसृष्टेः मूलाधिष्ठाता मन-प्राण-वाङ्मयः सृष्टिसाक्षी अव्ययो गुणसृष्टेः प्रवर्त्तकेऽक्षरे, विकासृष्टेः प्रवर्त्तके क्षरे च समानभावेन व्याप्तोऽस्ति। अव्ययमनसोत्पद्यमाना सिसृक्षा एव कामः, तस्य कामानुबन्धस्योदयः सर्वप्रथमं मनस्येव भवति। अत एवोक्तम् ऋग्वेदे **"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।"**[६९]

अर्थात् प्राणः मनसा सह संलग्नोऽस्ति। मनसः कामानुबन्धेन संलग्नः प्राणः कुर्वद्रूपमाप्नोति। प्राणस्य कुर्वद्रूपता एव तपः नाम्नोऽनुबन्धः। श्रौतप्रक्रियानुसारं कर्म्म-सिध्यर्थं प्राणस्य व्यय एव तपः, किं वा तपश्चर्या उच्यते। यदि कस्यचिद्वस्तुनः स्वात्ममाहात्म्ये प्रतिष्ठापनं क्रियते तर्हि प्रथमं तत्र प्राणबलिदानं परमावश्यकं भवति। यावत् स्थानं रिक्तं न भविष्यति तावत् तस्य प्रतिष्ठा कथं सम्भवति? अर्थात् प्रथमं तत्र प्राणत्यागः आवश्यकः अनन्तरं रिक्ते स्थाने वस्तुनः प्रतिष्ठापनं कर्तुं शक्यते। सम्पत्तिग्रहणात् प्राक् त्यागः अपेक्षितो भवति। आत्मत्याग एव विभूतेरागमनस्य मुख्यो हेतुः। यः त्यागः न कर्तुमर्हति स विश्वविभूतेर्भोक्ता न भवितुमर्हति। प्राणत्यागलक्षणतपश्चर्यां विना घुणाक्षरन्यायेन विभूतेरागमनं यदि भविष्यति

६८. छान्दोग्योपनिषदि-३/८/३/५
६९. ऋग्वेदे-१०/१२९/४

चेत् तथापि तस्य आत्मना सह अन्तर्यामसम्बन्धो भविष्यति। ईदृशो भोगः कदापि आत्मानन्दस्य हेतुर्न भवितुमर्हति। वास्तविक-आनन्दप्राप्तये प्रत्येकदशायां प्राणव्यापाररूपा तपश्चर्या अपेक्षिता भवति। यथा सूर्यबिम्बमध्यात् प्राणरूपाः रश्मयः प्राणदपानत् व्यापारं कुर्वन्त्यः परितो व्याप्ताः भवन्ति, तथैव मनसो बिम्बमध्यात् प्राणतत्त्वं बहिर्निःसृत्य प्राणदपानत् व्यापारेण परितो व्याप्तं भवतीति। प्राणस्य श्रमः परितो व्याप्तः भवति तस्मात् प्राणव्यापाररूपा तपश्चर्येयं 'परिश्रमः' इत्युच्यते। परिश्रमोऽयमुद्योगः (ऊर्ध्वयोगः) अपि कथितः।

अयमेवोद्योगभूतः परिश्रमः पुरुषार्थस्य साधकः। पुरुषार्थरूपेण परिश्रमेण सर्वं साध्यमेव। पुरुषार्थिनां पुरतः विभूतयः करबद्धाः सन्तः तिष्ठन्ति। एषः प्राणव्यापारः आभ्यन्तरव्यापार उक्तः। अस्य व्यापारस्य चर्मचक्षुषा प्रत्यक्षीकरणं न सम्भवति। अत एव यत्नं नाम तपो व्यापारः कथितः। यथा कश्चित् पक्षाघातेन पीडितो जनः शय्यात उत्थातुमभिलष्यति, परं स बहिर्व्यापारासमर्थत्वात् नोत्थातुं शक्नोति। अतोऽत्र आभ्यन्तर-प्राणव्यापारस्तु भवत्येव परं बहिर्व्यापारासंभवात् परितः श्रमो न भवति। अतोऽयं व्यापारः केवलं श्रम इत्युच्यते। अर्थात् आभ्यन्तरव्यवहारः प्राणव्यापारः बहिर्व्यापारश्च वाग्व्यापारः कथ्यते। यथा स्वाध्यायी एकस्मिन् स्थाने उपविशन् आदिवसं स्वाध्यायं करोति, स शरीरात् अधिकं श्रमं न करोति तथापि श्रान्तो भवति। अपरः कश्चित् शरीरेण श्रमं कृत्वा कार्यं सम्पादयति सोऽपि शरीरात् श्रान्तो भवति। श्रान्तता तु उभयत्र, परं स्वाध्यायी 'परिश्रमी' तथा च अपरः 'श्रमजीवी' उच्यते। यतः स्वाध्याये प्राणव्यापाररूपः परिश्रमः शरीरक्रियया च वाग्व्यापाररूपः शरीरव्यापारो भवति। तत्रान्तर्व्यापारः अत्र च बहिर्व्यापारः अयमेव व्यापाररूपः 'श्रमः' तृतीयः सृष्ट्यनुबन्ध इत्युच्यते। मनोमयज्ञानात् कामनायाः उदयः सम्भवति, कामस्य चाव्यवहितोत्तरकाले प्राणक्षोभरूपस्य तपसः समुदयो भवति, तपसश्चाव्यव-हितोत्तरकाले वाक्क्षोभरूपस्य श्रमस्योदयो भवति। अनेनैव काम-तप-श्रमाणां समन्वयेन सृष्टिकार्यं सम्पद्यते। यथा–

**"ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्।
कृतिजन्यं भवेत्कर्म तदेतत् कृतमुच्यते।।"[७०]**

अयं भावः मनुष्येषु विद्यमानकर्मसु काम-तप-श्रमाणां प्रधानता भवति। सजीवेषु एतानि विविधपरिवर्तनानि तु भवन्त्येव निर्जीवेष्वपि परिवर्तनरूपो व्यापारः अवश्यमेवोपलभ्यते। यथा पाषाणः परिवर्तनरूपव्यापारेण कालान्तरे जीर्णः शीर्णश्च भवति। इत्थं जड़चेतनोभयविधपदार्थेषु व्यापारः प्रत्यक्षदृष्ट एव। एषः व्यापारः श्रमः। श्रमश्च तपोव्यापारं विना न भवति। तपोऽपि कामनां विना न सम्भवति। अतोऽयं स्पष्टः यत् अचेतनेष्वपि निश्चितरूपेण ज्ञान-क्रिया-अर्थमूर्तिश्च (चिदात्मा) प्रतिष्ठिताः भवन्त्येव। अस्यैव भौतिकचेतनवादस्य स्पष्टीकरणं भगवता श्रीकृष्णेनेत्थं कृतम्-

**"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति"[७१]**

आत्मनश्चाभावः चेतनाचेतनव्यवहारकारणत्वेन नैव तिष्ठति, अपितु-

**"खादीन्यात्मा मनः कालो दिशश्च द्रव्यसंग्रहः।
सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्।।"[७२]**

अनेनाप्तसिद्धान्तेनेन्द्रियसत्तेन्द्रियाभावश्चैव चेतनाचेतनभेदयोर्व्यवस्थापनं करोतीति विज्ञायते। इन्द्रिये विद्यमानत्वात् हृद्गता चेतना बहिर्निर्गच्छति, स एव भावः चेतनेत्येतेन शब्देन व्यवह्रियते। येषु च पदार्थेषु इन्द्रियद्वाराणि न भवन्ति, तेषां हृद्गताः चेतनाः द्वाराभावत्वाद्बहिर्निर्गमेऽनवसराः भवन्ति, अत एवेते पाषाणादयः अचेतनशब्देन व्यवह्रियन्तेऽस्माभिरिति। आत्मदृष्ट्या तु सर्वे चेतना एव, इन्द्रियदृष्ट्या चेतनाचेतनत्वमिति द्वैधीभावं स्फुटं भवति। अमुमेव सर्वव्यापकात्मचैतन्यवादमाश्रित्य **"ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत्" "इषेत्वोर्जेत्वा वायवस्थ देवो वः सविता" " शृणोतु ग्रावाणः" "ओषधे त्रायस्व" "स्वधिते मैनं हिंसीः" "आपोहिष्ठा मयोभुवः"** इत्यादयो श्रौतव्यवहाराः समन्विताः भवन्ति।

---

७०. ईशोपनिषद् विज्ञानभाष्ये उल्लेखः - १५२ तमे पृष्ठे

७१. गीता-१८/६१

७२. चरक सं.-सूत्र.दी.अ. ४८ श्लोक।

एवमुक्तप्रकारेण प्रकृतानुबंधनिरूपणेन सम्यक्तयैतत् सिध्यति यत्सर्वव्यापकः मनः प्राण-वाङ्मयः सृष्टिसाक्षी कर्माध्यक्षः अव्ययात्मनः व्यापाररूपायाः कामतपश्रमसृष्टेः प्रथमः साधारणश्चानुबन्धोस्ति। क्षराक्षरविकारैः कैश्चिदपि काचिदपि सृष्टिर्भवेत्, तेषु सर्वेषु कामतप-श्रमाणां त्रयाणामप्यनुबन्धानां भावित्वम्परमावश्यकम्। स्वकीयेनानन्द-विज्ञान-मनोमय मुक्तिसाक्षी विद्याभागेन विश्वस्यालम्बनमुत विश्वातीतरूपेण तिष्ठन् स एव अव्ययात्मा (कर्माध्यक्षः) मन-प्राण-वाङ्मयेन सृष्टिसाक्षी कर्मभागेन काम-तप-श्रमस्वरूपे परिणतः सन् विश्वस्मिन् व्याप्य विश्वमूर्तिर्भवति। स च विश्वमूर्तिः विश्वस्यान्तर्बाह्यभागयोर्विराजते। सः कीदृशः? एतदभिप्रायेणैव अव्ययात्मनः विश्वव्यापकस्वरूपमभिलक्ष्य स्मृतिः-

**"मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय।**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव॥"**[७३]

**"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते।**
**इति मत्त्वा भजन्ते मां बुधा भावसमन्विताः॥"**[७४]

उक्तेषु काम-तप-श्रममयेषु त्रिष्वप्यनुबन्धेषु **"कामस्तदग्रे समवर्त्तताधि मनसो रेतः प्रथमं यदासीत्"** इत्यनेन वचनानुसारेण 'काम' नामकः यत्खलु मनसो रेतोरूपः प्रथमानुबन्धस्तस्य 'उक्थ-अर्क-अशिति' एतास्त्रिस्रो भक्तयो विद्यन्ते। यथा सूर्यः द्युलोके (खगोलस्थैकविंशे स्थाने) बृहतीच्छन्दसो मध्ये स्थिररूपेण प्रतिष्ठितः स्वकीयान् रश्मीन् अशिति (अन्नम्) ग्रहणाय बहुदूरपर्यन्तं (लोकालोक-स्थानपर्यन्तं) प्रसारयति। रश्मिभिश्च तत्तत् पदार्थानां तत्तदंशानामादानं कृत्वा तान् स्वात्मनि प्रतिष्ठाप्य स "आदित्य" नाम्ना प्रसिद्धो भवति। सूर्यबिम्बः 'उक्थः' रश्मयः 'अर्चश्चरति' इत्यनया व्युत्पत्या 'अर्काः', रश्मिप्रतिष्ठितश्च रसः 'अशितिः' कथ्यते। एषामशिति- युक्तरश्मीनाम् अश्वमूर्तिना सूर्येण सह यया प्रक्रियया संगमो भवति, सा एव मौलिकयज्ञप्रक्रिया "अर्काश्वमेधः" इत्यनेन नाम्ना प्रसिद्धो भवति। उक्थार्काशित्येतेषां त्रयाणां मूलप्रतिष्ठा

---

७३. श्रीमदभगवद्गीतायाम्-७/७
७४. गीता-१०/८

सूर्यकेन्द्रस्थित: काम: किंवा कामना एवास्ति। एवमेवात्मा दहराकाशस्थ-हृदयाकाशरूपे खगोलस्थमेरुदण्डरूपे बृहतीछन्दसो मध्ये अविचालीत्येतेन भावेन प्रतिष्ठित: सन् प्राणात्मकान् रश्मीन्नन्नादिभोगग्रहणार्थं बहि: प्रक्षिपति। रश्मिभिरशितिमादाय स्वात्मनि प्रतिष्ठापयति। एषु अविचालीति स्वस्थाने प्रतिष्ठित: आत्मा "उक्थ:", रश्मय: "अर्का:" सन्ति, अयमर्क: अशितिं विना कदापि प्रतिष्ठितो न भवति। अर्के प्रतिष्ठितस्य अर्कप्रतिष्ठारूपस्या-स्याशिति इत्यस्याध्यात्मगता: देव-पितर-इन्द्र-पशुप्राणादिभेदै: स्वाहा-स्वधा-बौषट्-नम:-प्रयति: इत्यादयोऽनेके अवान्तरभेदा: भवन्ति। एते सर्वे तस्मिन्नेवाऽर्केऽन्तर्भूता: सन्ति। एभिरशितिभिरर्का: व्याप्ता: भवन्ति, अर्कैश्चैतान्यशितिरूपाण्यन्नानि खाद्यन्ते, व्याप्यन्ते– अतएव एतानि अन्नानि "अश्नोति यदन्नं तत्" इत्यनेन निर्वचनेन "अशिति:" इत्युच्यन्ते। प्राण:– 'यदश्नोति' एव परोक्षभाषायां अशितिरिति। एभिर्नानाशितिभिरर्कद्वारा उक्थात्मा कालान्तरे पुष्ट: सन् 'महदुक्थ:' भवति। नाना अन्नरूपैरशितिभिरेव महदुक्थ: सन् आत्मनि नानाविधानां कामनानां समुदयो भवति; कामेन तप:, तपसा श्रमश्च भवति। त्रयाणामप्येषां समन्वयेन नव-नवा: सृष्टय: सम्पद्यन्ते। एभि: भक्तिभिरत्र उक्थ-अर्क-अशितिरूपै: काम-तप-श्रमै: मन-प्राण- वाङ्मूर्तिरव्यय एव सृष्टे: मूलप्रवर्तक: (मूलकारणम्) इति यथामति सम्पादितम्मया, इदानीं सृष्ट्युत्पत्तिविषयेऽपि किञ्चिद्विचार्यते–

## सृष्ट्युत्पत्ति:

अक्षरात्मक्षरश्च प्रकृति:, ब्रह्मारूपा प्रकृति: प्रकृतिविकृति: च उच्यते। तत्रात्मक्षर: व्यक्तप्रकृति:, अक्षरश्चाव्यक्तप्रकृति:। एतस्मात् व्यक्ताव्यक्त- भावात्पर: सनातन: अव्यय:। आभ्यामेव प्रकृतियुगलाभ्यां पुरुषस्वरूपं निष्पद्यते। अत एवास्या: प्रकृतियुगलाया: पुरुषे एवान्तर्भावो मन्यते, यथोक्तं गीतायाम्–

**"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च।"**

कारणविकाररूपशुक्रापेक्षया ब्रह्मप्रकृति:, अक्षरात्मक्षरप्रकृतिरपेक्षया ब्रह्मभावविकृति:। शुक्रावच्छिन्नं विश्वं विकृतिसंघ:, ब्रह्म प्रकृति-विकृति:,

क्षराक्षर: प्रकृति:, प्रकृतिविकृतिरहित: अव्ययतत्त्वं पुरुष: उक्त:। सांख्य-शास्त्रमपि एतदेव क्रममनुमन्यते यथा–

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।**
**षोडशकस्तु विकारो न प्रकृतिर्नविकृतिः पुरुषः॥**[७५]

१. मूलप्रकृतिरविकृति:............अक्षरात्मक्षरौ (अमृतम्) – प्रकृति:

२. प्रकृतिरविकृतय: सप्त.........ब्रह्म...........प्रकृतिविकृति:

३. षोडशकस्तु विकार:...........शुक्रम्...........विकृति:

४. न प्रकृतिर्न विकृति: पुरुष:.......अव्यय: (अमृतम्)......पुरुष:

अत्राक्षरात्मक्षरयो: समष्टिर्मूलप्रकृतिर्मन्यते। वस्तुत: मूलप्रकृतिस्तु अक्षर एव। आत्मक्षर: परिणामी, विकाराणां उपादानम्, अत एवामुमविकृति-लक्षणाऽक्षरप्रकृतौ अन्तर्भूतं नैव शक्यते मन्तुम्। अनेनाभिलक्ष्येन पूर्वं द्वादशकलानां विभागं कुर्वन् अव्ययाक्षरस्यैक: स्वतन्त्रो विभाग: स्वीकृत: मया तथा चात्मक्षरादिशिपिविष्टान्तानां दशकलानामेक: स्वतन्त्रो विश्वविभाग: स्वीकृत:। स्वकीयेन विपरिणामिधर्मेण अपराप्रकृतिर्नाम्ना प्रसिद्धोऽयमात्मक्षर एवाग्रे भूमिरापोऽनलो वायुराकाशमनोबुद्धिषु सप्ततत्त्वेषु परिणतो भवति। एते एव महदादय: सप्तावयवा:। अव्यक्त: महच्चोभौ महदित्युच्यते। आत्मक्षर: अव्यक्त: प्राणरूपेण परिणतो भवति, प्राणश्च महद् रूपेण। एवमेवात्मक्षर- अव्यक्त-महत् त्रयाणां समन्वितं एकं रूपं भवति। अपरेण शब्देन "अपराप्रकृति:" अस्या: व्याप्ति: 'आत्मक्षर- अव्यक्त-महत्' एषु त्रिष्वपि विद्यते। अनेन सप्ततत्त्वसृष्टिप्रवर्तकात्मक्षरेण पर: तदेव पराप्रकृतिरूप: कूटस्थ: अक्षर:। विषयेऽस्मिन् प्रोक्तञ्च भगवता श्रीकृष्णेन–

**"भूमिरापोऽनलोवायुः खं मनोबुद्धिरेव च।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा॥**
**अपेरयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत्॥"**[७६]

---

७५. सांख्यकारिका-३

७६. गीता-७/४-५

अर्थादनन्तविकारानुत्पादयन्नप्यात्मक्षरः अविकृतरूपेण तिष्ठति, अत एवायं मूलप्रकृतावन्तर्भूतो मन्यते। यद्येवं न स्यात् तर्हि अमृतात्मा षोडशी न भवितुमर्हति। आत्मक्षरकलानां विना षोडशकलाः न भवितुमर्हन्ति। सहैव च स एवात्मक्षरः परिणामी भूत्वा वैकारिकविश्वस्य उपादानं भवति, अत एवामुं मूलप्रकृत्या (अक्षरेण) पृथक्कृत्य प्रकृतिविकृतिर्मन्यते। अयमेव ब्रह्मास्माकं विश्वप्रभवः। क्षर एव विकाराणां प्रवर्त्तको भूत्वा भौतिकविश्वरूपेण परिणतो भवति, अत एव त्रिपुरुषकलाभूतायास्मै क्षरपुरुषाय उक्तम्–

"क्षरः सर्वाणि भूतानि" इति। इयमेव ब्रह्ममूर्तिः क्षरः अस्माकं "प्राकृतात्माधिकणस्य" मूलप्रतिष्ठा। यद्यपि पुरुषापेक्षा ब्रह्म विकृतिरूपो भवेत्, अव्यक्ताक्षरश्च प्रकृतिरपेक्षया आत्मक्षरेण व्यक्तो भवेत्, किन्तु भूतज्योतिर्मयव्यक्तवैकारिकविश्वापेक्षया व्यक्तात्मक्षररूपप्रकृतिविकृतिरूपं ब्रह्म 'प्रकृति' रित्युच्यते। कदाचिदक्षरः प्रकृतिः कदाचिच्च पुरुषः, कदाचिदात्मक्षरः प्रकृतिः कदाचिच्च पुरुषः उच्यते। कदाचिदात्मक्षरं मूलप्रकृतिर्मन्यते कदाचिदरक्षमेव, आत्मक्षरः प्रकृतिविकृतिर्मन्यते। अनेन व्यवहारेण प्रकृति-विकृति-पुरुषव्यवस्थायां संदेहो उत्पद्यते। अस्याः शंकायाः समाधानायैव पुरुष-प्रकृतेश्च निर्णयः आवश्यको भवति। विश्वरचनाक्रमे परिणामी आत्मक्षर एव प्रकृतिः, अविकृतः आत्मक्षरयुक्तः षोडशीपुरुषः पुरुषः इति निर्णीतः। प्रकृतिः ब्रह्म च विश्वस्योपादानकारणमिति सुसिद्धमेव।

यद्यप्यधुना विश्वमनुत्पन्नम्, किन्तु विश्वोत्पादिकाः सर्वाः सामग्र्यः सन्त्युपस्थिताः। आनन्द-विज्ञान-मनोमूर्तिः अव्ययालम्बनोपरि प्रतिष्ठितस्याव्ययस्य मनः प्राण-वाग्रूपेण सृष्टिसाक्षिभागेनानुगृहीतः। अत एव सर्वज्ञः-सर्वशक्तिः-सर्ववित् भूत्वा अक्षरः काम-तप-श्रमलक्षणः सृष्टेः साधारणानुबन्धैः युक्तो भूत्वा आरम्भकेनात्मक्षरेण विकारोत्पन्नेच्छां प्रकटयति। तत्र सामग्र्यः क्षरः, निर्माता अक्षरः, आलम्बनमव्ययः, प्राणव्यापारः चेष्टा, मनोव्यापारः कामना, सर्गव्यापारः श्रमश्चास्ति। सृष्टिसाक्षी अव्ययमनसः सकाशात् "एकोऽहं बहुस्याम्" इत्यनया कामनया अक्षरेणात्मक्षरस्य ब्रह्मा- विष्णु-इन्द्र-अग्नि-सोमैः पञ्चमर्त्यकलाभिः क्रमशः प्राणः-आप्-वाक्- अन्नम्-अन्नादः

एते पञ्चविकाराः समुत्पद्यन्ते। वैकारिकविश्वस्य मूलभूता इमे एव पञ्चविकारक्षराः सन्ति; अत एवेषां पञ्चानां समष्टिः 'विश्वसृट्' इति उच्यते। अयमेव 'विश्वसृट्' तत्त्वपुराणे 'ब्रह्मा' इति नाम्ना प्रसिद्धो भवति। अयमेव ब्रह्मा सृष्ट्यारम्भे उत्पन्नत्वात् 'प्रथमजब्रह्म' इत्युच्यते, यथा- "ब्रह्मास्य सर्वस्य (प्रतिष्ठा) प्रथमजम्"[७७] इत्यादिभिः श्रुतिवचनैः सुस्पष्टम्। प्रथमजब्रह्मणः पञ्चकलानां चतुर्षु कलास्वन्तर्भावः। अयमेव चर्तुमुखो 'ब्रह्मा' इति पूर्वमेवोक्तम्। इमे पञ्चकलाः आत्मक्षरस्य विकाराः सन्ति, अत एवैते विकारक्षरा अपि कथ्यन्ते। अनेन क्रमेण पञ्चविकारक्षराः समुत्पन्ना अभवन्। उत्पद्यमानेऽव्यवहितोत्तरकाले पञ्चकलाः पञ्चसु प्रविष्टा अभवन्। प्राणमाधारीकृत्य आपः वाक्-अन्नम्-अन्नादश्च इमाः चतस्त्रः कलाः प्राणे प्रविष्टाः, तथैव आपः-वाक्-अन्नम्-अन्नादानां चतसृणां कलानां समन्वयः समभवत्। अनया पञ्चीकरणप्रक्रियया प्राणाबादिषु पञ्चस्वेकैका कला मुख्या अभवत्, शेषाः गौणाश्चाभवन्। अर्थात् पञ्चीकृतप्राणे अर्धभागे प्राणः, अर्धे च पुनः शेषाः अबादयः चतस्त्रः कलाः अवशिष्टाः। अयमेव क्रमः आप्- वागादिषु शिष्टासु चतसृषु पञ्चीकृत-कलासु अपि। एवं खलु सर्वाः कलाः सर्वकलास्वाहुता अभवन्; अत एव इयं सर्वाहुतिरूपा पञ्चीकरणप्रक्रिया अनन्तरे काले 'सर्वहुत्' यज्ञ-नाम्ना प्रसिद्धिं गता। यश्च सर्वहुतयज्ञः वेदादीनां सृष्टेः प्रवर्त्तको भवति। एष्वेव पञ्चीकृतप्राणादिषु यद्यपि प्रत्येककलायां प्राणः-आप्-वागादीनां पञ्चकलानां सन्निवेशः, तथाप्येकैकस्याः कलायाः व्याप्तिरर्द्धार्द्धभागे विराजते, शेषार्धभागे शेषाः चतस्त्रः कलाः प्रतिष्ठिताः सन्ति।

'जनत्' शब्दस्य सम्बन्धः उत्पत्तिभावेन विद्यते। संसृष्टलक्षणं सृष्टरूपमेव 'जनत्' इत्युच्यते। अनेनैव जनत् (उत्पत्ति) भावेन प्रजा जनः' इत्यनेन शब्देन व्यवह्रियते लोके। यथा अमरकोषे-

**"प्रजा स्यात् संततौ जने"**[७८] इत्यादिना स्पष्टः। **"प्रजा वै जनकल्पाः"**[७९] इत्यैतरेयश्रुत्यापि भावोऽयं समर्थितः। अर्थात् जनत् एव

७७. श.प.ब्रा.-६/१/१/१०

७८. अमरकोशे ३/३/३२

'जनः', आत्मक्षरादुत्पन्नाः प्राणादयो विकारक्षराः जनत् भावेन युक्ताः सन्तः ईशप्रजापतेः प्रजाकोट्यां निविष्टाः सन्तः अवश्यमेव 'जनः' इत्यनेन नाम्ना व्यहर्तुं शक्यन्ते। प्राणादयः पञ्चजनाः (पञ्चविकारक्षराः) उक्तेन सर्वहुद्यज्ञेन परस्परं सम्मिलिताः भवन्ति। अनया समष्ट्या प्राणादयो जनाः पञ्च-पञ्चभिर्युक्ताः भवन्ति। अत एवैते पञ्चीकृत-पञ्चजनमूर्तिक्षराः 'पञ्चजन' नाम्ना व्यवह्रियन्ते। जनरूपस्य विकारक्षरस्य इयमेव द्वितीया अवस्था। तत्र प्रथमः प्राणः, द्वितीयः आपः, तृतीयः वाक्, चतुर्थः अन्नम्, पञ्चमः अन्नादः प्राण-आप्-वाक्-अन्नम्-अन्नादादीनां पञ्चजनानां समष्टित्वात् पञ्चजनाः सन्ति। तथोक्तं श्रुतौ-

**"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।**
**तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्॥"**[८०]

इमे एव पञ्च पञ्चजनाः मिलित्वा सृष्टिं कुर्वन्ति। एते एव विश्वन्यायालस्य प्रधाननिर्णायकाः। भारतवर्षस्य पञ्चायती व्यवस्थायाः मूलाधारः। अद्यापि लोके 'पञ्च परमेश्वरो भवति' इति सुप्रसिद्धम्। विकारक्षराणां 'निष्कैवल्यम्', 'मिश्र' भेदेन च द्विविधं स्वरूपम्। तत्र निष्कैवल्यावस्था मौलिकी, मिश्रावस्था च यौगिकी। इमे एव पञ्चजनाः सृष्टेः मूलम्।

यथा प्राणादिभिर्मौलिकविकारक्षरपञ्चीकरणैः पञ्चजनानां स्वरूपं निष्पद्यते, एवमेवैतेषां, पञ्चीकृत प्राणादिपञ्चजनानां अनियमितमिश्र-भावात्मकपञ्चीकरणैः पञ्चीकृतपञ्चजनानां स्वरूपनिर्माणं भवति। एवमुक्तप्रकारेण पञ्चजना एव नियमितानियमितमिश्रभावभेदात् पञ्चजन-पञ्चीकृतपञ्चजनभेदेन च द्विविधा विभक्ताः भवन्ति। व्यवहारसांकर्य-दूरीकरणाय ऋषयः प्रथमं पञ्चजनं 'पञ्चजन' नाम्ना व्यवहृतवन्तः, अनियमितमिश्र-भावापन्नं द्वितीयं पञ्चीकृतपञ्चजनं 'पुरञ्जन' नाम्ना (पुराणां समुत्पादकाः) व्यवहृतं कृतवन्तः। यथा पूर्वं पञ्चजनाः निर्मिताः तथैव पुरञ्जनाश्चापि निर्मीयन्ते।

---

७९. ऐ. ब्रा.-६/३२

८०. बृहदा.उप.-४/४/१७

वेदादीनां सृष्टौ पञ्चजनैः सम्पद्यमानः सर्वहुतः न, अपितु पुरञ्जनैः क्रियमाणः सर्वहुतः सम्बद्धोऽस्ति। यथा श्रुतौ–

**"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥"[८१]**

अनेन श्रुति प्रमाणेन वेदादीनां सम्बन्धः सर्वहुत्यज्ञेनोक्तः। अत एव पुरञ्जनोत्पादकोऽयं सर्वहुत्यज्ञः एतदेव कथनं युक्तियुक्तमिति।

यतो हि पञ्चपञ्चजनः स्वतन्त्ररूपेण सृष्टिसर्जने न समर्थः अपितु पञ्चपञ्चजनः मिश्रभावमवाप्य पुरञ्जनरूपेण परिणतो भूत्वा सृष्टिकर्मणि समर्थो भवति। अत एव छन्दः पुरुषविज्ञानानुसारं[८२] पञ्चजनाः यदि एककार्यसम्पादनाय परस्परं मिश्रिताः भवन्ति चेत् तदा सर्वहुतयज्ञः निष्पन्नो भवति। अत्र प्रत्येकं जीवः (मानवः) प्राणादीनां स्थूलावस्थारूपं पञ्चभूतमयत्वात् पञ्चजनो भवति। अर्थात् एकैको मनुष्यः पञ्चभूतस्य समष्टिरूपः सन् एकैकः पञ्चजनः। कस्यचिदपि कार्यस्य पूर्णतायै प्रकृतिवत् न्यूनातिन्यूनं पञ्चमनुष्याणां ऐकमत्यं परमावश्यकं भवति।

एवमुक्तप्रकारेण पञ्चजनानां पञ्चीकरणेन पञ्चविंशतिकलाः पञ्च पुरञ्जनाः समुत्पन्ना अभवन्। एषामुत्पत्तिः अनियमितमिश्रभावेनाभवत्, अत एवैषां स्वरूपेऽपि सामान्यतया भेदः समभवत्। इमे एव पञ्चपुरञ्जनाः विज्ञानशास्त्रे क्रमशः वेद–लोक–प्रजा–वीर्य–पशु–नामभिः प्रसिद्धाः। सर्वप्राणे सर्ववागादीनां चतुर्ण्णां आहुतित्वात् 'वेद' नामकः पुरञ्जनः, सर्वाप्सु सर्वप्राणादीनां आहुतित्वात् 'लोकः', सर्ववाक् इत्यस्मिन् शेषाणामाहुतित्वात् 'प्रजा', सर्वान्नादौ शेषाणां आहुतित्वात् 'वीर्य्यः', सर्वान्ने च शेषाणां आहुतित्वात् 'पशुः' पञ्चपुरञ्जनाः समुत्पन्ना अभवन्।

पूर्वकथनानुसारं एषां पञ्चविंशतिकलानां मिश्रणं सर्वथा अनियतं, विभिन्नधर्मा चास्ति। वेदपुरञ्जनः लोकपुरञ्जनेन, लोकः प्रजया, प्रजा वीर्येण, वीर्यः पशुना भिन्नो वर्तते। एतस्मादेव भेदकारणात् भेदावच्छिन्नः, अपरस्मिन् शब्दे अनियमितमिश्रावच्छिन्नः। एभिर्वेदलोकादिपुरञ्जनैः

---
८१. यजुर्वेदे–३१/७
८२. ऐ. आ. ३/२/३

स्वयम्भ्वादीनां पुराणां जननं भवति। तत्र वेदपुरञ्जनेन 'स्वयम्भूपुरम्', लोकपुरञ्जनेन 'परमेष्ठीपुरम्', प्रजापुरञ्जनेन 'सूर्यपुरम्', वीर्यपुरञ्जनेन 'पृथ्वीपुरम्', पशु-पुरञ्जनेन च 'चन्द्रपुरम्' निर्मीयते। एषां पञ्चपुराणां समष्टिरेव विश्वमित्युच्यते।

सामान्यतया विश्वस्य यः स्वामी स परमात्मा, भूतभावनः, भगवान् इत्यादिभिः शब्दैः व्यवह्रियते। भगवान् इत्येषः शब्दस्त्वतीव प्रचलितः। अस्य भगवान्शब्दस्य सूक्ष्मदृष्ट्या यदाऽवलोकनं क्रियते तदाऽस्मिन् शब्दे 'भ-ग-व-अ-न्' इति पञ्चाक्षरस्य बोधो भवति। पृथक् पृथक् अर्थावलोकनेन भ=भूमिः, ग=गगनम्, व=वायुः, अ=अग्निः, न=नीरम्। अर्थात् भूम्याकाशः वायुरग्निनीरानां समष्टिः भगवान् इत्युच्यते। एतानि पञ्चतत्त्वानि भौतिकानि तस्मादेते भूतसम्बद्धाः सूक्ष्मत्वान्महाभूतत्वेनाख्यायन्ते जनैः। तैश्च पञ्च-महाभूतैस्सर्वजन्तूनामत्रोत्पत्तिर्व्याख्याता। ईदृक् सूक्ष्मविवेचनैः विविधतर्क-पुरश्चरणैः, अनन्तशास्त्रेषु प्रवचनमाध्यमेनास्माकं पूर्वजाः वैदिककवयः मादृशानां अत्यल्पबुद्धियुक्तानां साधारणजनानां समुद्धाराय जगतो मूलकारण-स्यान्वेषणं वेद-ब्राह्मणारण्यकोपनिषन्नीतिपुराणैतिहासिकधर्मदर्शनशास्त्रेषु अनन्ततर्काभ्यासयोगेन महच्चिन्तनरूपं ज्ञान-विज्ञानवैभवमिदं प्रकाशितवन्तः। तत्तत्स्थानेभ्यः सामग्रीमुपगृह्य यथामति मयाऽत्रोद्धृता।

षष्ठोऽध्यायः

# वैदिकऋषीणां सांस्कृतिकं प्राकृतिकं दार्शनिकञ्च जीवनम्

## १. वैदिकऋषीणां सांस्कृतिकं जीवनम्

प्रकृतेऽध्याये त्रयाणां विषयाणां प्रतिपादनं करणीयमस्ति। समेकित-रूपेणात्र नैव चिन्तयितुं शक्यते विषयवैविध्यत्वात्। अतोऽत्र प्रथमं **वैदिक कवीनां सांस्कृतिकं जीवनम्'** इतिविषयमभिलक्ष्य तावत्किञ्चिद्विचार्यते।

तत्र सर्वप्रथममस्माकं पुरतः प्रश्नोऽयं समुदेति यत् का नाम संस्कृतिः? यद्यपि विषयोऽयमतिगम्भीरत्वान्नैकेन पदेन वाक्येन वा प्रतिपादयितुं शक्यः। यतो हि संस्कृतिर्नाम न कश्चिद् वस्तुविशेषः देश-स्थान-गोत्र-व्यक्तिविशेषो वा, यस्य साक्षादुत्तरं सम्भवेत्। यथा कश्चिद्रामनामकः व्यक्तिः मार्गे गच्छति। केनापि प्रश्नः क्रियते यत्-कोऽयं पान्थः? झटिति उत्तरयितुं शक्यते तत्रायं रामः गच्छतीति। पात्रे पुष्पमवलोक्य यदि कश्चिदेवं पृच्छेत्-किमिदमिति सहसैवोत्तरयितुं शक्यते-पुष्पमेतदिति। परं चिन्त्यताम्- संस्कृतिः न कश्चिद् वस्तु-व्यक्ति-विशेषा। अतो मैवमुत्तरयितुं शक्यते तथा। तर्हि कथमेतस्याः संस्कृतेः परिचयः प्रस्तोतव्यः?

विषयेऽस्मिन् मनीषिणां संस्कृतिशब्दार्थविषयिणी परिभाषा तावत्प्रस्तूयते-हिन्दीसाहित्यजगति प्रसिद्धैतिहासिककविः, विश्वविख्यातश्च लेखकः 'रामधारी सिंह दिनकर' महोदयः कठिनपरिश्रमेण 'संस्कृति के चार अध्याय' नामकस्य ग्रन्थस्य प्रणयनं कृतवान्। प्रस्तुतेऽस्मिन् ग्रन्थे भारतवर्षस्य प्रथमप्रधानमन्त्रिणा 'जवाहरलालनेहरू' महोदयेन ३० सितम्बर १९५५ ईस्वीये प्राक्कथनं लिखितम्। प्राक्कथने एव तेन संस्कृतिविषये उक्तं यत्- "यद्यपि शब्दकोशानुसारमस्या अनेकविधाः परिभाषाः

समुपलभ्यन्ते। यथा एकेन विदुषा प्रोक्तम्– "संसारे याः काश्चिदपि सर्वोत्तमाः वार्ताः ज्ञायन्ते कथ्यन्ते वा ताभिर्वार्ताभिः स्वमात्मानं परिचितिरेव संस्कृतिरिति।" अन्यस्यां परिभाषायाम्–"संस्कृतिः शारीरिक उत वा मानसिकशक्तीनां प्रशिक्षणम्, दृढीकरणं विकास उत तैरुत्पन्नाऽवस्थेति।" एषा– "मनसः, आचाराणाम्, रुचीनाम्वा परिष्कृतिः शुद्धिर्वा" अस्ति। एषा– "सभ्यतायाः अन्तः स्थात् प्रकाशनम्" इत्यस्ति। एष्वर्थेषु संस्कृतिर्नाम काचित् तादृशी व्यवस्था या खलु मूला-अन्तर्राष्ट्रीया वा भवति।

अस्माकं पाणिनीयव्याकरणानुसारं 'सम्' उपसर्गपूर्वकं 'कृ' धातोः 'क्तिन्' प्रत्यये कृते सति संस्कृतिः शब्दो निष्पद्यते। यस्यार्थो भवति– परिष्कारः, सज्जा, पूर्णता, मनोविकासश्च। 'सम्' उपसर्गस्यार्थो भवति सम्यक्तया 'डु कृञ् करणे' धातोः 'कृ' इति करणार्थे प्रयुक्तः। तस्मात् सम्यक्तया कृतः=संस्कृतः। सा एषा क्रिया व्यवस्था वा या खलु संस्कारयुता-संस्कृता, परिष्कृता, सुसज्जिता, सुपरिपूर्णा, मनोविकासशीला वा भवति 'संस्कृति'रित्युच्यते।

तत्र ऋग्वैदिककवीनां जीवने या संस्कृतिः प्रसृताऽऽसीत् सा खल्विदानीं 'वैदिकी संस्कृति' रित्युच्यते। वैदिकी-संस्कृतिरियं यज्ञमूला-ऽऽसीत्। अर्थात् तदानीन्तनानां ऋषि-महर्ष्यादीनां जीवनं यज्ञमयमासीत्। उक्तं हि यथा वेदाङ्गज्योतिषे लगधमुनिना–

**"वेदा हि यज्ञार्थमभिप्रवृत्ताः"**[१] अर्थात् यज्ञार्थमेव वेदानां प्रवृत्तिरुक्ता। कथनस्यास्य पुष्टिः भगवता मनुनापि कृता–

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्।।"**[२]

यज्ञसिद्ध्यर्थमेव ऋग्यजुस्साम्नां दोहनमभूदिति। ऋग्वेदस्यारम्भिके मन्त्रेऽपि अग्नेः पञ्चविशेषानि यज्ञसम्बद्धान्येवोपलभ्यन्ते। तानि यथा–

---

१. आर्चज्यौतिषम्–३६
२. मनुस्मृतौ–१/१३

**"अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।**
**होतारं रत्नधातमम्।"**[३]

अत्र 'पुरोहितम्' इत्यनेन विशेषणेनाग्निः अभीष्टस्य परिष्कार-सज्जा-पूर्णता-मनोविकासस्य च सम्पादकः कथितः। 'यज्ञस्य देवम्' इत्यनेन विशेषणेन यत्क्रियमाणं कर्म तस्य कर्मणः देवोऽयमग्निरत्र प्रार्थितः। 'ऋत्विजम्' एतस्मिन् अनुष्ठीयमाने कर्मणि सर्वविधकामानां वर्षितुर्देवस्याराधनायार्त्वि-ज्यकर्मसम्पादकत्वेन नियुक्तः। 'होतारम्' विविधाभिराकाङ्क्षाभिरीडयितुः यजमानस्य सर्वविधानामभिलाषाणाम्प्रपूरणायास्मिन् सांस्कृतिके यज्ञे विविधरूपाणां देवतानामावाहनायाग्निर्देवोऽत्र 'होता' पदेनोक्तः। 'रत्नधातमम्' यागफलरूपाणां रत्नानां धारयितारमग्निदेवं प्रार्थ्यते। पुरोहित-देव-ऋत्विज्-होता-रत्नधाता च यज्ञकर्मस्वेव प्रयुक्ताः भवन्ति। अत एवेयं यज्ञसंस्कृतिरेव वैदिकीसंस्कृतिरिति सिद्ध्यति।

वस्तुतः यज्ञसंस्कृतिरित्यस्मिन् शब्दे यज्ञः एकः शब्दः संस्कृतिश्चापरः। तत्र संस्कृतिशब्दार्थः पूर्वमेवोक्तः, इदानीं यज्ञविषये किञ्चिद्ब्रूम :–

पाणिनीयव्याकरणस्य "यज्-याच्-यत्-विच्छ्-प्रच्छ्रक्षो नङ्"[४] इत्यनेन सूत्रेण 'यज्' धातोः 'नङ्' प्रत्यये कृते सति 'जञोर्ज्ञः' इत्यादेशेन यज्ञशब्दो निष्पद्यते। अस्याभिप्रायं प्रकटयता भगवता पाणिनिना प्रोक्तम्– **"यज देवपूजासङ्गतिकरणदानेषु"** (धातुपाठः)। अनेन देवपूजा–

१. यजनं इन्द्रादिदेवानां पूजनं सत्कारभावनं यज्ञः।

२. इज्यन्ते (पूज्यन्ते) देवा अनेनेति यज्ञः।

३. इज्यन्ते देवा अस्मिन्निति यज्ञः।

४. इज्यते देवेभ्यः अस्मिन्निति यज्ञः।

५. इज्यते असौ (विष्णुः) इति यज्ञः।

६. इज्यन्ते सम्पूजिताः तृप्तिमासाद्यन्ते देवा अत्रेति यज्ञः।

---

३. ऋग्वेदे-१/१/१
४. पा.-व्या.-३/३/९०

**सङ्गतिकरणम्–**

१. यजनं धर्म–देश–जाति–मर्यादारक्षायै महापुरुषाणामेकीकरणं यज्ञः।

२. पूज्यन्ते सङ्गतीक्रियन्ते विश्वकल्याणाय परिभ्रमणं कृत्वा महान्तो विद्वांसः वैदिकशिरोमणयः व्याख्यानरत्नाकराः निमन्त्र्यन्ते अस्मिन्निति यज्ञः।

३. इज्यन्ते स्वकीय बन्धु–बान्धवादयः प्रेमसम्मानभाजः संगतिकरणाय आहूयन्ते प्रार्थ्यन्ते च येन कर्मणेति यज्ञः।

**दानम्**

१. यजनं यथाशक्तिदेश–काल–पात्रादिविचारपुरस्सरं द्रव्यादित्यागः।

२. इज्यते देवतोद्देशेन श्रद्धापुरस्सरं द्रव्यादित्यज्यते अस्मिन्निति यज्ञः।

३. इज्यन्ते सन्तोष्यन्ते याचका येन कर्मणा स॰यज्ञः।

४. इज्यते भगवति सर्वस्वं निधाप्यते येन वा स यज्ञः।

५. इज्यन्ते चत्वारो वेदाः साङ्गाः सरहस्याः सच्छिष्येभ्यः सम्प्रदीयन्ते (उपदिश्यन्ते) सदाचार्यैर्येन वा स यज्ञः।

**यज्ञशब्दस्य कतिपयाः व्युत्पत्तिजन्या अर्थाः–**

१. येन सदनुष्ठानेन इन्द्रप्रभृतयो देवाः सुप्रसन्नाः सुवृष्टिं कुर्युः तद् यज्ञपदाभिधेयम्।

२. येन सदनुष्ठानेन स्वर्गादिप्राप्तिः सुलभा स्यात् तद् यज्ञपदाभिधेयम्।

३. येन सदनुष्ठानेन सम्पूर्णं विश्वं कल्याणं भजेत् तद् यज्ञपदाभिधेयम्।

४. येन सदनुष्ठानेन आध्यात्मिक–आधिदैविक–आधिभौतिक–तापत्रयोन्मूलनं सुकरं स्यात् तद् यज्ञपदाभिधेयम्।

५. यागाङ्गसमूहस्य एकफलसाधनाय अपूर्ववान् कर्मविशेषो यागः।

६. मन्त्रैर्देवतामुद्दिश्य द्रव्यस्य दानं यागः।

**यज्ञशब्दस्य श्रुतिप्रतिपादिता अर्था :-**

१. यत्र प्रक्षेपाङ्गको देवतोद्देशपूर्वको द्रव्यत्यागोऽनुष्ठीयते स याग पदार्थः।[५]

२. यज्ञः कस्मात्? प्रख्यातं यजति कर्मेति नैरुक्ताः। याञ्च्यो भवतीति वा यजुर्भिरुन्नो भवतीति वा। बहुकृष्णाजिन इत्यौपमन्यवः यजूँष्येनं नयन्तीति वा।[६]

३. द्रव्यं देवता त्यागः।[७]

वेदपुराणादिषु यज्ञस्य महत्त्वं विविधप्रमाणैः स्पष्टीकृतम् ऋषिभिः। यज्ञेन न केवलमैहिकं सुखं लभ्यते अपितु पारलौकिकानि सुखानि चापि प्राप्यन्ते। अर्थात् यस्य यज्ञस्यानुष्ठानेन जीवानां क्षुद्रता, अल्पज्ञतादयो विविधदोषाः नश्यन्ति, एवं भूत्वा च ते परमात्मना ऐक्यं प्राप्नुवन्ति तस्य यज्ञस्य महत्त्वं तु सर्वमान्यमेव। उदाहरणानि यथा-

१. अयं यज्ञो भुवनस्य नाभिः- ऋग्वेदे-१/१६४/३५

२. अयं यज्ञो भुवनस्य नाभिः- शुक्लयजुर्वेदे-२३/६२

३. यज्ञो विश्वस्य भुवनस्य नाभिः- अथर्ववेदे - ९/१०/१४

"संस्कृतिर्नाम मानवेषु निहितायाः मानवतायाः मूलस्वरूपम्" इत्यनया परिभाषया यदि संस्कृतिविषये चिन्तयामः चेत् स्पष्टरूपेणावलोक्यते यत् मानवजीवने मानवतायाः महन्महत्त्वं विद्यते। अखिलेऽस्मिन् संसारे यैः कैश्चिदपि महापुरुषैः कीर्त्यादिकं लब्धं, यैश्चाद्यापि लभ्यन्ते तत् केवलं मानवताया आधारे एव। मानवतां विना अस्माकं ज्ञान-विज्ञान-धर्माधर्म-सभ्यता-संस्कृति-पाण्डित्यादिकं सर्वं व्यर्थमेव।

अद्य स्वतंत्रताप्राप्तेरनन्तरमप्यस्माकं देशे विविधाः अनर्थाः भवन्ति तत्र केवलं मानवमूल्यस्य ह्रास एव मुख्यं कारणमस्ति। प्राचीनानां ऋषिमहर्षीणां

---

५. भाट्टदीपिकायाम्-४/२/१२

६. निरुक्ते-३/४/१९

७. का.श्रौतसूत्रे-१/२

कथनमिदमस्ति यत् "मानवस्य सर्वविधोन्नतेः एकमात्रसाधनं तस्य मानवता एवास्ति।"

संसारे यत्किमप्यवलोक्यते तत्सर्वमाधेयाधारयोरेव स्थितं वर्तते। अतः आधेयस्याधारं विना, आधारस्य चाधेयं विना न क्वापि महत्त्वम्। तत्र मानवः आधेयः, मानवता (संस्कृतिः) च तस्य आधारो वर्तते। मानवता (संस्कृति) रूपमाधारं विना आधेयस्य (मानवस्य) कथमपि रक्षा न सम्भवति। अतो धार्मिक-आर्थिक-आध्यात्मिक-राजनैतिक-सामाजिक प्रभृतिभिर्दृष्टिभिः मानवैः सर्वात्मना स्वसंस्कृतेः (मानवतायाः) रक्षणं करणीयमेव।

संस्कृतिरियं यज्ञेषु प्रतिष्ठिताऽस्ति। अत एव यथा मानवः स्वस्थ-जीवनस्य रक्षणं पालनं वा करोति तद्वदेवास्य यज्ञस्य रक्षणं पालनं च परमावश्यकत्वेन कुर्यात्। यज्ञं विना मानवस्य मानवतायाश्च कथमपि रक्षा न सम्भवा। श्रौतसिद्धान्तानुसारं मानवजातेः प्रारम्भ एव यज्ञेन भवति। यथोक्तं भगवता श्रीकृष्णेन–

**"सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥"[८]**

**पुरुषसूक्तेऽपि–** "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।"[९]

**शतपथश्रुतौ–** "अथैनमात्मनः प्रतिमामसृजत यद् यज्ञम्, तस्मादाहुः प्रजापतिर्यज्ञ इत्यात्मनो ह्येनं प्रतिमामसृजत्।"[१०]

**ऐतरेयश्रुतौ–** "स प्रजापतिर्यज्ञमतनुत, तमाहरत्, तेनायजत्।"[११]

**शांखायनश्रुतौ–** "प्रजापतिर्ह यज्ञं ससृजे, तेन ह सृष्टेन देवा ईजिरे, तेन हेष्ट्वा सर्वान् कामानापुः।"[१२]

---

८. गीता–३/१०
९. ऋग्वेदे–१०/९०/१६
१०. शतपथब्राह्मणे–११/१/८/३
११. ऐ.ब्रा.–२५/७
१२. शां.ब्रा.–२८/१

इयं वैदिकीसंस्कृतिरेवाध्यात्मिकी संस्कृतिर्वा भारतीया संस्कृति-रित्यभिधीयते। स्वकीयेभ्य आप्तेभ्य पितृपितामहादिभ्यः कुलपरम्परायाः सकाशाच्चास्य देशस्य जनता यानाचारान् विचारान् व्यवहारान् राजनीतिक्रिया-कलापांश्चाधिगम्य आचरणे च परिणमय्य नैजं जीवनं यापयति त आचार-विचारादय एव "भारतीय-संस्कृतिः" इत्येतेन शब्देन प्रोच्यन्ते।

लोकाः जीवन-यापनहेतुना तादृशमेव सदनं भोजनं वसनं पानं क्रीडनं मनोरञ्जनञ्च सकलमभ्युपगच्छन्ति, यादृशं देशकाल-जल-पवनादिकं भवति। इदं देशकालादिकं जनताया बुद्धौ मानसे शरीरे मस्तिष्के च नियततयैव नैजं प्रभावममोघं क्षिपति। सा तेषां सर्वेषां सान्निध्यात् तदीयैः संस्कारैः संस्कृता जायते। तद्विधा संस्कृतैव संस्कृतिरिति बुधैर्गीयते। विश्वामित्र-वशिष्ठ-कश्यप-गौतमात्रि-भरद्वाजादिगोत्रोद्भूतानां, राम-कृष्ण-बुद्धादिभारत-भूसम्भवानां महापुरुषाणां संस्कृतिर्वैदिकी संस्कृतिरिति नाम्ना विश्वविख्याताऽस्ति। इयं संस्कृतिः **"आनीदवातं स्वधया तदेकम्"**[१३] अथ च **"सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम्"**[१४] इत्येवं विधाभ्यः आचारधाराभ्यो विविधकलाकलितनिकेतनकृतवासानां, विश्वोपकारि-कर्मपरायणानाञ्चेयं संस्कृतिरस्ति। एषा संस्कृतिर्विश्वसंस्कृतिरित्यपि कथ्यते। तस्याः त्रिकालवर्त्तिसकलदेशस्थप्राणिमात्रोपकारकयज्ञकर्मनिष्ठत्वात्, भारतौकसां महर्षीणां विचारैर्जीव्यमानत्वाच्च देशेऽस्मिन् प्रचलतां मतमतान्तराणां सम्प्रदायानाञ्च मूले स्थिरीभूय एषा निषीदति, अत एव सर्वेषामपि सम्प्रदायानां प्रतिपाद्यो विषयः एकः स एव यं भारतीया संस्कृतिरभिनन्दति।

वैदिकयुगस्य भौगोलिकस्थितिः आर्याणां निवासस्थलानि, दस्युपणिप्रभृतीनां विवरणं, सामाजिकमार्थिकं, राजनैतिकं धार्मिकञ्च जीवनमित्यादिकाः सर्वेऽपि विषयाः वैदिकवाङ्मयस्याध्ययनेन प्रकाशमायान्ति। अस्मदीयाः पूर्वजाः भानु-शशि-व्योम-भूमिप्रभृतितत्त्वानां ज्ञानं सम्यक्तया निदधति स्म। ते समुद्र-नदी-पर्वत-वनादीनामुपादेयतां सर्वाङ्गीणतया विदन्ति स्म। ते दीर्घदीर्घतरां समुद्रयात्रां कुर्वन्ति स्म। तेषां सविधे महान्ति महान्ति

---

१३. ऋ.-१०/१२९/२

१४. ऋ.-१०/१९१/१

जलयानान्यासन्, तैस्ते सामुद्रिकं व्यापारञ्चक्रुः।

**"अनारम्भणे तदवीरयेथामनास्थाने अग्रभागे समुद्रे।"[१५]**

इत्यादिवैदिकमन्त्रा अत्र प्रमाणम्। वैदिक काले का नदी केन नाम्ना, को देशो जनपदो वा केन नाम्ना, पर्वतो वा केन नामधेयेन व्यवहृतोऽभवदिति वैदिकेभ्यो ग्रन्थेभ्यो यथायथं ज्ञातुमर्हति। तस्मिन् युगेऽस्मद्देशे कुरु-पाञ्चाल-कीकट-मद्र-महावृष-काशी-कोशल-विदेह-मगध-अङ्गनामका बहवो जनपदा अशोभन्त। ब्राह्मणग्रन्थेषु कुरु-पाञ्चालानां प्रकृष्टा प्रशंसा दृष्टा भवति। नदीनां वर्णनं वेदेषु बहुधा कृतमवलोकितं भवति। ऋग्वेदस्य दशममण्डले सम्पूर्णसूक्तमैवेकं नदीनां स्तुत्यां प्रयुक्तमस्ति। नदीसूक्तनाम्ना ख्यातेऽस्मिन् सूक्ते कतिपयानां नदीनां नामोल्लिखितमस्ति-

**"इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्णया।**
**असिक्न्या मरुद्वृधे वितस्तयाऽर्जीकीये शृणुह्या सुषोमया।।"[१६]**

गंगा-यमुना-सरस्वती-शुतुद्री-परुष्णी-असिक्नी-मरुद्वृधा-वितस्ता-आर्जीकीया-सुषोमाप्रभृतयो नद्यः प्रवहन्ति स्म। एतदतिरिक्तानां कतिपयानां सिन्धोः सहायकपश्चिमीयनदीनामपि नामोल्लेखो नदीसूत्रस्य षष्ठमन्त्रे मिलति-

**"तुष्टा मया प्रथमं यातवे सजूः सुसर्त्वा रसया श्वेत्याया।**
**त्वं सिन्धो कुभता गोमतीं क्रमुं मे हन्त्वा सरथं**
**याभिरीयते।।"[१७]**

**"मावो रसानितभा कुभा क्रमुर्मा वः सिन्धुर्निरीरमत्।**
**मावः परिष्ठात् सरयूः पुरोषिण्यस्मै इतसुम्नमस्तु।।"[१८]**

एतदतिरिक्ता विपाश्[१९], आपया[२०], दृषद्वती[२१], दृषद्वतीप्रभव्या[२२],

१५. ऋ.-१/११६/५
१६. तत्रैव-१०/७५/५
१७. तत्रैव-१०/७५/६
१८. तत्रैव-५/५३/९
१९. ऋ.-४/३०/३१
२०. ऋ.-३/२३/४
२१. ऋ.-३/२३/४
२२. वा.श्रौ.सू.-१०/१९/९

सदानीरा[२३], अनितभा[२४] प्रभृतयो नद्यस्तदा प्रवहन्ति स्म। सिन्धुसरितो वर्णनं नितान्तमेव रुचिरायां भाषायां विहितमवाप्यते–

**"अभित्वा सिन्धो शिशुमिव मातरो**
**या सा वर्षन्ति पयसेव धेनवः।"**[२५]

इत्यादिमन्त्रे पश्यन्तु प्रेक्षावन्तो यदभिरामोपमामाश्रित्य सिन्धोर्वर्णनं कुर्वन्ति वैदिका ऋषयः। सरस्वत्या माहात्म्यमृग्वेदे भृशं वीक्षितं जायते। आर्यनिवासस्येयमप्येका भूरिप्रशंसिता नद्यस्ति। कालान्तरे प्रसिद्धिलाभकर्तृनद्योः गङ्गायमुनयोरुल्लेखः अतिस्वल्पोऽस्ति। सरस्वत्याः प्रशंसायामनेके मन्त्राः अत्रोपलब्धाः भवन्ति। अस्या एव तटे वैदिका ऋषयः सामगायनं कुर्वन्तो दत्तचित्ता बभूवुः–

**"युवं वेदवे पुरुवारमश्विनास्पृधां श्वेतं तरुतारं दुवस्यथः।"**[२६]

**एवम्– 'सुमित्रिया न आप ओषधयः सन्तु'।** (यजु.–३५/१२)

\+ \+ \+

**'एकाच मे तिस्रश्च मे।'** (यजु.–१८/२४)

\+ \+ \+

**"अन्वितमे नदीतमे देवितमे सरस्वति।**
**अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि।।"**[२७]

इत्यादिकाः सन्ति बहवो मन्त्राः एवंविधा ये ज्ञापयन्ति यत् तदानीन्तना भारतीयाः तासु तासु विद्यासु विज्ञानेषु कलासु च पूर्णमेवाभिज्ञतां निहितवन्तः।

वेदानामध्ययनेन स्पष्टतया विज्ञायते यद्गोमत्याः पार्श्ववर्तिनः पार्वत्यप्रदेशेषु आर्याणां निवासस्थानमासीत्। अस्या एव नद्यास्तटे पार्वत्यप्रदेशेषु

---

२३. श.प.ब्रा.–१/४/१/१४
२४. ऋ.–५/५३/९
२५. ऋ.–१०/७५/४
२६. ऋ.–१/११९/१०
२७. ऋ.–२/४१/१६

राजा रथवीतिदार्भ्यः राज्यमकरोत्। ऋग्वेदस्य पञ्चमे मण्डले एतस्य स्पष्टः संकेतो मिलति। यथा–

**"एष क्षेति रथवीतिर्मघवा गोमतीरनुपर्वतेष्पश्रितः।"[२८]**

अत्रिवंशीयः अर्चनाना ऋषिरस्य नृपस्य सोमयागे प्रधानहोतुः कार्यमकरोत्। अस्यैव ऋषेः पुत्रस्य नाम श्यावाश्व आसीत्। मरुतानुग्रहेणायं ऋषित्वमवाप्य रथवीतिनृपतेः कन्यया सह विवाहमकरोत्। रथवीतेः राज्यादीषदारात्तरन्तनृपस्य राज्यमासीत्। अस्य नृपस्य दानशीलाया महिष्या 'शशीयसी' नाम आसीत्।[२९] अस्माद्राज्यादारात् पुरुमीडोराज्यमकरोत्। अस्य पितुर्नाम विददश्व आसीत्। तेनायं 'वैददश्वि' नाम्ना प्रख्यात आसीत्। अस्यार्यनिवासस्य चतुःसीमाया उल्लेखः ऋग्वेदीयमन्त्रेषु स्पष्टाक्षरेषु प्रतिपादितोऽस्ति। ऋग्वेदस्य दशममण्डलस्य १३६ तमसूक्तस्य पञ्चमे मन्त्रे पूर्वसमुद्रस्यापरसमुद्रस्य च निर्देशो मिलति। यथा–

**"वातस्याश्वो वायोः सखाऽथो देवेषितो मुनिः।**
**उभौ समुद्रावा क्षेति यश्च पूर्व उतापरः॥"[३०]**

ऋग्वेदीययुगे एकस्य विपुलसागरस्यास्तित्वं ज्ञातो भवति, यस्मिन् सागरे दृषद्वत्या सह सरस्वती-विपाश्-शुतुद्रीप्रभृतयः नद्यः न्यपतन्। तद्यथा–

**"एका चेतत् सरस्वतीनां शुचिर्यती गिरिभ्यः**
**आसमुद्रात्।"[३१]**

**"इन्द्रेषिते प्रसवं भिक्षमाणे अच्छा समुद्रं रथ्येव याथः।"[३२]**

ऋग्वेदस्यानुशीलनेनाऽऽर्यनिवासस्योत्तरस्यां दिशि तरङ्गायितस्यैकस्यान्य सागरस्यापि ज्ञानं भवति। ऋग्वेदे चतुःसमुद्रस्य सुस्पष्टं संकेतो मिलति। सप्तगुः ऋषिः इन्द्रं प्रार्थयति–

---

२८. ऋ.-५/६१/१९
२९. उत त्वा स्त्री शशीयसी पुंसो भवति वस्यसी। अदेवत्रादराधसः॥ ऋ.-५/६१/६
३०. ऋ.-१०/१३६/५
३१. ऋ.-७/९५/२
३२. ऋ.-३/३३/२

**"स्वायुधं स्ववशं सुनीथं चतुः समुद्रं धरुणं रयीणाम्।**
**चर्कृत्यं शंस्यं भूरिवारं अस्मभ्यं चित्रं वृषणं रयिं दाः॥"**[३३]

त्रितोऽपि ऋषिः सोमं प्रार्थयति–

**"रायः समुद्रांश्चतुरोऽस्मभ्यं सोमविश्वतः**
**आ पवस्व सहस्त्रिणः।"**[३४]

मद्र–महावृष–कुरु–पाञ्चाल–काश्व–कोशल–विदेह–मगध–अङ्ग–काम्पिल–त्रिप्लक्ष–नैमिषवनादीनां च देशानां चर्चा वेदे मिलति। एतेषां स्थानविशेषाणां प्रकृतेः सर्वावस्थासु परिवर्त्तितानि तानि तानि चित्राण्यत्र प्रस्तुतानि यानि प्रत्यक्षदृष्टानीव हृदयं रञ्जयन्ति। तेन ज्ञायते सारस्वतक्षेत्र-मिदमेवाऽऽर्याणामादिभूमिरस्ति। अत्रैव ब्राह्मणयुगे आर्यसंस्कृतेः सभ्यतायाश्च प्रसारोऽभवत्। ऋग्वेदीयमन्त्रेषु एवंविधानां भौगोलिकतथ्यानां वर्णनानि प्राप्यन्ते, ये उत्तरीयध्रुवप्रदेशे एव यथार्थतः समुपलब्धाः भवन्ति। लोकमान्यतिलक महोदयः उत्तरीयध्रुवमेव आर्याणां मूलस्थानममन्यत।

वैदिककालीनः समाजः पितृप्रधान आसीत्। पिता एव सर्वेषां गृहाणां नेता एवं पुरस्कर्त्ता। स्त्री–पुत्र–पुत्री–वध्वादीनां जीवनं तस्यैव छत्रच्छायायां सुखेन व्यतीतोऽभवत्। वैदिकेऽनेहसि सर्वेप्याश्रमाः समृद्धाः सुखिनश्चासन्। पुत्राः पुत्र्यश्चोच्चशिक्षां तदा प्राप्तवन्तः। ललितकलानाञ्च तदा प्रसार आसीत्। विवाहस्तदा सुव्यवस्थितप्रथां वहन् दृग्गोचरो भवति। वैदिका आर्याः सङ्ग्रामप्रियाः जातय आसन्। अतो मन्त्रेषु वीरपुत्राणां प्रसूतये देवतानां भव्या प्रार्थना कृताऽस्ति–

**"यथाऽहं शत्रुहोऽसान्यसपत्नः सपत्नहा।"**[३५]

विवाहकालस्येयं प्रार्थनाऽस्ति– हे इन्द्रदेव! इमां स्त्रीं दशपुत्रान् देहि– **"दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि।"**[३६] ऋग्वेदकालेऽभ्रातृका

---

३३. ऋ.–१०/४७/२

३४. ऋ.–७/३३/६

३५. अथर्ववेदे–१/२९/९

३६. ऋ.–१०/८५/४५

कन्याया विवाहो बहुधा नाऽभवत्, यतस्तस्याः पुत्रः स्वपितुः सम्पदधिकारं विहाय मातामहस्य समृद्धेरधिकारमवहत्। ऋग्वेदे तस्य पितुः प्रसन्नताया वर्णनमस्ति यः स्वदुहितुर्वराण्वेषणे सफलोऽभवत्–**"पिता यत्र दुहितुः सेकमृञ्जन् त्संशग्म्येन मनसा दधन्वे।"**[३७] शतपथब्राह्मणे सुकन्याया निःसन्दिग्धकथनमस्ति यन्मम पितरौ यस्मै वराय मां समर्पितवन्तौ तं जीवनपर्यन्तं न परित्यजामि।

**"सा होवाच यस्मै मां पिताऽदान्नैवाहं**
**तं जीवन्तं हास्यामीति।"**[३८]

ऋग्वेदे विवाहस्य सर्वमान्यं सूक्तमिदमस्ति–

**"सोमो वधूयुरभवदश्विना ता उभा वरा।**
**सूर्यां यत् पत्ये शसन्तीं मनसा सवितादात्।।"**[३९]

वैदिकयुगे नारीणां सम्मानमासीत्। मातृ–दुहितृरूपेण किंवा जायारूपेण तदानीं नारी सर्वथा सम्मानीयाऽऽसीत्। 'जायेदस्तम्' अर्थात् गृहिणी गृहमुच्यते। तस्मिन् युगे स्त्री सहधर्मिणी आसीत्। अपत्नीको जनो यज्ञाधिकारा-द्वञ्चितोऽभवत्। **"अयज्ञो वा ह्येष योऽपत्नीकः।"**[४०] स्त्रियाः प्रेम पत्ये आदर्श आसीत्। सा समरसतायाः प्रतिमूर्त्तिममन्यत्। न केवलं गार्हस्थ्य-जीवनस्यैव सा स्वामिन्यासीत् प्रत्युत स्वपत्यौ तस्याः पूर्णप्रभुत्वमासीत्। सा गृहलक्ष्मीः आसीत्। कन्याः सुवध्वः सन्तु एतदर्थं तदानीमुदारशिक्षणस्य व्यवस्थाऽऽसीत्। लोपामुद्रा स्वपत्या मुनिनाऽगस्त्येन सह सूक्तस्य दर्शनं कृतवती।[४१] अपाला[४२] रोमशयोः संसर्गेण सूर्यपुत्री सूर्याऽपि ऋषिकाऽऽसीत्।

ऋग्वेदीयसमाजे सामान्यतः सर्वत्र धर्मस्य समादर आसीत्। अस्मिन् समाजे पुरुषाः सदाचारवन्तः, पुरुषार्थप्रियाः, शक्तिशालिनो बभूवुः। कृषि–कर्मणि

---

३७. ऋ.–३/३१/१
३८. श.प.ब्रा.–४/१/५/९
३९. ऋ.–१०/८५/९
४०. तै.ब्रा.–२/२/२/६
४१. ऋ.–१/१७९
४२. ऋ.–१०/९१

पशुपालने च जनता सदा तदा निरतावाप्यत। ग्रामेषु जनता निवासं चक्रे। पुरदुर्गादीनां वर्णनं वैदिके साहित्ये पर्यवलोक्य विदितं जायते यत् तदानीन्तनाः जनाः सभ्यतायां संस्कृतौ च प्रशंसनीयामुन्नतिं गता आसन्।

**"शतभुजिभिस्तमभिह्रुतेरघात्**
**पूर्वी रक्षता मरुतो यमावत।**
**जनं यमुग्रास्तवसो विरप्शिनः**
**पाथना शंसात् तनयस्य पुष्टिषु।।"**[४३]

प्रभृतयो मन्त्राः सन्त्यस्मिन् विषये प्रमाणम्।

**"कारुरहं ततो भिषगुपलपक्षिणी नना।**
**नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्द्रो परिस्त्रव।।"**[४४]

इत्यादयो मन्त्राः बोधयन्ति यत् तदानीन्तनाः जनाः जीवनयापनायार्थोपार्जनाय च बहूनि उद्यमनानि जगृहुः।

वस्तुतस्तु वैदिकः कालः शासनपद्धत्यामपि परमकुशलो बभूव। शासनपद्धतिश्च तदाऽनेकविधा प्रचलिताऽऽसीत्। ऐतरेयब्राह्मणस्यैन्द्र-महाभिषेकस्याध्ययनेन वैदिकयुगे प्रचलिताऽनेकविधाभिः शासनपद्धतिभिरस्माकं परिचयो मिलति। किन्तु, आसां पद्धतीनां यथार्थरूपस्य ज्ञानमवान्तरकालिकस्य राजनीतिशास्त्रस्य ग्रन्थानां तथा तत्कालिकानां राज्ञां शिलालेखानां साहाय्येनाभवत्। इन्द्रस्याभिषेको दक्षिणस्यां दिशि 'भौज्याय" अभवत्। भौज्यं ब्राह्मणयुगस्यैका शासनपद्धतिरासीत्। अस्यां पद्धतौ गणराज्यस्य स्थापना मान्याऽऽसीत्। ऐतरेयानुसारेणेयं पद्धतिः सात्वतराज्ञेषु (यादवेषु) प्रचलिताऽऽसीत्। अतो भौज्यशासनं गणराज्यस्य विशिष्टप्रकारकं शासनमासीत्। स्वाराज्यस्य राजनैतिकं विधानं तया प्रणाल्या सह सम्बद्धमासीत्, यस्यां प्रणाल्यां गणानामुपरि एकः अध्यक्षः शासनमकरोत्। वाजपेययज्ञकारणात् स्वाराज्यस्य प्राप्तिर्भवति। **"य एवं विद्वान् वाजपेयेन यजति, गच्छति स्वाराज्यम्। अग्रं समानानां पर्येति। तिष्ठन्तेऽस्मै ज्येष्ठाय।"**[४५] गणस्य सर्वे सभासदः 'सदृशाः सर्वे'

---

४३. ऋ.-१/१६६/८
४४. ऋ.-९/११२/३
४५. तै.ब्रा.-१/३/२२

मन्यन्तेस्म। अत एव– 'अग्रं समानानां पर्येति' इत्येतस्य पदस्य तात्पर्यं गणराज्यस्याध्यक्षपदे नास्ति। फलतः स्वाराज्यशासनमपि गणतन्त्रीयशासन-विधानमस्ति। वैराज्यपद्धत्याः प्रचलनं ऐतरेयानुसारेण उदीच्यदेशेषु हिमालया-दप्यग्रे आसीत्, यत्रोत्तरकुरुः, उत्तरमद्राख्या जातयो निवसन्तिस्म। वैराज्यस्यार्थो भवति नृपतिविहीनो देशः। फलतः इयमेवाविशिष्टा शासनपद्धतिरासीत्। यस्यां पद्धत्यां राज्ञः नितान्तमभाव आसीत्। ऐतरेयसाम्राज्यपद्धत्याः प्रचलनमप्यासीत्। छान्दोग्ये पाञ्चालानां नृपतेर्नाम 'प्रवाहणजैबलिः' प्रदत्तमस्ति। अनेन प्रकारेण वैदिकयुगे गणतंत्र–राजतन्त्रयोरुभयोः प्रकारकयोः शासन-विधानस्य दृष्टान्तं मिलति। वैदिक आर्यः शासनदृष्ट्यापि एकस्य सुव्यवस्थितराज्यस्याधीन आसीत्। राजानः प्रजावत्सला आसन्। प्रजा राष्ट्रे राजनि च भक्तिभावं निदधौ–

**"ध्रुवोऽच्युतः प्रमृणी हि शत्रून्",**[४६] **"त्वां विशो वृणतौ राज्याय"**[४७], **"यन्त्री राड्"**[४८], **"यां च रात्रिमजायेऽहम्"** इत्यादिमन्त्रेषु तात्कालिक्या राजनीतिकदशाया मनोज्ञं दर्शनं जायते। **"युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य विहितो विपश्चितः।"**[४९] प्रभृतिमन्त्राः सन्ति साक्षिणो यद्वेदकालिकं भारतं धार्मिकं पावनं पवित्रचरित्रं जीवनमुवाह।

स्थान–समयभेदेन भिन्नतामाददानाऽपि भारतीया संस्कृतिः सुरधुनी-धारेवाजस्रं स्वकीयामेकात्मतां पूततां च न जहाति। इदमेव कारणं यद् भारतावनौ चिरात्प्ररूढास्वपि सा कालवैविध्यजनितविकृतिरजोधूसरासु साम्प्रदायिकतासु निपत्यापि न म्लानतां गता वीक्ष्यते। यथेश्वरो मायोपहितः सन्नपि न मायया वशीकर्तुं शक्यते, तथैव सम्प्रदायोपधर्मविधर्माद्युपहताऽपि न सा तैः सम्प्रदायादिभिः कदापि स्वपथात् पातयितुं प्रभवति।

यत्कर्म यथार्थं न विधीयते तत्कर्मानेकान् दोषान् उत्पादयति। तद्विधानि कर्माणि सततं मानवं दुन्वन्ति। स जनुर्निधनचक्रपतितोऽहर्निशं

४६. अथर्व सं.–६/८८/३
४७. अथर्वे–३/४/२
४८. शु.य.सं.–१४/२२
४९. शु.य.सं.–५/१४/; ११/४; ३७/२

विषीदति। यज्ञार्थककर्माणि तु तेभ्यो नितान्तं विपरीतानि। तानि मानवे निष्कामभावनामुदभावयन्ति। निष्कामेषु कर्मसु यदा रुचिरुदेति तदा रागद्वेषादिकाः दोषाः असद्भावनाश्च मनोभुवं हित्वा दूरं पलायन्ते। मानवोऽनिर्वचनीयां प्रीतिं भजमानो जीवनस्य चरममुद्देश्यमवाप्तुमभिधावति। भारतीयसंस्कृतौ निष्कामकर्मवीचयः सर्वत्र उच्छलन्त्यः प्रवहन्त्यश्च संलक्ष्यन्ते–

**"तस्मादसक्तः सततं कार्यं कर्म सदाचर।**
**असक्तो आचरन् कर्म परमाप्नोति पूरुषः॥"[५०]**

## २. वैदिककवीनां प्राकृतिकं जीवनम्

वेदानां विषये भगवतः मनोः वचनमेतत्– **"सर्वज्ञानमयो हि सः"** इति। अर्थाद् वेदेषु सर्वविद्यानां सूत्राणि विद्यमानानि सन्ति। तानि सर्वाण्यपि सूत्राणि यैः ऋषिभिः वैदिककविभिः प्रस्तुतानि, ते कवयः प्रकृतेः विशालतमेङ्के कृष्णाजिनेषूपविश्य ध्यानयोगमाध्यमेन तानि-तानि तत्त्वानि सम्यगवलोक्यावगत्य परीक्षणविधिना आश्रमरूपिण्यां प्रयोगशालायां अनुशील्य च तत्तदनुशीलनसिद्धान्तं सूत्ररूपेण स्वशिष्येभ्यो दत्तवन्तः।

कथनस्याभिप्रायोऽयं यत् वैदिककविभिः प्रकृतिसम्बन्धीनि यानि-यानि सूत्राणि प्रतिपादितानि तानि सर्वाणि तेषां जीवने विद्यमानान्यासन्। प्रकृतिसम्बन्धीनि प्राकृतानि, तादृशं प्रकृत्या सम्बद्धं यज्जीवनं तत् प्राकृतिकं जीवनमित्युच्यते।

वस्तुतः प्रकृतेः रहस्यानां यदन्वेषणं तदेव वैज्ञानिकः आविष्कार इत्युच्यते। यतो हि प्रकृतौ विद्यमानानां समस्तपदार्थानां संज्ञा भवति प्राकृतिकम्। यदा वयं प्रकृतिविषये चिन्तयामः चेत् प्रकृतेरादौ जलमेव मुख्यं पदार्थमिति विज्ञायते। आधुनिकैर्वैज्ञानिकैः जलविषयकं सूत्रं प्रस्तुतम् $H_2O$ इति। अत्र H इत्याङ्गलाक्षरेण हाइड्रोजननामकं तत्त्वम्, O इत्यनेन च ऑक्सीजनतत्त्वं स्वीक्रियते। सूत्रानुसारं हाइड्रोजन इत्यस्य भागद्वयं, ऑक्सीजन इत्यस्य चैकं भागं मिलित्वा जलं भवति।

---

५०. श्रीमद्भगवद्गीता–३/१९

यद्येवमेव तर्हि कथं वर्षाभावे कोलाहलं कुर्वन्ति जना:? सूत्रं सर्वैरधीतमेव, प्रक्रियाऽपि सर्वे जानन्त्येव, कथं न जलस्य निर्माणं कुर्वन्ति? भो:! कार्यमिदं महत्कठिनम्। यतो हि अनया प्रक्रियया तु महत्प्रयासेनाल्प-लाभ एव सम्भवितुमर्हति। अत: स्पष्टमेव यत् तत्तत्त्वम् अस्मिन् जगति विद्यमानमस्ति तस्य स्वरूपद्वयं भवति '$H_2O$' सदृशं सूक्ष्मं, जलसदृशं स्थूलञ्च। तत्र स्थूलतत्त्वानां सूक्ष्मतयाऽनुशीलनमेव वैज्ञानिकमध्ययनमिति कथ्यते।

अत: अस्माकं वैदिकर्षय: महावैज्ञानिका आसन् इति कथनं अतिशयोक्तिर्न भविष्यति। ते स्वकीयायां प्रयोगशालायां समस्तानां प्राकृतिक-पदार्थानां सूक्ष्मस्वरूपमवलोक्य तेभ्यो 'देवता' इति संज्ञां व्याहृतवन्त:।

सामान्यया परिभाषया यत्तत्वमस्मिन् जगति दृश्यमानं विद्यते तत्सर्वं प्राकृतिकमेव। तेभ्य: सर्वेभ्योऽपि प्राकृतिकपदार्थेभ्योऽस्माकमृषिभि: 'देवता'-संज्ञा दत्ताऽस्ति। यथा–

**"अग्निर्देवता, वातो देवता, सूर्यो देवता, चन्द्रमा देवता, व्वसवो देवता, रुद्रा देवता, ऽऽदित्या देवता, मरुतो देवता, विश्वेदेवा देवता, बृहस्पतिर्देवतेन्द्रो देवता, व्वरुणो देवता।।"**[५१]

यद्यपि वेदेषु द्विविधा: देवा: स्पष्टीकृता: सन्ति। आजानदेवा: प्रकृतिदेवाश्च। तत्र आजानदेवा: सनातनपदेनोच्यन्ते। भगवता मनुना प्रोक्तञ्चापि–

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।"**[५२]

वस्तुत: यावन्तो देवा: सन्ति ते सर्वे एक एव महतो देवस्य परमेश्वरस्य विशिष्टशक्त्या: प्रतीकस्वरूपा: सन्ति। उक्तं हि यथा यास्काचार्येण–

**"महाभाग्यात् देवाताया एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवा: प्रत्यङ्गानि भवन्ति।"**[५३]

---

५१. शु.य.सं.–१४/२०

५२. मनु.–१/१३

५३. निरुक्ते–७/४

ऋग्वेदस्य तु स्पष्टप्रतिपादनमस्ति–

**“एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः।”**[५४]

अतोऽग्निरैश्वर्यशालिनः परमेश्वरस्यैव रूपमस्तीति स्वीकरणन्तु सर्वथोचितमेव। अत्र न कोऽपि विरोधः केषाञ्चिदपि प्रतीयते, किञ्च यदाऽस्यां शैल्यां अग्न्यादिदेवानां प्रत्याख्यानं भवति तदा तु विरोधस्याप्युदयो भवत्येव।

वेदेषु देवतानां स्थानं महत्त्वावहम्। मानवः प्रत्यहं प्रकृतिदेव्याः नानालीलाः पश्यति। वैदिककालस्य महर्षयस्तस्यास्तत्तल्लीलाः अवधारयितुं विभिन्नाः देवताः अकल्पयन्। महर्षीणां विश्वासोऽयं यदासां देवतानामनुकम्पयैव सर्वाणि कार्याणि सम्पद्यन्ते। जगति घट्यमानानां सर्वासामपि घटनानां कारणभूताः देवता एव। यास्को वदति यद्देवतासु काश्चन पृथिवीस्थानीयाः, काश्चन अन्तरिक्षस्थानीयाः, काश्चन द्युस्थानीयाः सन्ति। पृथिवी–स्थानीय–देवतासु अग्निर्देवता, अन्तरिक्षस्थानीयासु वायुर्देवता इन्द्रो देवता वा, द्युस्थानीयासु सूर्यविष्णुप्रभृतिदेवताः सन्ति महीयस्यः। प्रतीच्यानां प्रधीनां देवताः उद्दिश्य विचारोऽयं यद् भौतिकघटनोपपत्यै प्राकृतिकानि दृश्यानि देवतात्वेन कल्पितानि।

देवताः प्रायेण त्रीणि रूपाणि बिभ्रति–

**“इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्”**[५५] इति। ‘विष् लृ व्याप्तौ’ धातोः विष्णुशाब्दस्यार्थो भवति सर्वव्यापकः। स हि निरतिशयमैश्वर्यशालित्वात् ‘ईश्वर’ इत्युच्यते। पुरुष सूक्तेऽपि– **“सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम्।”**[५६] विश्वतो वृत्वा सर्वत्र व्याप्तः सन् त्रिभिस्स्वरूपैः “सहस्रशीर्षा, सहस्राक्षः, सहस्रपात्’ तिष्ठति। प्रायश इमान्येव त्रीणि रूपाणि – आधिभौतिकम् – आधिदैविकम्, आध्यात्मिकञ्च उच्यन्ते। तत्र इन्द्रियगम्यं रूपमाधिभौतिकम् भवति, आधिदैविकं आध्यात्मिकम् च उभे रूपे इन्द्रियागम्ये। **“विष्णोर्नु**

---

५४. ऋ.–१/१६४/४६

५५. ऋ.–१/२२/१७

५६. ऋ.–१०/९०/१

**कं वीर्याणि प्रवोचम् यः पार्थिवानि विममे रजांसि।"**[५७], **"प्रविष्णवे शूषमेतु मन्म गिरिक्षित उरुगाय वृष्णे।"**[५८], **"विष्णो रराटमसि विष्णोः स्नप्त्रे स्थो विष्णोः स्यूरसि।"**[५९]

इत्यादिमन्त्रैः विष्णुदेवस्य त्रीण्यपि रूपाणि प्रदर्श्यन्ते। एकस्मिन्मन्त्रे तु अस्य प्रमाणमपि लभ्यते। यास्काचार्येण यदुक्तं "तिस्र एव देवताः" पृथिवीस्थानीयाः अन्तरिक्षस्थानीयाः द्युस्थानीयाश्च। एषु त्रिष्वपि स्थानेषु विष्णोरवस्थितिरेवोक्ता। यथा– **"दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात्।"**[६०] पुरुषसूक्ते तु इतोप्यधिकेन स्पष्टरूपेणोक्तम्–

**"नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाः अकल्पयन्॥"**[६१]

मन्त्रेऽस्मिन् भूमिर्द्यौरन्तरिक्षादयः त्रयो लोकाः तथा-तथाभूताः कल्पिताः। ऋग्वेदस्थं पुरुषसूक्तं तु सृष्टिसंरचनात्मकमेवोक्तं तत्त्वदर्शिभिः। यः पुरुषः एतान् सर्वानपि देवान्, लोकान् चोत्पादयति तस्य पुरुषस्य तु प्रतिमा- प्रतिमानमुपमानं किञ्चिद्वस्तु नास्ति, अतस्तस्य परमेश्वरस्य नाम एव महद्यशसा सुप्रसिद्धमस्ति। उक्तं हि यथा वाजसनेयिसंहितायाम्–

**"न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः।"**[६२]

स विज्ञानात्मा परेणात्मना विशिष्टोऽग्न्यादिष्वोतप्रोतत्वेनोपास्यो-ऽभिधीयते। अग्निः तदेव कारणं ब्रह्मैव आदित्यस्तदेव वायुस्तदेव चन्द्रमास्तदेव। त्रयीलक्षणं ब्रह्म तदेव ताः एव आपः प्रसिद्धाः स प्रसिद्धः प्रजापतिरपि तदेव ब्रह्म। इत्थमनेकेषु स्थलेषु वैदिककवयः परब्रह्मणः प्राकृतिकस्वरूप-मुपवर्णयन्तः ब्रह्मसाक्षात्कारं कृतवन्त इत्यपि सिध्यति। ऋग्वेदस्यैकस्मिन् मन्त्रे तु सुष्ठुपक्षधरौ, सहवासिनौ, समानख्यातौ, द्वौ पक्षिणौ प्रकृतिब्रह्मात्मकौ

५७. ऋ.-१/१५४/१
५८. ऋ.-१/१५४/३
५९. शु.य.सं.-५/२१
६०. शु.य.सं.-५/१९
६१. ऋ.-१०/९०/१४
६२. शु.य.सं.-३२/३

एकस्यैव वृक्षस्योपरि स्थितौ, तयोरेकः सुस्वादुफलं भक्षयति, अपरस्तु अभुक्त्वैव विराजमानोऽस्ति। यथा–

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति।।"[६३]

एतस्याः प्रकृतेः सौन्दर्यस्य वर्णनं 'उषस्' सूक्ते भूयिष्ठेनोपलभ्यते। तत्र उषादेव्याः विषये समुपलब्धानां सूक्तानां पर्यालोचनेन ज्ञातो भवति यदेतानि सूक्तानि प्राकृतिकदृष्ट्यापि नितान्तानि सरसानि सहजानि भव्यभावमण्डितानि च सन्ति। प्रभाते अरुणिमामण्डितं, सुवर्णच्छटाविच्छुरितं प्राची नभोमण्डलं कस्य सहृदयस्य हृदयं नावर्जयति? वैदिकऋषिस्तत्सौन्दर्यं प्रेमपूरितदृष्ट्यैव पश्यति। तद् दिव्यरूपं दृष्ट्वैव परिमुह्यति। उषादेवी मानवीस्वरूपे एव कविवल्लभा भवति। चेद् उषा महतः स्वर्गलोक-स्यैवाधिकारिणीमात्रैव भवेत् तदाऽस्या विश्वस्योपरि ऊर्ध्वलोक एव स्वदिव्यच्छविना जगदाकार्षयन्ती स्वात्मन्येव दीव्यति किञ्चात्र उषादेव्या सह वैदिककवेरनन्यता प्रतिभाति।

'कस्यचन पदार्थस्य सम्यगवलोकनं कृत्वा तस्य स्वाभाविकतया यद्यथायथवर्णनं तदेव कलाया उत्कृष्टत्वं स्मृतम्।' यद्रस्किन आह तद्वैदिककवेः प्रकृतिवर्णने कृत्स्नतयाऽन्वर्थीभवति। तदीये प्रकृतिवर्णने, उषादेव्याः सौन्दर्यकथने च तस्य निरीक्षणनूतनता, सहृदयताया उदात्तता, कल्पनाया अभिनवोन्मेषो विद्योतते। तत्प्रकृतिश्रियस्तस्य प्रकृतिजनन्युत्सङ्गे शैशवादेव क्रीडनं वर्द्धनञ्च वेदयन्ति। अतः उषावर्णने प्रकृतिलक्ष्मी तथा विराजते यथा मणिमालायां स्वर्णसूत्रम्। उषा केवलं बाह्यसौन्दर्यस्यैव प्रतिमा नास्ति प्रत्युत सा कवये आन्तरिकसुषमाया अपि प्रतिमूर्ति-रूपेणावस्थिताऽस्ति। कवेर्दृशि नित्यं प्रति उषादेव्याः आगमनं चक्रावर्तन-मिवास्ति, येन प्रकारेण चक्रं सदैवावर्त्तितं भवति तथैव उषाऽपि स्वावर्त्तनं करोति। उक्तं हि यथा–

"उषः प्रतीची भुवनानि विश्वोर्ध्वा तिष्ठस्यमृतस्य केतुः।

---

६३. ऋ.–१०/१६४/२०

**समानमर्थं चरणीयमाना चक्रमिव नव्यस्या ववृत्स्व॥"[६४]**

एतादृशानां सूक्त-मन्त्राणामनुशीलनेन वयं वैदिकऋषीणां प्रकृतिं प्रति उदात्तभावनां ज्ञातुं शक्नुमः। वस्तुतः प्रकृतिचित्रणं प्रकारद्वयेन भवितुमर्हति- अनावृतं वर्णनम्, अलङ्कृतवर्णनञ्च।

**१. अनावृतं वर्णनम्-**

अर्थात् प्रकृत्याः स्वत आलम्बनत्वेन वर्णनम्, यत्र प्रकृत्या नैसर्गिकमाधुर्यं कविहृदयमाकृष्टं करोति तथा स्वकीयाऽऽनन्देन कविमानसञ्च तोषयति।

**२. अलङ्कृतवर्णनम्-**

अलङ्कृतवर्णने प्रकृत्यास्तथा तासां व्यापाराणां मानवीकरणं भवति। प्रकृतिः सचेष्टा भूत्वा चैतन्यप्राणिनामिव नानाविधानां व्यापाराणां सम्पादनं करोति। सा कदाचित् स्मितवदना कुमारी इव दर्शकानां हृदयमाकृष्टं करोति, कदाचिदुग्ररूपेण भीषण-जन्तुरिवास्माकं हृदये भयं क्षोभञ्च समुत्पादयति।

वैदिककवेरस्याः द्विविधायाः भावनायाः स्फुटानि निदर्शनानि विविधेषु वैदिकाऽऽख्यानेषु, सूक्तेषु, मन्त्रेषु चोपलभ्यन्ते। ऐतिहासिकव्याख्याकाराणां सम्मतौ वेदेष्वनेकानि महत्त्वपूर्णाऽऽख्यानानि सन्ति। ऋग्वेदेऽपि आख्यानानां संख्या नात्यल्पाऽस्ति। एतेषु कानिचिदाख्यानानि वैयक्तिकदेवताविषयकाणि सन्ति, कानिचिच्चाऽऽख्यानानि कामपि सामूहिकघटनामभिलक्ष्य प्रवृत्तानि भवन्ति। तथ्यमिदमस्ति यद् एतेषामाख्यानानां मूलरूपस्याभिव्यक्तिः ऋग्वेदीयमन्त्रेष्वेवोपलभ्यते। अनन्तरयुगेष्वाख्यानं परिस्थित्याः परिवर्त्तनेनाथवा-ऽभिनवयुगस्याभिनवकल्पनायाः प्रभावेण परिवर्त्तितं परिबृंहितञ्च भूत्वा दृग्गोचरं भवति। अनेन प्रकारेण ऋग्वेदस्याऽऽख्यानानि ब्रह्मसु, उपनिषत्सु, सूत्रग्रन्थेषु, रामायणे, महाभारते तथा विभिन्नपुराणेषु स्वकीयघटनायाः स्थितिविषये विशेषरूपेण विकसितानि परिवर्त्तितानि च भूत्वा उपलब्धानि भवन्ति।

---

६४. ऋ.-३/६१/३

अस्य विकासस्योपरि तत्तद्युगस्य धार्मिकस्य सामाजिकस्य च परिस्थिति-जन्यप्रभावस्य स्वरूपं स्पष्टरूपेण दृग्गोचरं भवति। ऋग्वेदे इन्द्रस्य तथाऽश्विनौ देवस्य विषयेऽपि अनेकान्याख्यानानि सन्ति। एतेष्वाख्यानेषु देवानां वीरता-पराक्रम-उपकारादीनां भावना स्पष्टरूपेणाङ्किताऽस्ति। ऋग्वेदाभ्यन्तरे त्रिंशदाख्यानानां स्पष्टनिर्देशो मिलति, येषु कतिपयानां प्रख्याताऽऽख्यानानां महत्त्वपूर्णा सूचीयमस्ति--१. शुनः शेपः (१/२४), २. अगस्त्यः लोपामुद्रा च (१/१७९), ३. गृत्समदः (२/१२), ४. वसिष्ठः विश्वामित्रः (३/५३, ७/३३ प्रभृतयः), ५. सोमस्यावतरणम् (३/३३), ६. वरुणश्च वृषजानः (५/२), ७. अग्नेरुत्पत्तिः (५/११), ८. श्यावाश्वः (५/३२), ९. बृहस्पतेर्जन्म (६/७१), १०. राजा सुदासः (७/१८), ११. नहुषः (७/९५), १२. अपाला (८/९१), १३. नाभानेदिष्टः (१०/६१-६२), १४ वृषाकपिः (१०/८६), १५. उर्वशी-पुरूरवसोश्च (१०/९५), १६. सरमा-पणयोश्च (१०/१०८), १७. देवापि शन्तनुश्च (१०/९८), १८. नचिकेतुः (१०/१३५), एतदतिरिक्तं दानप्रसङ्गेष्वनेकेषां भूभृतां नामोपलब्धमस्ति।

वैदिकाऽऽख्यानानां शिक्षा मानवसमाजस्य सामूहिककल्याणाय विश्वमङ्गलस्याभिवर्द्धनाय च भवति। भारतीय-संस्कृत्यनुसारेण मानवाः देवैः सह सम्बद्धाः सन्ति। मानवो यज्ञेषु देवेभ्य आहुतिं ददाति। देवोऽपि प्रसन्नो भूत्वा तं प्रसादयति, तस्याभिलाषं पूरयति।

**"यज्ञोऽयमुच्यते धर्मः"**[६५]

अर्थाद्यज्ञ एव हि मुख्यो धर्मः। स एव जगदुत्पादको रक्षकश्चेत्यार्यशास्त्रेषु पदे पदे गीतम्। यज्ञोऽयं द्विविधः–प्राकृतः, कृत्रिमश्च। तत्र द्विजैरनुष्ठीयमानं कृत्रिमं यज्ञमेव प्राधान्येन लक्षयन्तो मीमांसकाः– **"द्रव्यं देवतात्यागो यागः"**[६६] इति तल्लक्षणमाहुः। देवतोद्देश्येन हविर्द्रव्यत्यागो यागशब्दाभिधेय इति तात्पर्यम्। किमर्थमयं त्यागः क्रियते, अनेन च देवानां कथं कीदृश उपयोगः साध्यते, किञ्च तेनास्माकं फलं भवतीत्येतत्सर्वं प्राकृतयज्ञविज्ञानेन शक्यं विज्ञातुम्। प्रकृतौ हि निरन्तरं यज्ञः प्रवर्त्तते,

---

६५. यज्ञेन यज्ञमयजन्त देवास्तानि धर्मानि प्रथमान्यासन्। ऋ.-१०/९०/१६

६६. का.श्रौ.सू.-१/२/२

तदाधारेणैव कथञ्चिदस्मत्प्रतिकूलमपि प्रकृतियज्ञमनुकूलयितुमस्मभ्यमपि यज्ञः शिक्षितः। तस्मात् प्राकृतो यज्ञ एव कृत्रिमस्य यज्ञस्य मूलम्।

यथाहि श्रुतिष्वाम्नायते–**"अग्नीषोमात्मकं जगत्"**[६६] इति। अत्राग्नौ सोमस्याहुतिरेव यज्ञ उक्तः। तत्राग्निरन्नादः, सोमस्त्वन्नम्। द्विविधा हि लोके भवन्ति पदार्थाः-ऋतुरूपाः, सत्यरूपाश्च। यदि केन्द्रबद्धं न तिष्ठति प्रत्युतमेव विकीर्णभावेन प्रसरति, तद् ऋतमित्युच्यते। यथा वायुरापः सोम इत्येकस्यैव तत्त्वस्येमास्तिस्रोऽवस्थाः स्थूलावस्था आपः, तासां सूक्ष्मावस्था वायुः, तदपेक्षयापि सूक्ष्मतमावस्था सोमः। सोऽयं सोमः सर्वत्राकाशेऽभिव्याप्तः। यथोक्तं सोमस्तुतिमन्त्रे–

**"त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।**
**त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ।।"**[६७]

यवतण्डुलाद्या ओषधीः सोम एवोत्पादयति, आपो गावश्च सोमेनैव जनिताः, ओषधिष्वप्सु गव्येषु च दुग्धादिषु सोमः प्राचुर्येणाभिव्याप्नोतीति तद्भावः। सोम एव चान्तरिक्षं विस्तीर्णं करोति। सर्वत्र विस्तीर्णेऽन्तरिक्षे सोम एवाभिव्याप्त इति तात्पर्यम्। सूर्यरश्मिसम्पर्केण सोम एव प्रज्ज्वलितो ज्योतीरूपतामासाद्य तमो निवर्तयतीति। लोकेऽपि हि घृततैलादिस्थितः सोम एवाग्निसम्पर्कात् दीपादिषु ज्योतीरूपतामासाद्य तमो निवर्तयतीति दृश्यते, तथैव सूर्यरश्मिसंपर्कादन्तरिक्षे सोमः प्रज्वलतीति उक्तम्। सोऽयं सोमः सर्वस्मिन्नन्तरिक्षे ऋतरूपेण स्थितः। उक्तञ्चापि शतपथश्रुतौ–

**"अन्नाद एवाग्निरभवदन्नं सोमो-**
**ऽन्नादश्च वा इदं सर्वमन्नं च।"**[६८]

अग्निस्तु केन्द्राधारेण तिष्ठतीति स सत्यः। अग्निरयं विकसनशीलः केन्द्राद्बहिरभितो विकसन्नभिव्याप्नोति। सोमस्तु संकोचशीलोऽभितः संकुचन्नग्नौ पतति, सेयमेव रूपान्तरताप्रापणमेव सङ्गतिकरणं यज् धातोरर्थ उक्तः। अग्निरूपतामापद्य विकासशीलत्वात्, पुनर्बहिर्गच्छति। दूरं प्रसरंश्च केन्द्रसम्बन्धं

---

६७. ऋ.-१/९१/२२
६८. श.प.ब्रा.-११/१/६/१९

परित्यजन् पुनः सोमरूपतामापद्यत इत्यग्नीषोमयोरन्योन्यरूपतापत्तिरूपं चक्रमनवरतं प्रवर्तते। सोऽयं प्राकृतो यज्ञः।

सूर्यो ह्यनवरतं प्रकाशमौष्ण्यं चोद्वमन् सर्वत्र संक्रामयतीति वैज्ञानिका अपि प्रतिपादयन्ति। तत्परिमाणमपि चानन्तकोटिमितं ते व्याचक्षते। परमियं प्रतिक्षणं जायमाना सूर्यमण्डलक्षतिः कथं सम्पूर्यत इति नैतदद्यावधि तैर्निश्चेतुं पारितम्। वैदिकं विज्ञानं त्वनादिकालादेतन्निश्चितं यत् सूर्यमण्डलं स्वर्लोकः, तदुपरि महोऽन्तरिक्षं, तदुपरि च जनलोक एव सोमलोकः। तस्मादनवरतमनन्त-कोटिगुणितः सोमः प्रतिक्षणं सूर्यमण्डले आहूयते। तमेव च सोममग्निरूप-तामापद्य सूर्यो लोकमभितः प्रसारयति। इयमेवानवरतं जायमाना सोमाहुतिः **"आहुत्याप्यायते सूर्यः"**[६९] इत्यादिना मन्वादिभिः स्मृतिषु संकेतिताः।

ब्राह्मणाद्या अप्यग्नौ यद् घृतादि जुह्वति, तदन्तर्गतोऽपि सोमः सूर्यमण्डलं गच्छतीति तद्रीत्या व्याख्यानमपि युज्यते, परमत्यल्पः स न सूर्यमण्डलक्षतिं पूरयितुमीष्ट इति प्राकृतेन यज्ञेनैव सा क्षतिः पूर्यते। यथा प्रदीपे ज्योतीरूपतामापद्य क्षीयमाणं तैलं पुनरस्माभिस्तत्र निषिच्यते, यथा वा विद्युत् प्रकाशे प्रतिक्षणं क्षीयमाणा शक्तिर्विद्युत्कोषगृहादागत्य तां क्षतिं प्रपूरयति; तथैव सूर्येऽपि प्रतिक्षणमौष्ण्यप्रकाशोद्वमनाज्जायमाना क्षतिरनवरत-मागच्छता तेन सोमेनैव प्रपूर्यते। सूर्याच्चाभितो दिक्षु प्रचारित औष्ण्यप्रकाश-मूलभूतोऽग्निः सूर्यमण्डलशक्तेरभिव्याप्तितो बहिर्गतः पुनः सोमरूपतामापद्यत इति चक्रं वैदिकेन विज्ञानेन साध्यते। अनेनैव च चक्रेण जगति सर्वेषां पदार्थानामुत्पत्तिः स्थितिश्चेति यज्ञस्यैव सर्वोत्पादकत्वं सर्वस्थितिकरत्वञ्च श्रुतिस्मृतिषु सर्वत्र विव्रियते।

लोकेऽपि प्रातिस्विकपदार्थोत्पत्तिं स्थितिं चाग्नौ सोमाहुतिरूपेण यज्ञेनैव पश्यामः। तथा हि– ओषधिलतावृक्षाद्येव पूर्वं परीक्ष्यताम्, पृथिव्यां ह्यग्निर्व्याप्य तिष्ठतीति **"यथाग्निगर्भा पृथिवी, यथा द्यौरिन्द्रेण गर्भिणी"**[७०] इत्यादि श्रुतिषु "अग्निः पृथिवीस्थानः" इत्यादौ निरुक्ते च विवृतम्। सोऽयमग्निः पार्थिवेन घनभागेनावृतस्तिष्ठतीति तस्याग्नेरावरणमपनीय प्रकटनाय

६९. वैदिके विज्ञाने–४२ पृष्ठे
७०. बृहदा.–८/४/२३

कर्षकैर्भूमिर्हलेन कृष्यते। आवरणमपनीयाभ्यन्तरस्थस्याग्नेः प्रकटीकरणायैव कर्षणं प्रवर्त्तते, प्रकटिते चाग्नौ बीजरूपो जलरूपश्च सोम आहूयते। आहुतिं प्राप्य चाग्निर्बीजस्थितमावरणमपनीय स्वसंयोगेन बीजमङ्कुररूपतां गमयतीत्यङ्कुरोत्पत्तिरूपः प्रथमो यज्ञः। इदानीं सौरोऽग्निस्तमङ्कुरं स्वाभिमुख-माकर्षतीत्यङ्कुरः प्रवर्द्धते। पार्थिवः सोऽङ्कुरः पृथिव्या आकर्षणेन पृथिवीमपि न त्यजतीति स्वस्थानावस्थितस्यैव तस्योपरि गमनं भवति, सेयमेव वृद्धिरित्युच्यते। यावच्च जलं तत्र दीयते, तावत्येव तस्याधिकाधिका वृद्धिर्भवति। जलस्थितस्य सोमस्यैव सौराग्नेरन्नरूपत्वात् "सोमोऽन्नम्, अग्निरन्नादः" इति पूर्वमवोचम्। तदेषोऽग्निना वृक्षादिवृद्धिप्रकारः श्रुतावाम्नातः-

**"प्रमातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।**
**ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः॥"[७१]**

मातुः=पृथिव्याः, उर्वीः वीरुधः=विस्तृतासु लताद्यासु, गुह्यं प्रतरं= गुह्यमुत्कृष्टतमं केन्द्रस्थानम्, अग्निः इच्छन् कुमार इव प्रसर्पति। स च पक्वं शुष्कं वृक्षमपि अभिव्याप्नोति, रिरिह्वांसं=रसं गृह्णानमपि अभिव्याप्नोति। अग्निनैव हेतुना रसग्रहणादिकं सर्वं सम्पद्यते। अत एवाग्निर्यज्ञस्य देव उच्यते-

**"अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम्।"[७२]**

ऐतरेयब्राह्मणेऽप्युक्तम्-

**"अग्निर्वै शर्माण्यन्नादीनि प्रयच्छति।"[७३]**

अन्येष्वपि मन्त्रेष्वोषध्यादिकेन्द्रेऽग्निस्थितिः स्पष्टमाम्नाता-

**"गर्भोऽस्यौषधीनां गर्भो वनस्पतीनाम्।**
**गर्भो विश्वस्य भूतस्याग्ने गर्भोऽपामसि॥"[७४]**

---

७१. ऋ.-१०/७९/३
७२. ऋ.-१/१/१
७३. ऐ.ब्रा.-२/५/९
७४. यजु.सं.-१२/३७

ऋक्संहितायामपि चैतद् विस्तृतम्–

**"गर्भो यो अपां गर्भो वनानां**
**गर्भश्च स्थातां गर्भश्चरथाम्।**
**अद्रौ चिदस्मा अन्तर्दुरोणे विशां**
**न विश्वो अमृतः स्वाधीः॥"**[७५]

अनयाऽग्निव्याप्त्याऽग्निसाध्यो यज्ञः सर्वत्रैव प्रवर्तत इति संकेतितम्। पृथिवीयं कृष्णेत्युच्यते, सौरोऽग्निश्च हिरण्यवर्णः। तदुक्तम्–

**"पिशङ्गं द्रापिं प्रति मुञ्चते कविः।"**[७६] **इति।**

पीतकृष्णोभयसंयोगादङ्कुरे हरितो वर्ण एव सर्वदा जायते। यदा तु यमेन विच्छेदात् पृथिव्या रसग्रहणं न जायते, अर्थादग्नौ सोमाहुतिः प्रतिरुद्ध्यते, तदा शुष्के वृक्षे पर्णादिकं सर्वं पीतवर्णतामेवापद्यत इति स्पष्टं दृश्यते। वृक्षादिषु च शाखा-प्रशाखापर्णपुष्पादिकं सर्वं सौराग्नेः पार्थिवाग्नेश्च सोमाहुतिसम्पर्काद् यज्ञाज्जायत इति भाव्यम्। तदिदं यज्ञस्योत्पादकत्वं पालकत्वं च प्रत्यक्षं निरीक्ष्यते। प्राणिनामुत्पत्तावपि स्त्रिया गर्भाशयगतेऽग्नौ रेतो रूपः सोम आहूयत इति तत एव शारीरविदो व्याचक्षते। तद्यथा–

अस्माकं शरीरमपि च प्राणाग्निहोत्ररूपेण यज्ञेनैव परिपालितं तिष्ठति–

**"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः।**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥"**[७७]

इत्युक्तो वैश्वानरोऽग्निः सर्वेषां जठरे स्थितः। तत्र हूयमानश्चान्न-पानादिगतः सोमोऽनवरतं रसासृङ्मांसादिरूपमापद्य देहं रक्षतीति सर्वेषां नः प्रत्यक्षसिद्धम्। भुक्तमन्नादि वैश्वानरेण वह्निना रसरूपतां नीयते, असृक् च मांसरूपेण, मांसं मेदोरूपेण, मेदोऽस्थिरूपेण, अस्थिमज्जारूपेण, मज्जा च शुक्ररूपेण परिणमतीति सप्तधातून् आयुर्वेदविद आचक्षते। शुक्रं सन्तत्युत्पादने शारीरबलप्रयोगे च कारणतां गच्छति, रक्षितं त्वोजोरूपेण, ओजश्च मनोरूपेण

---

७५. ऋ.सं.–१/७०/२
७६. ऋ.सं.–४/५३/२
७७. गीता–१५/४

परिणमतीति **"अन्नमयं हि सौम्य मनः"**[७८] इत्यादि छान्दोग्यश्रुतौ विवृतम्। मनश्च सोमरूपं सोमसमष्टिरूपे चन्द्रमण्डलेऽनवरतं गच्छति। ततश्च पुनरोषध्यादिषु सोमः संक्राम्यतीत्येतदेव चक्रम्। एवमनवरतं नवनवोत्पत्तिः पुरातनानां जीर्णानां रूपान्तरतापत्तिश्चेति चक्रं सर्वेषु पदार्थेष्वनुस्यूतं भाव्यमिति स एव प्राकृतो यज्ञः।

प्रकृतियज्ञे अग्निवाय्वादित्या अधिष्ठातारः। देवाश्च प्राणरूपा एव सूक्ष्मतमाश्च। तत्सम्पन्नो यज्ञोऽपि सूक्ष्मतम एव। भौमस्वर्गवासिभिरियं यज्ञविद्या-प्रवर्त्तिता, प्राक्तनैर्ऋषिभिरियं प्राप्ता। एषां यज्ञानामाचरणेनैव ते ऋषयोऽपि ब्रह्मतत्त्वं प्राप्तवन्तः। तदित्थं मूलभूतं प्राकृतं यज्ञमेवावलम्ब्य कृत्रिमा यज्ञा वेदेषु विहिताः। तस्मादेतेषु कृत्रिमयज्ञेष्वपि यजनीयाः देवाः प्राकृताः, यजनीयानि द्रव्याणि प्राकृतानि, यजनस्थलं प्रकृतेरुत्सङ्गे (ग्राम-नगरेभ्यो बहिरुटात्), प्राकृतिकैरवयवैरेव क्रियाः सम्पाद्यन्त इति।

## ३. वैदिककवीनां दार्शनिकं जीवनम्

पाणिनीयव्याकरणस्य 'दृश्' धातोः 'ल्युट्' प्रत्यये कृते सति 'दर्शनम्' इति शब्दो निष्पद्यते। अस्य शब्दस्य व्युत्पत्तिलभ्योऽर्थोऽस्ति 'दृश्यतेऽनेनेति दर्शनम्'। अर्थाद्येन दृश्यते तद्दर्शनमिति। येन परमलक्ष्यस्य तत्त्वस्य वा ज्ञानं भवेत्तद् दर्शनमित्युच्यते। कस्य दर्शनम्? आत्मनो दर्शनम् परमात्मनो दर्शनञ्च। अत्र **"ज्ञातात् अज्ञातं प्रति"** इति शिक्षासिद्धान्तानुसारं प्रथममात्मदर्शनम्, आत्मदर्शनानन्तरं परमात्मतत्त्वस्य दर्शनं सम्भवति। तत्र आत्म-तत्त्वमेव दर्शन-मनन-चिन्तनस्य च विषयः महर्षिभिः प्रोक्तः।[७९] भगवता मनुनापि प्रोक्तम्-

> **"सम्यग् दर्शनसम्पन्नः कर्मभिर्न निबद्ध्यते।**
> **दर्शनेन विहीनस्तु संसारं प्रतिपद्यते।।"**[८०]

---

७८. छान्दोग्योपनिषदि-६/५/४

७९. आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः (बृहदारण्यकोपनिषदि) ४/५/६

८०. मनु.-६/७४

अर्थात् तत्त्वतो ब्रह्मसाक्षात्कारवान् कर्मभिर्न निबद्ध्यते कर्माणि तस्य पुनर्जन्मनि न प्रभवन्ति, पूर्वार्जितपापपुण्यस्य ब्रह्मज्ञानेन नाशात्। तथा च श्रुतिः–

**"तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य स वै पाप्मानः प्रदूयन्त उभौ ब्रह्मैवैष भवति"**[८१] इति श्रुत्या, तथा–

**"क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे।"**[८२]

इत्यविशेषश्रुत्या पुण्यसम्बन्धोऽपि बोध्यते, उत्तरकाले च दैवात् पापे कर्मणि प्रवृत्तेऽपि न पापसंश्लेषः। तथा च श्रुतिः– **"पुष्करपलाशं आपो न श्लिष्यन्तं एवमेवंविदि पापं कर्म न श्लिष्यते"**[८३] इति। देहारम्भकपाप- पुण्यसम्बन्धः परं नश्यति। अयमेव चार्थोः ब्रह्ममीमांसायाम्– **"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्"**[८४] इति सूत्रेण भगवता बादरायणेन निरणायि। ब्रह्मसाक्षात्कारशून्यस्तु जन्ममरणबन्धं लभते।

निषिद्धहिंसावर्जनेनेन्द्रियाणां च विषयसङ्गपरिहारेण वैदिकैर्नित्यैः कर्मभिः, काम्यकर्मणां बन्धहेतुत्वात्। उक्तञ्च– **"कामात्मता न प्रशस्ता"**[८५] इति। तपसश्च यथासम्भवमुपवासकृच्छ्रचान्द्रायणादेरनुष्ठानैरिह लोके तत्पदं ब्रह्मात्यन्तिकलयलक्षणं प्राप्नुवन्ति। पूर्वश्लोकेन ब्रह्मदर्शनस्य मोक्षहेतुत्वमुक्तम्; अनेन सहकारितया कर्मणोऽभिहितम्।

भारतवर्षे (भारतीयदर्शनस्य) दर्शनस्य परम्पराद्वयमासीत् आस्तिकदर्शनपरम्परा, नास्तिकदर्शनपरम्परा च। तत्र भगवान् मनुः–

**"नास्तिको वेद निन्दकः"**[८६] अर्थात् यो वेदेषु श्रद्धां न दधाति उतवा वेदोपदेशं निन्दति स नास्तिकः इत्युच्यते। वेदेषु ऋग्वेद एवाद्यः अतोऽत्र एवं वक्तुं शक्यते यत् दर्शनशास्त्रस्य परम्परा, तस्य उद्भवः

---

८१. तत्रैव-भाष्ये (कुल्लूकभट्टः)

८२. तत्रैव-भाष्ये (कुल्लूकभट्टः)

८३. तत्रैव-भाष्ये

८४. ब्रह्ममीमांसायाम्-४/१/१३

८५. मनु.-६/७५

८६. मनु.-२/११

विकासश्च सोपानरूपेण ऋग्वेदादेव प्रारभति।

ऋग्वेदे बहवो मनीषिणः बहुदेववादस्य विचारधारां स्वीकुर्वन्ति; किन्तु अस्मन्मते ऋग्वेदे देवतानामनेकनामानि वर्णनानि च दृष्ट्वा बहुदेव-वादस्य कल्पना नोचिता। वस्तुतः आधुनिकाः विचारकाः बहुदेववादशब्दस्य दर्शनं चरम-तत्त्वेन योजयित्वा कुर्वन्ति, तथा चैवं व्याख्यानं कुर्वन्ति यद् ऋग्वैदिकाः जनाः अनेकेषां देवतानां सत्तासु विश्वसन्ति स्म। परं नैतद्युक्तम् यतो हि ऋग्वैदिकजनास्तु परमात्मतत्त्वे एव केवलमनन्तशक्तेः सत्तां स्वीकुर्वन्ति स्म। तेषां मान्यता आसीद्यद् परमतत्त्वम् एकमेव सद्रूपमस्ति। यथा–

**"इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।**
**एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः॥"**[८७]

यदा ऋग्वेदे अग्नेः पार्थिवस्य, अन्तरिक्षस्थस्य, द्युलोकस्थस्य च स्वरूपस्य वर्णनं भवति तदा त्रिष्वपि अग्निषु तात्त्विकी भेदभावना न भवति। ऋग्वेदानुसारं एकमेव तत्त्वं यत्खलु सम्पूर्णं विश्वमभिव्याप्य ततः पृथक् बहुविधं विस्तृतं स्वरूपं धृतवदस्ति। तत् तत्त्वं निःसीम-परिकल्पनादपि अधिकमस्ति। यथा हि पुरुषसूक्ते– **"पुरुष एवेदं सर्वम्"**[८८], **"ततो व्विराडजायत व्विराजो अधिपूरुषः।"**[८९]

अर्थात् सोऽनन्तोऽपि तत एवोत्पद्यते यस्य नाम 'अदिति' रित्यस्ति। अदितेः सकाशादेव प्रकृतेः प्रत्येकनियमानां नियामकः चैतन्यः पुरुष उत्पद्यते। "अदितेर्भवाः आदित्याः" ते एव देवाः। इमे सर्वे देवाः परमात्मतत्त्वतः सम्यक्तया युक्ताः सन्ति किन्तु शक्तेः सीमामर्यादया पृथक्-पृथक् नामभिर्ज्ञायन्ते।

**"को ददर्श प्रथमं जायमान-**
**मस्थन्वन्तं यदनस्था बिभर्ति।**

---

८७. ऋ.-१/१६४/४६
८८. ऋ.-१०/९०/२
८९. ऋ.-१०/९०/५
९०. ऋ.-१/८९/१०

**भूम्या असुरसृगात्मा क्व स्वित्**
**को विद्वांसमुपगात् प्रष्टुमेतत्॥"**[९१]

मन्त्रेऽस्मिन् जिज्ञासा क्रियते यत् तं प्रथमं जायमानं पुरुषं को दृष्टवान्? यः पुरुषः अस्थिरहितः सन् अस्थियुक्तं जीवमुत्पादितवान्? अस्याः भूमेर्जीवनं, रक्तम्, आत्मा च क्वास्ति? तं सर्ववेदान्तवेद्यं उपगत्य एष प्रश्नः केनापि कृतः? एषां समेषां प्रश्नानां उत्तराण्यपि तत्रैवोक्तानि–

**"इन्द्रं मित्रं वरुणमग्निमाहुः"** इति।[९२] अर्थात् एक एव 'सत्' आसीत् यः एकः सन्नपि बहुभिर्नामभिर्गीयते स्म। एकस्यान्तिमस्य सत्यस्य विचारधारा 'ऋत' सम्बन्धिविचारधारायाः विकासो मन्यते। यास्केन 'ऋ-गतौ' धातोः निष्पन्नस्य ऋतशब्दस्यार्थः जलमित्युक्तम्।[९३] तेन ऋत-शब्दस्यार्थः 'सत्यम्', 'यज्ञश्च' स्वीकृतम्।[९४] परम्परागताः व्याख्याकाराश्चापि ऋतशब्दार्थं सत्यम्, जलम्, यज्ञश्च स्वीकुर्वन्ति।

आधुनिकभारतीयभाष्यकारेषु अरविन्दस्य नाम महद्गौरवेण गृह्यते। तेषां महोदयानां मतानुसारं ऋतशब्दस्यार्थः 'सत्यम्' इत्येवास्ति। पाश्चात्यविद्वत्सु रोठमहोदयस्तु ऋतम् इत्येतत् पदस्यार्थः 'नियमः' इति स्वीकरोति, अस्य मतस्यानुसरणं मैक्डोनल, मोक्षमूलर, ग्रासमान, वर्गेन्य आदयोऽपि कुर्वन्ति तेषां मतानुसारं ऋतशब्दः व्यवस्थाया अभिधायकोस्ति। बी.एस.घाटे महोदयः ऋतशब्दं शाश्वतनियमत्वेन दैवीनियमत्वेन, नैतिक-नियमत्वेन वा स्वीकरोति। अन्ये च पी.वी. काणे, प्रो. राधाकृष्णन्, डी.पी. जोशी, विष्णुहरिवेडर, एच.डी. वेलणकर आदयो दर्शनशास्त्रमर्मज्ञाः ऋतशब्दस्यार्थं-'शाश्वतनैतिक-व्यवस्थाम्' एव स्वीकुर्वन्ति। यद्यपि ऋग्वेदे 'ऋत'शब्दस्यानेकेष्वर्थेषु प्रयोगो दृश्यते। ऋतजा,[९५] ऋतजात[९६], ऋतप्रजात[९७], ऋतजातसत्या[९८] इत्यादीनि

---

९१. ऋ.-१/१६४/४
९२. ऋ.-१/१६४/४६
९३. निघ.-१/१२/६८,७०
९४. सत्यं वा यज्ञं वा/नि०-५/१९
९५. ऋ.-३/५८/८; ४/४०/५
९६. ऋ.-१/४४/७; १८९/६; ३/२०/२ आदि।
९७. ऋ.-१/६५/५; २/२३/१५
९८. ऋ.- ४/५१/७

विशेषणानि ऋतशब्दस्य ऋग्वेदे प्राप्यन्ते। एभिः विशेषणैः प्रतीयते यत् सर्वे देवाः 'ऋत' एतस्मात्तत्वादुत्पन्नाः। एकत्र तु सृष्ट्यादौ ब्रह्मणः तपः प्रभावात् 'ऋतं सत्यञ्च' समुत्पन्नमभवत्, तेन च रात्रिः समुद्रादयः क्रमशः उत्पन्ना अभवन् इत्यपि वर्णितमस्ति। यथा–

**"ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत।**
**ततो रात्र्यजायत ततः समुद्रो अर्णवः॥"**[९९]

एवं सृष्टेः मूलकारकरूपेण (ऋतम्) प्रकृतिं बोधयति। अन्तरिक्षं द्युलोकः पृथिवी च ऋतस्य विस्तारो मन्यते।[१००] शाश्वतनियमरूपेण ऋतम् समस्तानामपि प्राकृतिकशक्तीनां नियामकमस्ति। ऋतेन सूर्यो अस्तंगच्छति,[१०१] ऋतेनैव च सूर्यो द्युलोके विभाति।[१०२] देवतानां विशेषणरूपेणापि ऋतशब्दस्यानेकप्रयोगो दृश्यते; क्वचिद् ऋतावा,[१०३] ऋतावान्[१०४], ऋतया[१०५], ऋतज्ञा[१०६], ऋतस्यगोपा[१०७], ऋतधीतयश्च[१०८]। अतः ऋतं तादृशः शाश्वत-प्राकृतिको नियमो वर्तते यस्य पालनं, रक्षणं, धारणञ्च देवतानां कर्त्तव्यम्। मित्रावरुणावपि ऋतसाहाय्येनैव लोकेषु प्रशासनं कुरुतः।[१०९]

उक्त-विवरणेनेदं स्पष्टं भवति यत् वैदिकाः दार्शनिकाः स्वदर्शन-स्याधाररूपेण, प्रकृतेः शाश्वतप्रशासनरूपेण च ऋतं स्वीकुर्वन्ति। इमं न केनाप्यचेतनेन प्रवर्त्तितं सांयौगिकं वा मन्यन्ते, यतः ऋतस्य प्रत्येक-नियमेषु निश्चितः तर्कः कारणञ्च निहितं भवति। ऋतं सृष्टेः मूलम्, सृष्टेः समस्तेषु अणुषु व्याप्तञ्चास्ति।

९९. ऋ.–१०/१९०/१
१००. ऋतस्य हि प्रसितिर्द्यौ–ऋ.–१०/९२/४
१०१. ऋतेन देव सविता शमायत–ऋ.–८/८६/५
१०२. य ऋतेन सूर्यमारोहयन् दिव्य प्रथयन् पृथिवीं मातरं वि.–ऋ.–१०/६२/३
१०३. ऋ.–१/७७/२; ५; ३/५४/१२; ४/६/५; ५/२५/१; ८/७५/३
१०४ ऋ.–७/६६/१३; ८/२५/७
१०५. ऋ.–१/११३/१२
१०६. ऋ.–५/४३/६
१०७. ऋ.–१/१/८; ५/६३/१; ६/५१/३; ७/६२/२
१०८. ऋ.–५/५१/२
१०९. ऋ.–५/६३/७

**सृष्टिमीमांसा–**

ऋग्वेदानुसारं **'असतः सदजायत'**[११०] असतः सत् प्रवृत्तिरिति। यद्यपि असत् शब्दः अत्यन्ताभावस्य द्योतकः, परमत्रात्यन्ताभावोऽर्थो न ग्रहणीयः। अपितु 'असत्' इति कथनेन कवेर्दार्शनिकविचारस्य चरमसीमा द्योतते। एतत् असत् एव सृष्टेर्मूलम्। वस्तुतः ऋग्वेदस्य नासदीयसूक्तानुसारं तु सृष्ट्यादौ– **"नासदासीन्नो सदासीत्तदानीम्"**[१११] न सत् आसीत् न चासत् एवासीत्। यत्किमपि वाऽऽसीत् अनिर्वचनीयं शून्यमेवासीत्। तथापि प्रश्नोत्तराभ्यां किञ्चित्तावद्विचार्यते–

> **"किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः।**
> **संतस्थाने अजरे इत ऊती अहानि पूर्वीरुषसो जरन्त।।"**[११२]

अस्यामृचि प्रश्नोऽस्ति यत् तद्वनं किमासीत्? स वृक्षः कः आसीत्? यतो द्यावापृथिवी समुद्भूतौ? इति। अस्य प्रश्नस्य सम्यगुत्तरन्तु तैत्तिरीयब्राह्मणे इत्थं मिलति–

> **"ब्रह्मवनं स ब्रह्म स वृक्ष आस**
> **यतो द्यावापृथिवी निष्टतक्षुः।**
> **मनीषिणो मनसा विब्रवीमि वो**
> **ब्रह्माधितिष्ठत् भुवनानि धारयन्।।"**[११३]

तद् वनं ब्रह्मवननाम्ना ज्ञायते ब्रह्म एव स वृक्षः यतो द्यावापृथिवी उत्पन्नावभवताम्। स एव ब्रह्म पुरुषसूक्ते पुरुष-शब्देन, हिरण्यगर्भसूक्ते च हिरण्यगर्भशब्देन दार्शनिकैः कविभिरुक्तः। सृष्टिवादिदार्शनिकविचारधारासु हिरण्यगर्भसूक्तस्य विशिष्टं स्थानमस्ति। पूर्वोक्तमन्त्रे बहुदेवतावादस्य विचारः पल्लवितो दृश्यते, परं तत्रैव **"एकं सद्विप्रा बहुधा वदन्ति"** इत्युक्त्वा विविधदेवतानां सत्ता एकस्मिन् एव ब्रह्मणि समाहिता इत्युक्तम्। तत् एव

---

११०. ऋ.–१०/७२/२
१११. ऋ.–१०/१२९/१
११२. ऋ.–१०/३१/७
११३. तै.ब्रा.–उल्लेखः वेदधर्म्मव्याख्यानम् १९ तमे पृष्ठे

एकमन्तिमं सत्यम्, अत्र हिरण्यगर्भसूक्ते 'कः' नामकः प्रजापतिरुक्तः। यथा–

**"हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥"**[११४]

अस्यैव 'क'नामक-सत्यप्रजापतेः पुरुष-सूक्ते पुरुषरूपेण प्रतिष्ठाऽस्ति। इदमेव 'ब्रह्म' समस्तसृष्टेः प्रक्रियायाः नियामकमस्ति। अत्र विराट्पुरुषशरीरात् जगदुत्पत्तेर्विवरणं प्रस्तुतमस्ति। अनेन पुरुषेण देवाः यज्ञं कृतवन्तः। तस्य शिरसः सकाशात् द्युलोकः, नाभेः सकाशादन्तरिक्षं, पद्भ्यां भूमिर्दिशश्च श्रोत्रात्, इत्थं लोकाः कल्पिताः।[११५] तस्य पुरुषस्य मनसः सकाशात् चन्द्रमा, चक्षोश्च सूर्यः, मुखात् इन्द्रश्च वायुश्च, मुखादग्निः उत्पन्नोऽभवत्।[११६] चत्वारो वर्णाः ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः, ऋग्यजुस्सामादयो वेदाः, गायत्र्यादीनि सप्तच्छन्दांसि, वायौ विचरणशीलाः जीवाः, आरण्याः, ग्राम्याश्च पशव ऊर्ध्वाधोभागयोः दन्तयुक्ताः, भोजनादिव्यवहारोपेताः तद्रहिताश्च जीवाः तेनैव सृष्टाः। एषः त्रिषु कालेषु सदा विद्यमानः सर्वब्रह्माण्डनायकः, यज्ञमयश्चास्ति। अत एव यज्ञमयात् पुरुषादुत्पन्नेयं सृष्टिरपि यज्ञस्य परिणामः यज्ञ एवोक्ता। अनयोः हिरण्यगर्भपुरुषसूक्त- योरनुशीलनेन ज्ञातो भवति यत् नासदीयसूक्ते यदुक्तं 'नासदासीन्नो सदासीत्तदानीम्' तत्र वैदिककविः एतदेव वक्तुमिच्छति यत् सद्=व्याप्तिः, असद्=अभावः, अर्थात् तदा न व्याप्तिरासीत्, न च व्याप्तेरभावः। परं तस्मात् सत्यपुरुषात् अस्याः सृष्टेर्निर्माणमभवदिति। अस्य प्रमाणमपि तत्रैवोपलभ्यते–

**"इयं विसृष्टिर्यत आ बभूव<br>यदि वा दधे यदि वा न।<br>यो अस्याध्यक्षः परमे व्योमन्<br>त्सो अङ्ग वेद यदि वा न वेद॥"**[११७]

अर्थात् इमां सृष्टिरचनां न कोऽपि जानाति, देवा अपि न जानन्ति,

---

११४. ऋ.-१०/१२१/१

११५. ऋ.-१०/९०/१४

११६. ऋ.-१०/९०/१३

११७. ऋ.-१०/१२९/७

ते सृष्टेः पश्चाद् बभूवुः। यदि कोऽपि जानाति तर्हि स एकः सृष्टेरध्यक्ष ईश्वर एव। अस्य सूक्तस्य द्रष्टा ऋषिः परमेष्ठी प्रजापतिरस्ति, स सर्वाधिकप्राचीनः सूक्तकारः। सृष्टि-रहस्यस्य प्रकाशिकाऽस्मात्सूक्तादधिक-गम्भीरा काव्यकृतिर्विश्वस्मिन् अद्यावधि न रचिता।

इत्थमन्येऽपि सूक्तकारा ऋषयः अङ्गिरा, अत्रिः, भृगुः, वसिष्ठः, नारदः, मनुः, कश्यपः, बृहस्पतिः, इन्द्रः, कण्वः, वामदेवः, गोतमः, गृत्समदः, भरद्वाजः, दीर्घतमाः, अगस्त्यः, विश्वामित्रश्च प्रमुखाः सन्ति। इमे सर्वेऽपि ऋषयः मन्त्रद्रष्टारः कथ्यन्ते।

दर्शनं मानसिकं भवति। अर्थात् कस्यचिदृषेः मानसोद्गारो मन्त्रदर्शनमस्ति। अतः स ऋषिर्मन्त्रद्रष्टा कथ्यते। निरुक्तकृता भगवता यास्केन दर्शनाद् ऋषिः सङ्केतितः। ऋषन्ति अवगच्छन्ति इति ऋषयः। इत्यनेन ज्ञायते यो ज्ञान-सम्पन्नो भवति, स एव ऋषिः इत्युच्यते। एषां द्रष्टृत्वगुणसम्पन्नानां ऋषीणां प्रवचनानि दार्शनिकानि एव सन्ति। तेषां जीवने दर्शनं रक्तवदेवाजस्त्रधारया सदा प्रवहतिस्म। तैः प्रतिपादिताः सर्वे दार्शनिकविचाराः नात्र विवेचितुं शक्याः। अतः सृष्टिविषयकान् विचारान् प्रस्तूय एव अग्रिमं विषयम्प्रति गच्छामि। इति शम्।

## अथ सप्तमोऽध्यायः

# वैदिकऋषीणां काव्यात्मकं जीवनम्

प्राचीनासु भाषासु यथा संस्कृतं सर्वातिशायी वर्वर्ति तथैव सर्वेषु साहित्येषु वैदिकं साहित्यं प्रामाणिकरूपेण स्वीक्रियते सुधीभिः। सर्वत्र 'वेदाः प्रमाणम्' इति मतं समानतयाङ्गीक्रियते। सर्वेऽपि मतावलम्बिनः स्वं मतं वेदोक्तैः प्रमाणैः परिपुष्टतां गमयित्वा स्वां कृतिं धन्यां, स्वं च धन्यं कलयन्ति।

विश्वस्याद्यो ग्रन्थः, भारतीयधर्मस्य कमनीयकल्पद्रुमः, आर्यसंस्कृत्याः प्राणभूतोऽयं वेद इति। स चायं वस्तुतः एक एवास्ति, किञ्च स्वरूपभेदात् त्रिविधोऽस्ति–ऋग्वेदः, यजुर्वेदः, सामवेदश्चेति। **"वेदं तावदेकं सन्तमतिमहत्त्वाद्दुरध्येयमनेकशाखाभेदेन समाम्नाशिषुः। सुखग्रहणाय व्यासेन समाम्नातवन्तः।"**[1] सोऽयं वेदत्रयी'ति पदेन व्यवह्रियते, वेदरचनायास्त्रिप्रकारकत्वेन त्रयीति कथ्यते। या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या पुनः समग्रा गानमयी रचना सा सामेति कथ्यते। तदुक्तं भगवता जैमिनिना–

**"तेषामृग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्दः"** इति।[2] महर्षिर्यास्कस्तु–**"ता ऋचः परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्चेति भेदात् त्रिविधा। ऋक्शब्दोऽत्र मन्त्रवचनः। यासु प्रथमपुरुषक्रियास्ताः परोक्षकृताः यासु मध्यमपुरुषक्रियास्तास्तु प्रत्यक्षकृताः यासु चोत्तमपुरुषक्रियास्ता आध्यात्मिक्यः"**[3] इति।

---

१. दुर्गाचार्य निरुक्तविवृतिः १/२०

२. जै. सू.–२/१/३२, ३३, ३८ सूत्राणि

३. निरुक्ते दैवतकाण्डे

अतो यत्र कुत्रापि प्राचीनग्रन्थे वेदार्थे 'त्रयी'ति पदं प्रयुक्तं तत्र सर्वत्र रचना त्रैविध्यं मनसि निधाय बोध्यम्। यत्तु केचन ऋग्यजुस्सामाख्यास्त्रय एव वेदाः पूर्वमासन् इत्याहुः। तद्यथा छान्दोग्ये–

**"अग्नेर्ऋचो वायोर्यजूंषि सामादित्यात्"**[४] इति। मनुनापि प्रोक्तम्–

**"अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्।।"**[५]

अतो वेदानां त्रित्वादेव तत्र त्रयीति व्यवहारो वास्तवो न प्रकारभेदः कृतः। शतपथश्रुतावपि–

**"यदेतन्मण्डलं तपति तन्महदुक्थम्, ता ऋचः स ऋचां लोकः। अथ यदेतदर्चिर्दीप्यते, तन्महाव्रतम्, तानि सामानि, स साम्नां लोकः। अथ य एष एतस्मिन्मण्डले पुरुषः सोऽग्निः तानि यजूंषि स यजुषां लोकः। सैषा त्रय्येव विद्या तपति।"**[६]

ऋग्वेदस्य पुरुषसूक्तेऽपि वेदोत्पत्तिसम्बन्धे संकेतो लभ्यते–

**"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।**
**छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत।।"**[७]

अत्रापि वेदानां त्रैविध्यमेव व्याख्यातम्। तत्र मैत्रायण्याम्–

**"द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत्।**
**शाब्दे ब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति।।"**[८]

अनेन प्रमाणेन ब्रह्मणः स्वरूपद्वयं स्फुटं भवति, परब्रह्म-शब्दब्रह्मरूपम्। तत्र ऋगादयो वेदाः शब्दात्मकत्वात् परब्रह्मणः मूलस्वरूपोपवर्णकाः सन्ति, तथापि शब्दब्रह्मपदेनोच्यन्ते। अर्थात् 'ब्रह्म, विद्या, वेद' इति त्रयाणां शब्दानां प्रयोगो भवति। अस्यैवार्थस्य सम्पुष्टौ

---

४. छा.ब्रा.–६/१७
५. मनु.–१/१३
६. श.प.ब्रा.–१०/५/२/१–२
७. ऋ.सं.–१०.९०.९
८. मैत्रायण्याम्–६/१२

तैत्तिरीयब्राह्मणस्यापीयमुक्तिः द्रष्टव्या–

> **"ऋग्भ्यो जातां सर्वशो मूर्तिमाहुः**
> **सर्वा गतिर्याजुषी हैव शश्वत्।**
> **सर्वं तेजः सामरूपं हि शश्वत्**
> **सर्वं हीदं ब्रह्मणा हैव सृष्टम्॥"**[९]

**"ऋचं वाचं प्रपद्ये मनो यजुः सामप्राणं प्रपद्ये"**[१०] अनेन वेदवाक्येन 'ऋक्' पदमपि 'वाक्' इत्येतत्पदेन व्यपदिश्यते। तेन हि **"वाचीमा विश्वा भुवनान्यर्पिताः"** एवं कथ्यते। ऋगात्मकया वाचा एव त्रिभुवनस्योत्पत्तिरभूत्। किञ्च छान्दोग्योपनिषदि सनत्कुमारं प्रति नारदस्येयमुक्तिरपि द्रष्टव्या–

> **"ऋग्वेदं भगवोऽध्येमि, यजुर्वेदं सामवेदमथर्वाणं चतुर्थम्।"**[११]

अनेन वचनेन वेदस्य चतुर्थत्वमपि सिद्ध्यति। भगवता पतञ्जलिनाऽपि–**"चत्वारो वेदाः साङ्गाः सरहस्याः"**[१२] इति पस्पशाह्निके स्पष्टमुक्तम्। यद्यप्यस्मिन्विषये प्रथमेऽध्याये बहूक्तम्। तथापि प्रसङ्गवशादत्र किञ्चिद्विमृश्यते। मन्त्राणां समूह एव 'संहिता' इत्येतेन पदेन व्यपदिश्यते। यज्ञानुष्ठानं दृष्टौ निधाय विभिन्नर्त्विजां कृते संहितानां सङ्कलनं वेदव्यासश्चकार। **"वेदान् विव्यास यस्मात् स वेदव्यास इति स्मृतः"** (महाभारतम्)। यज्ञेषु ब्रह्मोद्गातृहोत्रध्वर्यूनां चतुर्णामपि ऋत्विजां कार्यसम्पादनाय मन्त्रसंहितानां संकलनं चतुर्विधतया कृतम्। तस्मात् संहिताः सन्ति चतस्रः–ऋक्संहिता, यजुःसंहिता, सामसंहिता, अथर्वसंहिता च। अत एव वेदाश्चत्वारः स्मृताः। ऋच्यते स्तूयते यया सा ऋक्। तादृशीनामृचां समूह एव ऋग्वेदः। यत्रार्थवशेन पादव्यवस्था सा ऋगिति मीमांसकाः। चतुर्षु वेदेषु ऋग्वेदस्य गौरवं सर्वातिशायि अस्ति। ऋग्वेदो हि धार्मिकस्तोत्राणामेको महान् विशालो निधिः। तत्र बहुभिर्भिन्नभिन्नैः ऋषिभिः सुललितैः भावभव्यैः शब्दैर्विभिन्ना

---

९. तै.ब्रा.–३/१२/९/१
१०. यजु. ३६.१
११. छान्दोग्योपनिषदि–७/१/२
१२. महाभाष्ये पस्पशाह्निके–

देवताः सादरं स्तुताः सन्ति।

ऋग्वेदस्य पद्येषु तादृशं सौष्ठवं वैलक्षण्यञ्च प्राप्यते यत्तेन विदुषां मनांसि हठादाकृष्यन्ते। लौकिकेषु काव्येषु जातेष्वपि ऋग्वेदगता काव्यमाधुरी नापकृष्टतां गता, तत्पठतां मनांसि वैदिकं काव्यमेव प्रथमं मन्यते, ततोऽन्तरं लौकिकादि किञ्चिदन्यत्।

वेदमर्मज्ञानां समस्तानामपि विदुषां मान्यताऽस्ति यत् ऋषयो ऋगादिमन्त्राणां द्रष्टारः सन्ति। अलौकिकसामर्थ्यशालिन ऋषयो दिव्यया प्रतिभया मन्त्राणां दर्शनं लब्धवन्तः तेषां प्रकाशस्तद्धियि अवततार। 'ऋषि' इत्येतत्पदस्य व्युत्पत्तिलभ्यः 'ऋषति पश्यति इति ऋषिः' इत्यर्थ एव 'मन्त्रद्रष्टा' इत्यस्ति। एवं ऋषिशब्दः इगुपधात् किदित्येनेनौणादिकेन सूत्रेण इनि प्रत्यये कृते निष्पद्यते। निरुक्ते च विद्यमानाः–**"तद्येनांस्तपस्यमानान् ब्रह्मस्वयम्भ्वभ्यानर्षत्"**[१३] इत्यादिकाः पङ्क्तयः ऋषेर्मन्त्रद्रष्टृत्वमुपपादयन्ति। तथा च–

**"यज्ञेन वाचः पदवीयमायँस्तामन्वविन्दन् ऋषिषु प्रविष्टाम्।"**[१४]
अन्यच्च– **"अजातान् ह वै पृश्नीन् तपस्यमानान् ब्रह्मस्वयम्भुरभ्यानर्षत् तदृषयोऽभवन्"**[१५] इति। एवञ्च–

**"अनादि निधना नित्या वागुत्सृष्टा स्वयम्भुवा।"**

इति चैवमाद्याः स्मृतयश्चामुमेवार्थमवगर्भयन्ति। ईश्वरीयज्ञानानुसारेण स्वयमेव गुम्फिताः सर्वे शब्दाः ऋगादिभावैः परिणम्य महर्षीणां वेदरचनार्थमप्रयतमानानामप्याद्यानां बुद्धिं स्वयमेवारूढाः प्रादुरभूवन्निति महर्षयो लेभिरे इत्यस्यार्थः। अत एव मन्त्रं प्रयुयुक्षन्नैतरेयः–**"तदेतदृषिः पश्यन्नभ्यनूवाच"**[१६] इत्यसकृत् प्रतिपादयति। अत एव च ब्राह्मणान्तरेऽपि 'तदुक्तमृषिणा' इत्यसकृदुक्तं दृश्यते। न चात्र 'ऋषिर्वेदमन्त्रः', इति

---

१३. निरुक्ते–२/३/१२
१४. ऋ.–१०/७१/३
१५. तै.आ.–२/९
१६. ऐ.ब्रा. २/४/१

केषाञ्चिदुक्तिः श्रद्धेया;, **"ऋषिष्टुतो विप्रानुमदितः कविशस्तः"**[१७] इत्येतेषां मन्त्रघटकपदानां निर्वचनपरेण **"ऋषयो ह्येतमग्रेऽस्तुवन्, तस्मादाह ऋषिष्टुत इति एते वै विप्रा यदृषयः, एते ह्येतमन्वमदन् तस्मादाह विप्रानुमदित इति, एते वै कवयो यदृषयः एते ह्येतमशंसंस्तस्मादाह कविशस्त** इति"[१८] इति हविर्यज्ञकाण्डस्थेन तदुपोद्वलकतयेव च **"ये ब्राह्मणाः शुश्रुवांशोऽनूचानास्ते विप्राः"**[१९] इत्यध्वरकाण्डस्थेन शतपथ-ब्राह्मणेन, तथा मैत्रायण्यां यजुः संहितायां खिलकाण्डे पुरोडाशब्राह्मणे **"तया वहन्ते कवयः पुरस्तादिति ब्राह्मणाः कवया ऋषयः कवयः"** इत्येव मनूक्तत्वेन; तथा तैत्तिरीयसंहितायां षष्ठकाण्डे षष्ठप्रपाठके-**"एष वै ब्राह्मणऋषिरार्षेयो वः शुश्रुवान्"**[२०], इत्युक्तत्वेन **"ऋषयो मन्त्रद्रष्टारः"** इत्यादिना यास्कनिरुक्तवचनेन च मनुष्यविशेषाणां ब्राह्मणानामेव मन्त्रकृता-मृषित्वेन प्रतिपन्नत्वात्।

ते च ऋषयो द्वेधा प्रतिपाद्यन्ते केचिदतिप्राचीनाः साक्षात्कृतधर्माणः, परे त्वनतिप्राचीना असाक्षात्कृतधर्माणः। यथोक्तमृग्वेदे-

**"अग्निः पूर्वेभिर्ऋषिभिरीड्यो**
**नूतनैरुत स देवाँ एह वक्षति॥"**[२१]

तत्र तैः साक्षात्कृतधर्मभिरनेकानेकैर्महर्षिभिः साक्षात्कृता वेदमन्त्रा असाक्षात्कृतधर्मभ्यो विधेयेभ्यः काले काले उपदिष्टाः परम्परया पारायणादि-प्रचारेणावस्थिता आसन्, ततो बहुकालानन्तरं क्रमशः पूर्वापेक्षया शिथिलबुद्धिषु जनेषु गुरुमुखाच्छ्रुतिमात्रेण बहुविधसकलतत्तन्मन्त्रधारणायासमर्थेषु जातेषु तदनुग्रहार्थमन्त्रे ऋषयस्तेषां मन्त्राणां यथावद् ग्रहणार्थतान् विकीर्णान् मन्त्रान् संकल्य्य संहिताग्रन्थं सम्पादयाञ्चक्रुः।

ते अति प्राचीनाः ऋषयः मनोभिलषितभावाभिव्यक्तीकरणे परमपटव

---

१७. वेदधर्म्मव्याख्याने-उपोद्घाते-११ पृष्ठे
१८. तत्रैव
१९. श.प.ब्रा.-२/२/२/६
२०. तै.सं-६/६
२१. ऋ.-१/१/२

आसन्। यत्र तत्रान्तर्भावनामभिव्यक्तिहेतवेऽलङ्कारविधानेऽपि ते पराङ्मुखा नासन्। अलङ्कारविधानमेतत् साहित्यग्रन्थेषूपलभ्यन्ते। सहितयोः भावं साहित्यम्। वैदिकसाहित्ये संहिताब्राह्मणारण्यकोपनिषद्वेदाङ्गेतिहासपुराणादयश्च गृह्यन्ते। एषु विविधवैदिकसाहित्येषु विविधानि काव्यान्यप्युपलभ्यन्ते। काव्यं खलु साहित्यस्याङ्गम्। साहित्यस्य विभागाः– गद्य–पद्य–गीति–चम्पू–नाटक–प्रहसन–उपन्यासादय सन्ति।

पूर्वं यदुक्तं या खलु पद्यमयी रचना सा ऋगिति। अनेन वचनेन स्फुटमेव यत् ऋग्वेदः पद्यबद्धः। पद्यमयत्वात् छन्दोबद्धत्वाच्च ऋग्वेदस्य काव्यात्मकता सिद्ध्यत्येव। ऋषयः तमलौकिकं काव्यतत्त्वं दिव्यचक्षुषावलोक्य स्वशिष्येभ्य उपदिष्टवन्तः। तस्मादेव ते ऋषयः कवय इत्याख्यायन्ते।

'कवेर्यत्कर्म तत् काव्यम्' इत्युच्यते। सामान्यतया सुप्रसिद्धमेतत् कथनम्–**"अपारे काव्यसंसारे कविरेकः प्रजापति"**[२२] रिति। तस्य प्रजापतेः (आदिकवेः) पारलौकिकमिदं काव्यम्, यदिदानीम् ऋग्वेद नाम्नाऽभिगीयतेऽस्माभिः। अत एवमुच्यते–**"अस्य महतो भूतस्य निःश्वसितमेतद् ऋग्वेदो यजुर्वेदो सामवेदो ऽथर्वाङ्गिरसः"**[२३] इत्यादयः। तस्य प्रजापतेः निःश्वासभूतानां काव्यानां वसिष्ठादयो मेधाविनो स्वप्रतिभयोग्रतपस्यया च श्रवणं कृतवन्तः। यथोक्तं श्रुतौ **"लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा।"**[२४] इति।

प्रजापतेर्तत् काव्यं प्रथमं देवेषु विद्यमानमभवत्। देवाः प्रकृतौ विद्यमानेषु पदार्थेषु स्वमद्भुतमतिसौन्दर्यसम्पन्नं स्वरूपं धृत्वा ऋषिभिः प्राप्ताः। ते देवाः क्रमशः तान् काव्यात्मकान् तत्त्वान् ऋषिषु प्रविष्टवन्तः। यथाहि ऋग्वेदस्यैकस्मिन् मन्त्रे काव्यतत्त्वस्य प्रेरकं तत्त्वं सोमे विद्यमानमस्ति इत्युक्तम्। मन्त्रं यथा–

---

२२. अग्निपुराणे–३३९/१०

२३. बृहदा.उप. ११/४

२४. उल्लेखः वेदधर्मव्याख्याने–२५ पृष्ठे

**"साकं वदन्ति बहवो मनीषिण**
**इन्द्रस्य सोमं जठरे यदादुहुः।**
**यदी मृजन्ति सुगभस्तयो नरः**
**सनीडाभिर्दशभिः काम्यं मधु॥"**[२५]

अतः कवेर्गिरायाः संस्कारस्थलमपि सोम एवास्ति। एकत्र तु कवेः कर्म अस्मादेव स्थानात् सहस्रधारासु प्रचरतीत्युक्तमस्ति। यथा–

**"अंशुं दुहन्ति स्तनयन्तमक्षितं**
**कविं कवयोऽपसो मनीषिणः।"**[२६]

तथा च– **"सोमो हृदे पवते चारु मत्सरः"**[२७] इति। अत एवायं कविः ऋग्वैदिकभाषायां 'गृध्र' पदेनोक्तः।[२८] 'गृध्र' शब्दस्यार्थो भवति सौन्दर्यस्य लोभी। अतोऽमुं ब्रह्माण्डं विविधैरलङ्कारैरलङ्करणार्थं कविः स्वयं सोमरसं पीत्वा तृप्तो भूत्वा च सौम्यभावेन स्थितो भवति।

दशममण्डले तु **"ऋतस्य पदं कवयो निपान्ति"**[२९] इत्युक्त्या पदार्थानां यथार्थभूतं निरुपद्रवार्थतत्त्वस्य रक्षणं कवय एव कुर्वन्ति इत्युररीकृतम्। तत्रैव च मानवतायाः संरक्षणाय सप्तमर्यादाः अपि विनिर्मिताः कविभिरित्यपि निर्दिष्टम्। यथा– **"सप्त मर्यादाः कवयस्ततक्षुः"**[३०] इति। ते एव मानवतायाः ज्योतिनिर्माणं कुर्वन्ति। पदार्थेषु सुखभावनया दृष्ट्या ध्याननिष्ठाः कवयः स्वं तात्त्विककृषिकर्म सम्पादयन्ति।[३१] सृष्टेः मूलकारणं तथा च लक्ष्यं बहुश्रुतकवय एव केवलं जानन्ति।[३२] एकमेव वर्ण्यं विषयं कवयः विविधप्रकारैर्वर्णयन्ति।[३३] कवीनामसंख्यचक्षुः भवति इत्यस्यापि निर्देशः

२५. ऋ.– ९/७२/२
२६. ऋ.– ९/७२/६
२७. ऋ.– ९/७२/७
२८. ऋ.– ९/९७/५७
२९. ऋ.– १०/५/२
३०. ऋ.– १०/५/६
३१. ऋ.– १०/१०१/४
३२. ऋ.– १०/११४/२
३३. ऋ.– १०/११४/५

**"सहस्रणीथाः कवयो ये गोपायन्ति सूर्यम्"**[३४] इत्यस्मिन् मन्त्रे प्राप्यते। प्रथममण्डले तु–

> **"कतरा पूर्वा कतरापरायोः कथा**
> **जाते कवयः को वि वेद।**
> **विश्वं त्मना विभृतो यद्ध नाम**
> **वि वर्तेते अहनी चक्रियेव॥"**[३५]

अर्थात् यदा अस्य देदीप्यमानस्य द्युलोकस्य रहस्यमय्याः पृथिव्याश्च कौतूहलवर्धकं निर्माणप्रयोजनं कवयः सम्यक्तयाऽवगच्छन्ति तदा कविषु प्रवचनप्रवृत्तिरुद्भवतीति।

एभिरुदाहरणैरिदं विज्ञायते यदेकत्र कविः 'कवि' शब्दस्य सूक्ष्मया वाण्या पारिभाषिकैः शब्दैश्च स्वरूपमुपवर्णयति अन्यत्र च तादृशं वचनं प्रस्तौति यत्राद्भुतरचमत्कारो भवति। चमत्कार एव काव्यशास्त्रस्य जीवनमस्ति। केवलं सामान्यैः शब्दैः सामान्यघटनानां वर्णनानि त्वितिहाससम्बद्धानि भवितुमर्हन्ति परं कवि–सत्यं पृथग्रूपेणैव भवति। कविसत्येषु मानवमङ्गलस्य आनन्दस्य चाभिव्यक्तिरेव लक्ष्यं भवति। ऋग्वेदे विरला एव मन्त्राः सन्ति भविष्यन्ति वा यस्मिन् मन्त्रे काव्यसौष्ठवस्य गुणानि चामत्कारिकशब्दशोभाश्च न भविष्यन्तीति। किमितोऽधिकमुपमालङ्कारस्य नितान्तं भव्यं मनोरमं तथा हृदयावर्जकं रूपमस्माकं मन्त्रेष्वेव दृग्गोचरी भवति। तथ्यं त्विदमेवास्ति यदुपमायाः काव्यसंसारे पूर्वावतारस्तावदेव प्राचीनोऽस्ति यावत्कविताया आविर्भावः। आनन्देन सिक्तहृदयकवेर्वाणी उपमालङ्कारेण स्वात्मानं विभूषयितुं कोमलोल्लासस्य मधुमयानन्दस्य च बोधं करोति। प्रसङ्गानुकूलालङ्काराणां प्रयोगे ऋषिः स्वीयां सूक्ष्ममर्मज्ञतां प्रकाशयति। स तान् उपयुज्य प्रचुरतरपद–विभाव्यं वक्तव्यं परिमिततरपदेष्वेव प्रकटीकर्तुं सदवसरं सरलतयैव हस्तगतं करोति। वैदिक–साहित्ये व्यर्थमेवालङ्काराणां उपयोगो न दृश्यते। अतः सा स्फुटचन्द्रतारका विभावरीव विभाति। तत्र अनुप्रासच्छटा, उपमावैभवश्च अनायासेनैव च सामागतोऽस्ति। उत्प्रेक्षा दृष्टान्तार्थान्तरन्यासादिका अलङ्कारा

---

३४. ऋ.– १०/१५४/५
३५. ऋ.– १/१८५/१

वैदिकऋषेर्बहुश्रुतत्वं व्यापकदृष्टित्वं च ज्ञापयन्ति।

ऋग्वेदस्थोपमानां रसात्मकत्वाप्रसन्नरमणीयत्वमतितरामेव च मर्मस्पर्शित्वमवलोक्यते। औचित्ये सन्दर्भे च शोभाया: समुत्पादनस्य कला तासु नितान्तमभिनन्दनीयाऽस्ति। स्वानुभूतिषु तीव्रताऽऽनयनाय तथा तां सरलतया सहृदयहृदयपर्यन्तं सम्प्रेषणाय कवेर्वाणी येषामन्तरङ्गमधुमय-कोमलसाधनानामुपयोगं करोति, अलङ्कारस्तु तेषामेवान्यतमरूपमस्ति। वयमेवंविधस्य काव्ययुगस्य कल्पनामपि कर्तुं न शक्नुम:, यासु भावभङ्गीषु कोमलविलाससञ्चारहेतवे कस्यापि प्रकारकस्य साम्यविधानस्याश्रयो न भवति। अत एव वैदिकमन्त्रेषु अलङ्काराणां विशेषत: औपम्यगर्भालङ्काराणां विधानोपरि आलोचका: विस्मयान्त:करणा: भवन्ति।

ऋग्वैदिकसूक्तेषु नानादेवताभिर्यज्ञे समागमनाय, भौतिकसौख्य-सम्पादनाय, आध्यात्मिकान्तर्दृष्ट्युन्मेषणाय बहुविधेषु छन्द:सु प्रार्थना कृताऽस्ति। तासां रूपाणां भव्यं वर्णनं कवे: कलाया विलासमेवास्ति। **"हंसा इव श्रेणिशो यताया:"**[३६] **"हंस: शुचिषत् वसुरन्तरिक्षसद्"**[३७] "स न: पितेव सूनवे"[३८] इत्यादयो मन्त्रा: कवे: कलाया: साक्षादुदाहरणानि सन्ति। प्रार्थनाऽवसरे तेषां पवित्रभावानां कान्तभावनानाञ्च रुचिराऽभिव्यञ्जना चाप्यस्ति। व्यङ्ग्यार्थविलसितानि व्यञ्जकपदावलिपेशलानि च वाक्यानि विद्यन्ते। परमोच्चविचारबन्धुरोऽस्ति वैदिककवि:। न तस्मै जीवनस्य कलारहितत्वं रोचते। स जीवनं कलासु कुशलं द्रष्टुमना:। तद्विचारेण जीवनं तदेव यत्र कला: विलसन्ति। वेदेषु विराजमाना: कला: स्फुटतयैव बोधयन्तीदं यत् स कलाकलितमेव जीवनं सम्भावयति।

वेद-वेदाङ्गेषु क्वचिदुषाविषयकमन्त्रेषु सौन्दर्यभावनाया आधिक्यं परिस्फुरति तदा क्वचिदिन्द्रविषयकमन्त्रेषु तेजस्विताया: प्राचुर्यं परिलक्ष्यते। यद्यग्ने: रूपवर्णनप्रसङ्गे स्वभावोक्तेराश्रयो वर्तते तर्हि वरुणस्तुतौ हृद्गतकोमलभावानां माधुर्यस्याभिव्यक्तिरस्ति। **"उत त्व: पश्यन् न ददर्श**

---

३६. ऋ.- ३/८/९

३७. ऋ.- ४/४०/५

३८. ऋ.- १/१/९

**वाचम्"**[३९], **"जायेव पत्य उषती सुवासाः"**[४०] **"द्वा सुपर्णा सयुजा सखाया"**[४१] इत्यादिकानि सन्त्यनेकानि वाक्यानि, येषां भावान् न साहित्यशास्त्रानभिज्ञो ज्ञातुं प्रभवति, अथ च यो जनः साहित्यशास्त्रे निष्णातो नास्ति स व्यञ्जनाप्रतिपद्यमानान् वैदिकार्थानपि नावबोद्धुं शक्नोति।

अनेन प्रकारेण वैदिकमन्त्रेषु काव्यगतगुणानां पर्याप्तदर्शनं काव्यजगतः न काऽप्याकस्मिकी घटना वरीवर्ति। तन्मयताया अनन्यतायाश्चेदं विशद-परिचायकं चिह्नमस्ति, भावानां सहजा सरला चाभिव्यक्तिरस्ति। असन्दिग्धरूपेण वेदेषु एतेषां विशालं साम्राज्यमस्ति।

## ऋग्वेदेऽलङ्कारविधानम्

'अल भूषण-पर्याप्ति-वारण-निषेधेषु' इत्यस्माद्धातोः अलङ्करण-मित्यलङ्कारः इत्युक्तं कविभिः। पूर्वं कदाचित् काव्यशास्त्रमेवालंकार-शास्त्ररूपेण मन्यते स्म। एषा परम्परा रसवादिनामाचार्याणां समयात् पूर्वं प्रचलति स्म। 'अलङ्क्रियतेऽनेनेत्यलङ्कारः' इत्यनया व्युत्पत्त्या अलङ्कारस्य वर्गीकरणं कृतमस्ति। तत्र शब्दालङ्कारः, अर्थालङ्कारः, उभयालङ्कारश्च वर्गत्रयं वर्तते। तस्मात्कैश्चिदुक्तम्- **"काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते"** इति। यद्यपि ऋग्वैदिककाले अलङ्कारशास्त्रस्य पृथक्तया निर्माणं न जातमासीत्, तस्मात् एतेषां भेद-प्रभेदादिविषयेऽपि तदानीन्तनं चिन्तनं नोपलभ्यते। अर्थादाधुनिकालङ्कारशास्त्रदृष्ट्या ऋग्वेदेऽन्वेषणीयम्भवति यत् आधुनिके युगे विद्यमानालङ्कारानुगुणं तत्र मन्त्राः प्रयुक्ताः सन्ति न वेति।

तत्र शब्दश्चार्थश्च काव्यस्य शरीरम्। तत्र षट्सम्प्रदायेष्वाम्नाताः रस-ध्वन्यौचित्यादयः स्थितय आत्मरूपेण तिष्ठन्ति। उक्तं हि यथा- "वाक्यं रसात्मकं काव्यम्" "ध्वनिरात्मा काव्यस्य" इत्यादीनि काव्यलक्षणानि। तस्मात् यथा शौर्यादय आत्मनो धर्माः प्रोक्ताः तथैव माधुर्यादयः काव्यधर्मा उच्यन्ते। अलङ्काराणां स्थितिः कटक-कुण्डलवदेवास्ति। यथा कस्मैचित् सुशीलव्यक्तयेऽलङ्काराः उत्कर्षाधायकाः तथैव काव्यस्य बाह्यशोभाधायक-

---

३९. ऋ.- १/७१/४

४०. ऋ.- तत्रैव-

४१. ऋ.- १/१६४/२०

तत्त्वानि अलङ्कारा: कथ्यन्ते। अलङ्कारै: काव्ये अतिशयता-उत्कर्ष: चमत्कारो वा समागच्छति।

ऋग्वेदस्य मन्त्रेषु अलङ्काराणां छटा स्वीयां सूक्ष्ममर्मस्वरूपतां प्रकटयति। एते अलङ्कारा: स्वत: आविर्भूता: अलङ्कारा: सन्ति। वैदिकाऽऽलंकारेषु यत्सौष्ठवं, यत्पाटवं, यदार्जवं शोभते न तदन्यत्र प्राप्यते। वैदिकऋषि: कविष्वस्ति कवि:। स: प्रेमपर्युपासको महान् भावुकहृदयवान् सौन्दर्यसेविषु शिरोमणिरिति सर्वमपि जगज्जानाति। वैदिकमन्त्रेषु प्रयुक्ता-ऽऽलङ्कारा: सौन्दर्यस्य कोमलां भावनां सम्यगभिजानात्येव न, तत्प्रकटीकरणेऽपि ते परमप्रवीणा: सौन्दर्याभिव्यक्तीकरणे तेषां सरलभावनां केन न प्रेक्ष्यते? एतेऽलङ्कारा: कविकथनस्य प्रभावशालीकरणे, प्रतिपाद्यविषयाणां रोचकचित्रार्पणे, हृदयगतभावमावर्जयितुञ्च सर्वथा समर्था: सन्ति। रूपकन्तु वेदस्यैक: प्रशंसनीयो बहुलप्रयुक्ताऽलङ्कारोऽस्ति। वेदानां शैल्येव रूपकमयी वर्त्तते। सुष्ठूपमानामेका सन्तति: ऋग्वेदीयमन्त्रेषूल्लसिता भवति। अन्यालङ्कारेष्वतिशयोक्ति-व्यतिरेक-समासोक्त्यादीनामनेकानामप्यलङ्काराणामत्र दर्शनं भवति।

ऋग्वेदीयकवेरुपमाऽतिप्रियोऽलङ्कारोऽस्ति, यस्य शृंखलाऽतीव चारुतया विन्यस्ता कृताऽस्ति-

**"अभ्रातेव पुंस एति प्रतीची**
**गर्त्तारुगिव सनये धनानाम्।**
**जायेव पत्य उशती सुवासा**
**उषा हस्रेव निरिणीते अप्सा॥"**[४२]

उषा कदाचित् भ्रातृहीना भगिनीव स्वदायभागमवाप्तुं पितृस्थानीय-सूर्यस्य पार्श्वे समायाति, कदाचित्सुवस्त्रं धारणं कृत्वा पतिं स्वानुरागरज्जौ संयमनाय कमनीया कामिनीव एव पत्यु: सम्मुखे निजसौन्दर्यं प्रकटीकरोति।

वैदिककवि: स्वोपमानं सञ्चयितुं पार्श्ववर्त्तिन: पशुजीवनमप्यवलम्बनं करोति। सायंकाले गोचरभूम्यां प्रत्यागतानां गवां दृश्यन्तस्मै त्वतीव प्रियमस्ति।

---

४२. ऋ.- १/१२४/७

इन्द्रस्तुतौ आङ्गिरसहिरण्यस्तूपऋषेरुक्तिरियमस्ति यत् त्वष्ट्रा निर्मितेन स्वरयुक्तवज्रेण यदेन्द्रः पर्वताश्रितं वृत्रं जघान तदा रम्भणं कुर्वन्तीं समागतानां गवामिव जलानि समुद्रमनुजग्मुः–

**"अहन्नहिपवते शिश्रियाणां त्वष्टास्मै वज्रं स्वयं ततक्ष।**
**वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः॥"**[४३]

अत्रत्योपमा तत्सर्वमपि अतितरामेव समीचीनतया प्रकाशयन्ती लक्ष्यते, यन्निखिलं विशालैका पदपङ्क्तिरपि नैतावत्या ललिततयाऽऽविर्भावयितुं क्षमाऽस्ति। "वाश्रा धेनवः" इत्यनेन पदेन वत्सदर्शनाऽऽकुलिताभिः नदन्तीभिः धेनुभिः सह वृष्टेः साम्यं कृत्वा वैदिकऋषिः वेदपाठकानामग्रे वृष्ट्या आश्चर्यवत्त्वं झञ्झावातेन सह वर्षणत्वं समुद्रं प्रति वेगेन प्रवहणशीलत्वं त्वरितत्वञ्चानेकविधस्थितेरलङ्घ्यत्वञ्च इत्यादि बहून् भावान् समुपस्थापयतीति सुधीभिर्विचारणीयम्।

हृदयवृत्तीनां मार्मिकाभिव्यक्तये वरुणसूक्तानामनुशीलनं विशेषेण सहायकं सिद्धं भवति। महर्षिणा वसिष्ठेनैकस्मिन्नितान्तभावप्रवणसूक्ते स्वकीयमाराध्यदेवं वरुणं प्रति स्वकीयः कोमलोद्गारः प्रकटितः। ऋषिरसावात्मानं पृच्छति–कदाऽहं वरुणेन सह मैत्रीमाप्स्यम्? क्रोधरहितो भूत्वा प्रसन्नचित्तेन वरुणः कदा मद्दत्तं हविष्यं ग्रहीष्यतीति? कदाऽहं प्रसन्नमनसा तस्य प्रसादं प्राप्स्यामि?

**"उतस्वया तन्वा संवदे**
**तत्कदान्वन्तर्वरुणे भुवानि।**
**किं मे हव्यमहृणानो जुषेव कदा**
**मृडीकं सुमना अभिख्यम्॥"**[४४]

विदुषां मीमांसया वरुण-कोपेन यदा वसिष्ठः कथयति– हे देव! पितृभिः कृतद्रोहानपेहि, तान् द्रोहान् विरोधान् चापहिरताम्, ये मया स्वशरीरेण कृताः। यथा पशूनामपहर्त्तारं चौरम्, तथा रज्वा बद्धं वत्सं जनाः मुक्तं

---

४३. ऋ.- १/३२/२
४४. ऋ.- ७/८६/२

कुर्वन्ति तथैव ममापराधरज्वा बद्धं वसिष्ठमपि त्वं मोचय। मन्त्रो यथा–

**"अव द्रुग्धानि पित्र्या सृज्या**
**नोऽव या वयं चकृमा तनूभिः।**
**अव राजन् पशुतृपं न वायुं सृजा**
**वत्सं न दाम्नो वसिष्ठम्॥"**[४५]

आत्मसमर्पणं, नम्रता, दीनता, अपराधस्वीकृत्यादिभव्यभावनाभिर्मण्डितं सूक्तमिदं तद्वैष्णव–भक्तानां वाणीं स्मारयति, यस्यां ते सहस्रापराधं कृत्वाऽपि भगवता सहात्मसाक्षात्कर्त्तुं याचन्ते।

सूर्योदयस्य दृश्यमपि तस्य प्रियमस्ति। अस्यापि वर्णनं बहुविधाऽलङ्कारमाश्रित्य कृतं तेन। प्रभातवर्णनप्रसङ्गे सः कथयति यथा कोऽपि जनः किमपि चर्म नीत्वा जलाभ्यन्तरे स्थापयति तथैवोदिते सूर्ये तस्य किरणाः अन्धकारं निक्षिपन्ति–

**"दविध्यतो रश्मयः सूर्यस्य चर्मेवात्राधुस्तमो अप्स्वन्तः।"**[४६]

रूपकाणामपि बाहुल्यमृग्वेदस्य मन्त्रेषूपलब्धमस्ति। सूर्यः आकाशस्य स्वर्णिमो मणिरस्ति। यथा– **"दिवो रुक्म उरुचक्षा उदेति"**[४७] सूर्यस्तु तद्रञ्जितप्रस्तरखण्डमस्ति यत् खल्वाकाशे स्थापितमस्ति। तदुक्तमृग्वेदे– **"मध्ये दिवो निहितः पृश्निरश्मा"**[४८] इति। अग्निः स्वप्रभयाऽऽकाशं स्पृशति। स्पष्ट एवास्ति यदेते मन्त्रा अतिशयोक्तिमूलकाः सन्ति। यथा– **"घृतप्रतीको बृहता दिवि स्पृशा"**[४९] इति। ऋग्वेदेऽतिशयोक्त्या उदाहरणस्य प्रख्यातोऽयं मन्त्रोऽस्ति, सायणानुसारेण यज्ञस्य अथवा पतञ्जल्यनुसारेण शब्दस्य अथवा राजशेखरानुसारेण काव्यस्य यस्मिन् मन्त्रे स्तुतिः कृताऽस्ति–

---

४५. ऋ.– ७/८६/५
४६. ऋ.– ४/१३/४
४७. ऋ.– ७/६३/४
४८. ऋ.– ५/४७/३
४९. ऋ.– ५/११/१

**चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्याँ आविवेश।।**[५०]

अपरमप्युदाहरणमस्ति–

**"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति।।"**[५१]

सुष्ठुपक्षधरौ, सहवासिनौ, समानख्यातौ, द्वौ पक्षिणौ एकस्यैव वृक्षस्योपरि स्थितौ, तयोरेकः सुस्वादु फलं भक्षयति, अपरस्तु अभुक्त्वैव विराजमानोऽस्ति।

अत्र पक्षिद्वयस्योपमानेन जीवात्मपरमात्मरूपमुपमेयस्य सर्वथा निगरणत्वेनातिशयोक्तिरस्ति। उत्तरार्द्धे पक्षिद्वयस्य स्वभावे वैभिन्न्येन व्यतिरेकाऽलङ्कारस्यापि गूढ़ः संकेतो मिलति। व्यतिरेकस्यापरमपि सुष्ठूदाहरणमृतचक्रस्य वर्णनमस्ति। तद्यथा–

**"द्वादशारं नहि तज्जराय वर्वर्ति चक्रं परिद्यामृतस्य।"**[५२]

उपनिषत्स्वपि अनेकेषां सुष्ठु अलंकाराणां दृष्टान्ताः सिलन्ति। कठोपनिषदि–रथस्य रूपकं शरीरमस्ति। यथा–

**"आत्मानं रथिनं विद्धि शरीरं रथमेव तु।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।।"**[५३]

ऋग्वेदे ऋतुवर्णनस्याप्यनेके मन्त्राः सिन्ति। पर्जन्यसूक्ते वर्षायाः अतीव नैसर्गिकं वर्णनमास्ति। मण्डूकसूक्तेऽपि वर्षाकालस्यैको रमणीयो दृश्योऽस्ति। अत्रैकस्य दर्दुरस्य शब्दः श्रुत्वाऽपरोपि टरटरायते। ध्वनिरयं गुरुवचनं श्रुत्वा वेदध्वनिकर्तॄणां शिष्याणां पाठध्वनिरिव प्रतीतो भवति–

**"यदेषामन्यो अन्यस्य वाचं शाक्तस्येव वदति शिक्षमाणः।**
**सर्वं तदेषां समृधेव पर्व यत्सुवाचो वदथनाध्यप्सु।।"**[५४]

---

५०. ऋ.– ४/५८/३
५१. ऋ.– १/१६४/२०
५२. ऋ.– १/१६४/११
५३. कठो.–१/३/३
५४. ऋ.– ७/१०३/५

यत्रोपमाऽलङ्कारस्य मनोरमं वर्णनं विद्यते तत्रैवानुप्रासस्यापि अलौकिकी छटा दृग्गोचरी भवति। **"हिरण्यकर्णं मणिग्रीवमर्ण:"**[५५] "अव्ययानि पव्यया",[५६] "धन्याय धन्वसि"[५७], "यमसूरसूत"[५८], "जार: कनीनां पतिर्जनीनाम्",[५९] "अत्यावृधस्नू रोहिता घृतस्नू"[६०], "विभूतय ऊतय:"[६१] इत्यादिषु स्थलेषु या अनुप्रासच्छटा न सा लौकिकी छटावत् सामान्या प्रतीयते।

इदानीं यमकालङ्कारं पश्याम:। यद्यपि वैदिककवीनां प्रतिपाद्य विषयम्प्रत्येवाधिका रुचिरासीत्, अत एवैतादृशी प्रवृत्ति: स्वल्पा एवावगम्यते। तथापि– **"गव्ययीत्वग् भवति निर्णिगव्ययी"**[६२] **"अंहो युवस्तन्वस्तन्वते"**[६३], **"कुह्या कुह्याकृते"**[६४क] आदिषु प्रयोगेषु यमकसौन्दर्यस्याद्भुतमुद्घाटनमस्ति। पुनरुक्तवदाभासस्याप्यालोक: मन्त्रेषु वर्तते एव। यथा– **"अश्वहय:"**[६४ख] आदयोऽनेके प्रयोगा: सन्ति। श्लेषाऽलंकारस्यापि बहुप्रयोगो लभ्यते। यथा–

**"प्रबोधया पुरंधि जार आससतीमिव"**[६५] **"याहि राजेवामवान्"**[६६] **"विश्वा आशास्तरीषणि"**[६७] इत्यादिषु श्लेषालंकारस्यापि न्यूनता नास्तीति सिध्यति।

---

५५. ऋ.– १/१२२/१४

५६. ऋ.– ९/८६/३४

५७. ऋ.– ९/८६/३४

५८. ऋ.– ३/३९/३

५९. ऋ.– १/६६/४

६०. ऋ.– ४/२/३

६१. ऋ.– १/८/९

६२. ऋ.– ९/७०/७

६३. ऋ.– ५/१५/३

६४क. ऋ.– ८/२४/३०

६४ख. ऋ.– १०/२६/५

६५. ऋ.– १/१३४/३

६६. ऋ.– ४/४/१

६७. ऋ.– ५/१०/६

यत्रोपमा बहुविधदृष्टान्तेन प्रदर्शिता तत्र लुप्तोपमाऽपि विस्तृतया प्रयुक्ता दृश्यते। तद्यथा–

**"ब्राह्मणा व्रतचारिणः"**[६८] अत्र ब्राह्मणा इव व्रतचारिणः इत्यर्थः गृह्यते परं उपमाबोधकस्य 'इव' शब्दस्यानुक्तत्वात् लुप्तोपमा सिध्यति। एवमेव **"ता समाजा घृतासुती"**[६९] **"दुहाना धेनुर्वृजनेषु कारवे"**[७०] इत्यादिषु स्थलेषु द्रष्टुं शक्यते।

कतिपयेषु मन्त्रेषु समासगतोपमा अपि प्रयुक्ता दृश्यते। यथा– **"समुद्र-व्यचसम्"**[७१] **"सूरचक्षसः"**[७२] **"हिरण्यकेशः"**[७३] इत्यादिषु स्थलेषु।

अनेन प्रकारेण वेदेष्वलङ्काराणां प्रभाऽऽलोचकानां दृष्टिं बलादाकर्षति।

## ऋग्वेदे शैली

वस्तुतः ऋग्वैदिककवीनां समये शैलीविषये पृथक्तयाऽनुशीलनं न जातम्। परमाधुनिकैः प्राच्यपाश्चात्यविद्वद्भिः रचनागठनम्–वर्ण्यविषयः, रस–प्रक्रिया, कविस्वभावः, पात्रादीनामनुकूलानेकविधशैलीपुरस्कृतम्। यद्यपि ताः सर्वा अपि शैल्यः सुकुमारमार्गादिभारतीयवैदर्भीप्रभृतिषु त्रिषु शैलीषु यथाकथञ्चित् समाविष्टाः भवन्ति। तथापि नूतनां शैलीमभिलक्ष्य ऋग्वेदादुदाहरणानि संकलय्य प्रस्तुतीकरणमुपयुक्तमेव भविष्यति।

**१. चारु-शैली–** अस्यां शैल्यां सरल–मनोरमालङ्काराणां समावेशः, शब्दचयनेऽनुरूपतायाः दृष्टिः; कल्पना प्रमुखा न स्यात्, वाक्यावल्यः लघवः प्रसन्नपदावल्यां स्युरिति। यथा–

**"इच्छन्ति त्वा सौम्यासः सखायः"**[७४]

---

६८. ऋ.– ७/१०३/१
६९. ऋ.– २/४१/६
७०. ऋ.– २/२/९
७१. ऋ.– १/११/१
७२. ऋ.– १/१६/१
७३. ऋ.– १/७९/१
७४. ऋ.– ३/३०/१

**"पयस्वतीरोषधयः पयस्वन्मामकं वचः"**[७५] इत्यादयः।

**२. सहज-शैली–** शैल्यामस्यां सहजता, शुद्धता, समीचीनता, औचित्य-निर्वाहश्चावश्यकः। अत्रालङ्काराणां स्थितिर्निगण्या भवति। यथा–

**"अहं मनुरभवं सूर्यश्च"**[७६], **"वि मे मनश्चरति दूर आधी"**[७७] इत्यादयः।

**३. प्रभविष्णु-शैली–** यत्र सरलं सबलं प्रभावपूर्णञ्च वाक्यम्, अलङ्कारेषु सौन्दर्यविधानं, भावानुकूलशब्दानां चयनम्, प्रकरणं प्राणवान्, कलात्मकः सुन्दरश्च वाक्यविन्यासः स्यात् तत्रेयं शैली भवति। यथा–

**"ओ हि वर्त्तन्ते रथ्येव चक्रान्यमन्यमुपतिष्ठन्त रायः"**[७८]

"रघुपत्वानः प्रजिगात बाहुभिः"[७९] इत्यादिषु स्थलेषु।

**४. ओजस्विनीशैली–** यत्रोत्तेजकभावानां वर्णनानि भवन्ति, तत्प्रकरणहेतोरस्याः शैल्याः चयनं क्रियते सुधीभिः। यथा–

**"इन्द्रस्य नु वीर्याणि प्रवोचम्"**[८०]

**"यस्य शुष्माद्रोदसी अभ्यसेताम्"**[८१]

**५. अलंकारशैली–** शैल्यामस्यां बाह्यशोभा प्रमुखा भवति। यथा–

"रयिर्न चित्रा सूरो न संदृनायुर्न"[८२]

**"वनेषु जायु मर्तेषु मित्रो"**[८३]

---

७५. ऋ.– १०/१७/१४
७६. ऋ.– ४/२६/१
७७. ऋ.– ६/९/६
७८. ऋ.– १०/११७/५
७९. ऋ.– १/८५/५
८०. ऋ.– १/३२/१
८१. ऋ.– २/१२/१
८२. ऋ.– १/६६/१
८३. ऋ.– १/६७/१

**६. समास-शैली–** यत्र गम्भीराः विचाराः संक्षेपेण प्रस्तूयन्ते तत्रेयं शैली भवति। यथा– **"आपः पृणीत भेषजम्"**[८४]

**"विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम्"**[८५]।

**७. व्यास-शैली–** यत्र स्वान्तःस्थविचाराणां विस्तारपूर्वकं प्रवचनं भवेत् तत्रेयं शैली भवति। यथा– **"यो जात एव प्रथमः"**[८६]

**"त्वमग्ने प्रथमो अङ्गिरा"**[८७]।

**८. उदात्त-शैली–** यत्र सुव्यवस्थया सह सुस्थिताः पदावल्यः वर्ण्य-विषयान् बुद्धिपूर्वकं विन्यसन्ति तत्रोदात्तशैली भवति। यथा–

**"नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते"**[८८]

**"यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा।**
**नू चित स दभ्यते जनः"**[८९]

एवमेवान्या अपि अनेकाः शैल्यः भवितुमर्हन्ति, यतो हि मानवप्रकृते-र्वर्ण्यविषयस्य चेयत्ता न कर्तुं शक्यते। एक एव जनः सरसवस्तुनः काल्पनिकं चित्रमुपस्थापयति यदा, तदा तस्मिन् वर्णने तेनैव जनेन दार्शनिक-कर्कशपदावल्यां स्वसम्मततर्कोपस्थितौ शैलीभिन्नता तु भवत्येव। अत एव च मानव-प्रकृतिं, भाषायाः कृत्रिमतां सहजतां वा, अलंकार-प्रेम उत रसनिर्भरां पदावलीं, चरित्राङ्कनम्, प्रकृतिचित्रणम् इत्यादि तथा च वर्णनीयभावं, रसं, प्रबन्धम् वा स्वीकृतस्य नायकस्य ललितत्वम् उद्धतत्वं वा दृष्ट्वा शैल्यामवान्तरभेदाः प्रभवन्ति। अमुमेवानन्त्यमवलोक्य भारतीयाः आचार्याः समस्तामपि शैलीं माधुर्यौजः प्रसादगुणैस्सह समन्वितां कृत्वा तदनुरूपां शैलीत्रयीमेव स्वीकृतवन्तः।

---

८४. ऋ.– १/२३/२१
८५. ऋ.– ३/५३/१२
८६. ऋ.– २/१२/१
८७. ऋ.– १/३१/१
८८. ऋ.– १/३६/१९
८९. ऋ.– १/४१/१

वस्तुतः शैली कवीनां शीलमभिव्यञ्जयति। अत एव शैल्याम् कवेर्व्यक्तित्वस्य प्रभावो भवति। ऋग्वेदस्यानेके ऋषयः सन्ति, देवताश्चाप्यनेकाः। अत एव शैलीषु ऊर्ध्वविवेचनानुसारं भिन्नत्वं तु आवश्यकमेवासीत्। भारतीयाः आचार्यास्तु **"रीतिरात्मा काव्यस्य"** इत्येवमेवोक्तवन्तः। अतः वक्तुं शक्यते यत् रीतेः गुणैः सह गुणानां च शैलीभिस्सहान्योन्याश्रयसम्बन्धात् शैल्यामेव समेषामन्तर्भावो भवतीति।

## रसविवेचनम्

ऋग्वेदस्य मन्त्रेषु अनेकरसानां मनोमुग्धकरं संविधानमस्माकं मनसः प्रधानाकर्षणमस्ति। वैदिकऋषेर्मनोगतभावानां सरलनिदर्शनमेतेषु मन्त्रेषु समुपलब्धं भवति। फलतोऽत्र रसानां सङ्केतः स्वाभाविकोऽस्ति। आधुनिक-संस्कृतसाहित्ये रससम्प्रदायः सुप्रसिद्धोऽस्ति। भरतमुनेः नाट्यशास्त्रतः अद्यतनकालं यावदस्य सम्प्रदायस्यैका अविच्छिन्नधारा प्रवहति। 'काव्यस्यात्मा रसः' इत्यस्य सिद्धान्तस्य प्रतिपादनमपि एतदेव सूचयति। सर्वेषामपि सुधियामिदं तथ्यं सुविदितमेव यत् सौन्दर्यमेव काव्येषु 'रस' इत्येतेन नामधेयेन विश्रुतम्। कविस्तमेव साधयितुं काव्यं कवयति। मङ्गलानां विधानं स रसः शृंगार-करुण-शान्त-वीर-बीभत्स-भयानक-रौद्र-हास्य-अद्भुतश्चेति भेदेन नवविधतां भजते। नवस्वपि रसेषु शृंगारो नाम रसो रसराज इति सर्वेऽपि साहित्यशास्त्रिणः साधु विदन्ति। यथा त्वरया स मानसं मथ्नाति, मदयति, चपलयति च तत्तथा नान्यस्तस्मात् संयोग-विप्रलम्भभेदेन स द्विविधः। उभयोरपि भेदयोर्विप्रलम्भःशृङ्गारो मधुतरः। तत्र चेतसो द्रुतीकरणक्षमतातितरां तरस्विनी भूत्वा विभाति, तस्मात्ततः परं मधुरिमाणं न कोऽप्यन्यो रसो बिन्दति।

इदानीम् ऋग्वेदे एषां नवरसानां भावानां वा चित्रणं स्थाने-स्थाने कथं प्रस्तुतं वर्तते, तदत्राधः पश्यामः।

१. **शृङ्गाररसः–** ऋग्वेदस्यानेकसूक्तेषु शृंगाररसस्य सुष्ठु-भावनाया रोचक उल्लेखो दृश्यते। स्त्री-पुरुषयोर्दाम्पत्यं प्रेम एव साहित्यशास्त्रे शृगांररसत्वेनोच्यते। यथा–

**"उत त्वा स्त्री शशीयसी पुंसो**
**भवति वस्यसी। अदेवत्रादराधसः॥"[९०]**

**"वि या जानाति जसुरिं वि तृष्यन्तं**
**वि कामिनम्। देवत्रा कृणुते मनः॥"[९१]**

अत्र शशीयस्याः श्रृंगारस्य रमणीयं वर्णनं प्रस्तुतमस्ति। सम्भोग-श्रृंगारस्योदाहरणत्वेन-

**"उत मे अरपद् युवतिर्ममन्दुषी प्रति श्यावाय वर्तनिम्।**
**विरोहता पुरुमीडहाय येमतुर्विप्राय दीर्घयशसे॥"[९२]**

प्रसङ्गेऽस्मिन् प्रवृत्तयौवनायाः मोदमानायाः स्वेन प्रियतमेन पुरुमीढेन सह सम्भोगश्रृंगारस्य वर्णनं प्रस्तुतमस्ति। दशममण्डलस्य पञ्चदशे सूक्ते पुरूरवा-उर्वश्योः प्रणय-प्रसङ्गे विरहखिन्नस्य नायकस्य कथने विप्रलम्भ-श्रृंगारस्य सङ्केतोऽस्ति-

**"इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः।**
**अवीरे क्रतौ विदविधिुवन्नोरा न मायुं चिन्तयन्त**
**धुनयः॥"[९३]**

श्रृंगाराभासस्यापि संकेतो यम-यमीसूक्ते उपलभ्यते। अत्र यमी निजभ्रात्रा यमेन प्रणययाच्ञां करोति, यमस्तु तस्याः प्रलोभनेनात्मानं संरक्षयति। यथा-

**"यमस्य मा यम्यं काम आगन् त्समाने योनौ सहशेय्याय।**
**जायेव पत्ये तन्वं रिरिच्यां वि चिद्वहेव रथ्येव चक्रा॥"[९४]**

## २. वीररसः-

यद्यपि ऋग्वेदे सर्वेऽपि देवाः दानवीरा एव सन्ति। तत्रापि

---

९०. ऋ.- ५/६१/६

९१. ऋ.- ५/६१/७

९२. ऋ.- ५/६१/९

९३. ऋ.- १०/९५/३

९४. ऋ.- १०/१०/७

इन्द्रस्तुतौ वीररसस्याभिव्यञ्जना स्वकीयभव्यरूपेणोपस्थिता भवति। दाशरात्रसूक्ते वसिष्ठेन राज्ञः दिवोदासस्य तथा तेषां प्रतिपक्षिणां सङ्घर्षस्य सुष्ठु वर्णनं कृतम्। गृहसमद ऋषिरिन्द्रस्यानेकासु स्तुतिषु तस्य वीरताया विशदं सङ्केतं करोति–

**"यस्मान्न ऋते विजयन्ते जनासोऽयं**
**युध्यमाना अवसे हवन्ते।**
**यो विश्वस्य प्रतिमानं बभूव यो**
**अच्युतच्युत् स जनास इन्द्रः॥"**[९५]

अर्थात् इन्द्रं विना न कोऽपि मानवो विजेतुं शक्नोति। योद्धारो जना आत्मरक्षार्थं तमेवाह्वयन्ति। विश्वस्मिन्नसौ श्रेष्ठतमोऽस्ति। अच्युतान् च्यावयत्यसौ। यतो ह्यसौ शौर्यस्य वीर्यस्य च प्रतीकोऽस्ति।

रुद्रविषयेऽपि ऋषिः कथयति यत् रुद्रः स्वात्मजानां वीरकर्मणां प्रशंसां श्रुत्वा-श्रुत्वा स्वशरीरे जडागमनं न काङ्क्षति। यथा– **"युवा पिता स्वपा रुद्र एषाम्।"**[९६] इत्थमन्यत्रापि–

**"अहं रुद्राय धनुरातनोमि"**[९७] **"मम पुत्राः शत्रुहणः"**[९८]
इत्यादिषु स्थलेषु वीररसस्य सम्यक् परिपाको दृश्यते।

**३. शान्तरसः–** शान्तरसस्य स्थायिभावः शमो निर्वेदो वा अस्ति। ऋग्वेदे शान्तरसस्य बहुलताऽस्ति। प्रायः समस्तभावानां विलयनं शान्तरसे एव कृतं वर्तते। यतो हि ऋषीणां परमं प्रयोजनं वर्तते आत्मिकशान्तिः परतुष्टिश्च। यथा–

**"युवोध्यस्मद् द्वेषांसि"**[९९] **"मा नो हिंसीज्जनिता यः पृथिव्याः।"**[१००]

---

९५. ऋ.– २/१२/९
९६. ऋ.– ५/६०/५
९७. ऋ.– १०/१२५/६
९८. ऋ.– १०/१५९/३
९९. ऋ.– २/६/४
१००. ऋ.– १०/१२१/९

**"भद्रा इन्द्रस्य रातयः"**[१०१] **"वयं देवानां सुमतौ स्याम"**[१०२]

इत्यादिषु मन्त्रेषु भावशमनस्योदात्तरूपं प्राप्यते।

**४. करुणरसः–** साहित्यशास्त्रे प्रतिपादितस्येष्टस्य विनाशेनोत्पन्नः शोकस्तु ऋग्वेदे नोपलभ्यते, किन्तु वियोगस्य दैव्यदशायाः वा करुणभावस्य चित्रणं दृश्यते। ऋषयः सम्भवतः जन्मतारतम्ये एकरसस्य आनन्दस्य आत्मानन्दस्य वाऽनुभवं कुर्वन्ति स्म। परमत्र प्रश्नोऽयं समुदेति यद्यदि मानवस्य करुणा जागृता नाऽभवत् तर्हि भाव-संवेदन-पक्षस्तु शिथिल एव भविष्यति खत्खलु सहृदयस्य परमपाथेयो वर्तते। तथा चेयमेव संवेदनशीलता ऋग्वेदस्योदाररूपे करुणा-वरुणालयं संकेतयति। अनया दृष्ट्या चिन्तनेन यमयमीसूक्तम्[१०३], पुरूरवा-संवादः[१०४], अक्षसूक्तञ्चास्य [१०५]प्रसङ्गस्योपवर्णकं सिध्यति। शुनःशेपऋषेः कवितास्वपि करुणचित्रणस्य प्रसङ्गो वर्तते।[१०६] एवमेवान्येष्वपि सूक्तेषु करुणभावस्य चित्रणं तु दृश्यते, परमत्र पद्यशः नोपस्थातुं शक्यते।

**५. रौद्ररसः–** अत्र 'क्रोधः' स्थायीभावः, अस्य भावस्यानेकेषु स्थलेषु विवरणं प्राप्यते। यथा– इन्द्रस्य हनोरुपरि वृत्रः प्रहरति। वृत्रप्रहारात् इन्द्रः आघातमनुभूय दुष्टवृत्रस्य शिरसि स्वकीयस्य वज्रस्य प्रहारं करोति। यथा–

**"ममच्चन ते मघवन् व्यंसो निविविध्वाँ अप हनू जघान।**
**अधा निविद्ध उत्तरो बभूवाञ्छिरो दासस्य सं पिणग्वधेन॥"**[१०७]

एकत्र मरुद्गणेभ्यो– **"प्रच्यावयन्तो अच्युता चिदोजसा"**[१०८] अत्र यद् रूपं प्रस्तुतमस्ति तदपि रौद्ररसमभिव्यक्तीकरोति। रुद्रसूक्तेऽपि

१०१. ऋ.- ८/६२/१
१०२. ऋ.- ७/४१/४
१०३. ऋ.- १०/१०
१०४. ऋ.- १०/९५
१०५. ऋ.- १०/३४
१०६. ऋ.- १/२४
१०७. ऋ.- ४/१८/९
१०८. ऋ.- १/८५/४

रौद्ररसस्य प्रभावातिशयरूपं दृश्यते।[१०९]

६. **भयानक-रसः–** भयानकरसदृष्ट्या ऋग्वेदे बहवो मन्त्राः समक्षमागच्छन्ति। यथा– **सोमरसं** पीत्वा इन्द्रः तादृशः भयङ्करोऽभवत् यदवलोक्य युयुत्सुः वृत्रः क्वचिद् अन्धकारे गत्वा अदृश्योऽभवत्। तत्र इन्द्रस्य भयानकस्वरूपस्य वर्णनं कुर्वता ऋषिणोक्तम्– **'त्वद्भियेन्द्र'**[११०] इति। एवमन्यत्रापि–**"सूर्यस्य चक्षुः प्रमिनन्ति वृष्टिभिः"**[१११], **"विश्वं विभाय भुवनं महावधात्"**[११२] इत्यादिषु स्थलेषु भयानकरसस्य चित्रणमवलोक्यते।

७. **हास्यरसः–** एतस्य रसस्यान्तर्गतं मण्डूकसूक्तस्य मन्त्रं तु साक्षात् उदाहरणमस्ति। अत्र मण्डूकानां कृते **"संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः"**[११३] इत्युक्त्वा हास्यस्य स्पष्टमुदाहरणं प्रस्तूयते।

८. **अद्भुतरसः–** अस्मिन् सन्दर्भे अनेके मन्त्राः पठिताः सन्ति। **"अतो विश्वाद्भुता चिकित्वाँ अभि पश्यति"**[११४] इत्यस्मिन् मन्त्रे शुनः-शेपो ऋषिर्वरुणस्याद्भुतसाम्राज्यस्य वर्णनं प्रस्तौति। **"कस्य नूनं कतमस्यामृतानाम्"**[११५], **"आ पूषन् चित्रवर्हिषम्"**[११६] **"स नः सिन्धुमिव नावयाति"**[११७] **"क इमं वो निण्यमाचिकेत"**[११८] **"ममच्चिदापः शिशवे ममृड्युर्ममच्चिदिन्द्रः सहसोदतिष्ठत"**[११९] इत्यादिषु मन्त्रेषु विस्मयात् विह्वलस्य ऋषेः चेतना वाग्विभूतौ विद्यमाना बौद्धिकी दृष्टिरवलोक्यते।

---

१०९. ऋ.– २/३३/८
११०. ऋ.– ६/३१/२
१११. ऋ.– ५/५९/५
११२. ऋ.– ५/८३/२
११३. ऋ.– ७/१०३/१
११४. ऋ.– १/२५/११
११५. ऋ.– १/२४/१
११६. ऋ.– १/२३/१३
११७. ऋ.– १/९७/८
११८. ऋ.– १/९५/४
११९. ऋ.– ४/१८/८

**९. बीभत्सरस:– "वि जिहीष्व वनस्पते"**[१२०], "जघने चोद"[१२१] इत्यादिषु मन्त्रेषु बीभत्सरसस्य स्पष्टोल्लेखो दृश्यते। एवमेवान्यत्रापि द्रष्टव्यम्।

इत्थं सर्वत्र स्थितानां भावानामभिव्यक्ति: कविना समुचितेन प्रशंसनीयेन प्रकारेण कारिताऽस्ति। कवेर्लेखन्या: प्रभूतबलशालित्वात् तस्या एकैकं पदं बहुकार्यसम्पादनकारि सिद्ध्यति। अत एवैतस्माच्छ्लोकान्न केवलमप्रस्तुतविधानसौन्दर्यं दृक्पथेऽवतरत्यपितु ओजश्छटा रीते: प्रकर्ष: पूर्णोपमाप्रस्तुतप्रशंसा तद्गुणाख्यानामलङ्काराणां कान्तिश्च सम्यक् पाठकानां चेतांसि आकर्षयति युगपदेव।

## सौन्दर्यपरिकल्पना

उषादेवीविषये समुपलब्धानां सूक्तानां पर्यालोचनेन ज्ञायते यदेतानि सूक्तानि काव्यदृष्ट्यापि नितान्तानि सरसानि सहजानि भव्यभावमण्डितानि च सन्ति। वैदिकऋषे: प्रतिभाचातुरी उषादेव्या: चरित्रचित्रणेऽपि सर्वथैव कुशला। अत: कविरत्र उषादेव्या: यच्चरित्रं चित्रयति तत्सजीवताम्प्राप्य हृदयावर्जकं च जायते।

**"कन्येव तन्वा शाशदानां एषि देवि देवमियक्षमाणम्।**
**संस्मयमाना युवति: पुरस्तादाविर्वक्षांसि कृणुषे विभाती।।"**[१२२]

अत्र कवेर्मानवीकरणस्य भावनाऽतिप्रबलाऽस्ति। अत्र उषादेव्या: कुमारीस्वरूपस्य कल्पना वर्त्तते। स्मितवदनाया: तस्या: सुन्दरस्वरूपं प्रकटयति। युवतिकन्याया: कल्पना, सूर्यस्य समीपगमनस्य भावना कवेर्व्यापकदृष्टित्वं ज्ञापयति।

प्रकृतिचित्रणं प्रकारद्वयेन भवितुमर्हति–अनावृतमलङ्कृतञ्च। तत्रानावृतं वर्णनं प्रकृत्या: स्वत आलम्बनत्वेन क्रियते, यत्र प्रकृत्या नैसर्गिकमाधुर्यं कविहृदयमाकृष्टं करोति तथा स्वकीयाऽऽनन्देन कविमानसञ्च तोषयति। अलङ्कृतवर्णने प्रकृत्यास्तथा तासां व्यापाराणां मानवीकरणं भवति।

---

१२०. ऋ.– ५/७८/५
१२१. ऋ.– ५/६१/३
१२२. ऋ.– १/१२३/१०

अलङ्कृतवर्णनावसरे उषायाः मनोमुग्धकररूपस्य व्यापारस्य च हृदयरञ्जकं वर्णनं दर्शनीयमस्ति–

**"जायेव पत्या उशती सुवासा**
**उषा हस्रेव निरिणीते अप्सः।"**[१२३]

अत्र कविः नार्याः कोमलहृदयस्य स्पर्शं करोति। नारीजीवनं प्रेम्णि स्थितम्। प्रेम प्रकृत्यामपि प्राणप्रदां शक्तिं सञ्चारयति। तेन तज्जीवति, श्वसिति, वर्धते च। जीवनस्य मूलभूतं लक्ष्यमेव वर्त्तते नारीप्रेम। न केवला नारी प्रत्युत नारीनरावुभावपि तदपेक्षिणौ स्तः। वैदिककविः उषाचरित्रेण तस्या रूपवर्णनेन च मानवजीवनस्येदं प्रधानं तत्त्वं सर्वेष्वपि मानवेषु उच्चैः संवृद्धिमासादयद् विलोकयितुमाकाङ्क्षति। स इच्छति यज्जीवनं प्रेम्णा पावनं भवेत्, तत्तदनुग्रहेणानुगृहीतं स्यात्। न स तत् प्रेम प्रेम इति पुनीतेनाभिधानेन व्याहर्त्तुमीष्टे यदनाचारदोषेण दूषितं स्वार्थविशेषसम्पृक्तं वा विद्यते। तस्मात् स पूतप्रेमपेशले जीवने महतीमेव श्रद्धां निदधाति।

अनेन विवेचनेन वैदिककवीनां काव्यात्मकजीवनस्योत्कर्षं स्फुटमेव अलौकिकानन्दसञ्चारितं वर्त्तते। विषयेऽस्मिन् स्वयं वेदो वदति–

**"पश्य देवस्य काव्यं न ममार न जीर्यति" इति।**[१२४]

तथा च–

कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधात्। (शु.य. सं. ४०/८)

---

१२३. ऋ.– १/१२४/७

१२४. अथर्व.–१०/८/३२

## अष्टमोऽध्यायः

# वैदिकऋषीणां लोककल्याणात्मिका दृष्टिः

स्वकीयज्ञानविज्ञानमयप्रकाशप्रवर्तकत्वाद्वेदास्सर्वेषु शास्त्रेषु वरीवर्तन्ते। वेदाः न केवलं भारतीयैरेवापितु वैदेशिकैर्विद्वद्भिरपि श्रद्धयाऽवलोकितास्सन्ति। अतिप्राचीनकालादेवेष्टप्राप्त्यनिष्टपरिहृतेश्चालौकिका उपायास्तेभ्य एव विदिता जायन्ते। यत्र प्रत्यक्षस्य न चानुमानस्य प्रवेशस्तत्रापि ते प्रविशन्ति। उक्तं हि यथा–

> "प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।
> एतं बिन्दन्ति वेदेन तस्माद्वेदस्य वेदता।।"[1]

आम्नायः, आगमः, श्रुतिः, वेदः इति सर्वे शब्दाः परस्परं पर्यायाः। ज्ञानार्थकाद् विद्धातोः घञि प्रत्यये कृते सति वेदशब्दो निष्पद्यते। वैयाकरणसिद्धान्तकौमुद्यां तु चुरादिप्रकरणे चतुर्ष्वर्थेषु विभिन्नगणस्थ-विद्धातोः प्रयोगोऽस्ति। तद्यथा–

> "सत्तायां विद्यते ज्ञाने वेत्ति विन्ते विचारणे।
> विन्दते विन्दतिप्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात्।।"[2]

तदनुसारम्– १. 'विद्-सत्तायाम्'–विद्यते सत्तां गृह्णाति वस्तु अनेनेति वेदः।

२. 'विद्-ज्ञाने'–विदन्त्येभिः धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वेति वेदः।

३. 'विद्-विचारणे'–विन्ते विचारयति धर्मब्रह्मणी क्रियाज्ञानमयं ब्रह्म वेति वेदः।

---

१. ऋग्वेदभाष्यभूमिकायाम् प्रस्तावनायाम्।

२. सिद्धान्तकौमुदी-चुरादि प्रकरणे–

४. 'विद्लृ-लाभे'–विदन्ते स्वरूपं लभन्ते वस्तु अनेनेति वेदः।

स्वरूपभेदात्त्रिविधोऽयमुच्यते–(ऋच्यते स्तूयते यया सा ऋक्) **या खलु रचना पद्यमयी सा ऋक्, या गद्यमयी सा यजुः, या गानमयी सा सामेति कथ्यते।** तदुक्तं भगवता जैमिनिना–**"तेषामृग् यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुः शब्द इति।"** परं संहिताभेदाच्चत्वारो वेदाः परामृष्टाः। मन्त्रसंहितानां सङ्कलनं चतुर्विधतया कृतम् महर्षिपराशरसत्यवत्योः सूनुना कृष्णद्वैपायनवेदव्यासेन। तथा चोक्तम्–

**"वेदान् विव्यास यस्मात् स वेदव्यास इति स्मृतः।"** तेन महर्षिणा व्यासेन मन्त्रसंहितानां सङ्कलनं चतुर्विधतया कृतम्। तस्मात् संहिताः सन्ति चतस्रः-ऋक्संहिता, यजुः संहिता, सामसंहिता, अथर्वसंहिता च। अत एव वेदाश्चत्वारः स्मृताः।

चतुर्षु वेदेषु ऋग्वेदस्य गौरवं सर्वातिशायि अस्ति। ऋग्वेदो हि धार्मिकस्तोत्राणामेको (महान्) विशालो निधिः। तत्र बहुभिर्भिन्नभिन्नैः ऋषिभिः सुललितैः भावभव्यैः शब्दैर्विभिन्ना देवताः सादरं स्तुताः।

प्रतीच्या विपश्चितो वेदान् ऋषिप्रणीतान् मन्यन्ते। निरुक्ते च विद्यमानाः–**"तद्यदेनाँस्तपस्यमानान् ब्रह्मस्वयम्भ्वभ्यानर्षत्"**[३] इत्यादिकाः पङ्क्तयः ऋषेर्मन्त्रद्रष्टृत्वमुपपादयन्ति।

ऋषिदृष्टप्रार्थनाया अलौकिकफलस्य निर्देशोऽपि वेदे एवोपलभ्यते। यथा–

**"य इमे रोदसी उभे अहमिन्द्रमतुष्टवम्।**
**विश्वामित्रस्य रक्षति ब्रह्मेदं भारतं जनम्।।"**[४]

तथा च– **एवेन्नु कं सिन्धुमेभिस्ततारेवेन्नु कं भेदमेभिर्जघान। एवेन्नु कं दाशराज्ञे सुदासं प्रावदिन्द्रो ब्रह्मणा वो वशिष्ठाः।।"**[५]

एषु मन्त्रेष्वेव वैदिकवाण्याः नित्यतायाः प्रमाणं मिलति। तेषु

---

३. निरुक्ते- ऋषिपदनिर्वचने

४. ऋ. - ३/५३/१२

५. ऋ.- ७/३३/३

प्रमाणेषु **“यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन् ऋषिषु प्रविष्टाम्।”**[६]

**“वाचा विरूपनित्यया”**[७] मुख्याः सन्ति।

प्रधानरूपेण वेदोऽयं द्विविधः—मन्त्ररूपो ब्राह्मणरूपश्चेति। मन्त्रसमुदाय एव संहिताशब्देन व्यवहृतः। ब्राह्मणरूपो वेदभागस्तु संहिताभागस्य व्याख्यारूप एव। स चायं ब्राह्मणभागो यागस्वरूपबोधकतया प्रथितः। तदुक्तम् आपस्तम्बेन— **“मन्त्रब्राह्मणयोर्वेदनामधेयम्”**[८] इति। तत्र प्रयोगकालीनार्थस्मरणहेतुतया मन्त्राणामुपयोग इति वक्ष्यते। विधायकं वाक्यं ब्राह्मणम्। ब्राह्मणग्रन्थेषु दशविधविषयाणां विवेचनानि सन्ति। तानि यथा—

**“हेतुर्निर्वचनं निन्दा-प्रशंसा- संशयो विधिः।**
**परक्रिया पुराकल्पो व्यवधारणकल्पना॥**
**उपमानं दशैते तु विधयो ब्राह्मणस्य तु।”**[९]

‘विधि’ शब्दस्यार्थो भवति-यज्ञस्तथा तस्याङ्गानामुपाङ्गानाञ्चानुष्ठान-स्योपदेशः। आश्वलायनानुसारेण मन्त्रद्रष्टार ऋषयो भवन्ति, ब्राह्मणद्रष्टारस्तु आचार्याः।

ब्राह्मणग्रन्थोऽपि त्रिधा विभक्तोऽस्ति-ब्राह्मणम्, आरण्यकम्, उपनिषदश्च। यज्ञस्वरूपप्रतिपादको ब्राह्मणभागः, अरण्ये पठिताः यज्ञस्या-ध्यात्मिकं रूपं विवेचयन्तो वेद भागा आरण्यकानि, उपनिषदो ब्रह्मबोधिकाः मोक्षसाधनानि। अयमेव भागो वेदस्यान्तरूपतया ‘वेदान्त’ इत्युच्यते। ब्राह्मणभागो गृहस्थानामुपयोगी, आरण्यकभागो वानप्रस्थमाश्रितानाम्, उपनिषद्भागश्च सन्यस्तानामुपयोगीत्यपि वक्तुं शक्यते। तस्मात् आश्रमक्रमेणापि वेद-ब्राह्मण-आरण्यक-उपनिषद्-एषां चतुर्णामपि भागानां मानवजीवनाय महदुपयोगित्वन्तु सिद्ध्यत्येव।

ब्राह्मणग्रन्थेषु विहितयज्ञीयानुष्ठानानामीदृशी विशालाराशिस्तथा बृहत्तमः स्तूपः प्रस्तुतोऽभवत् यत्तेषां यथार्थरूपेण ज्ञानं कर्तुं तथा समुचितरीत्या—

६. ऋ.- १०/७१/३
७. ऋ.- ८/६४/६
८. आपस्तम्बश्रौतसूत्रे २४/१/३१
९. श.प. ब्राह्मणस्य भूमिकायाम् पृष्ठ-१२, मीमांसाभाष्ये २/१/८

अनुष्ठानं कर्त्तुमेको दुष्करो व्यापारोऽभवत्। फलतः अनुष्ठाने सौकर्याय कालान्तरे श्रौतसूत्रादीनामुत्पत्तिरभूत्।

वेदशब्देन यथा चतस्रो मन्त्रसंहिताः परिग्राह्याः भवन्ति तथैव वैदिकशब्देन वेदोत्तरकालिकसमस्तवैदिकवाङ्मयस्य बोधो भवति। वैदिक-शब्दस्तु वेदविषयकबहुविधसामग्रीणां सूचको द्योतको वा भवति। वेदविषयकसामग्रीपदेनात्र साङ्गवेदब्राह्मणारण्यकोपनिषदादीनां बोधो भवति। वेदाद्भिन्ना अप्येते वैदिकग्रन्थाः वेदोद्धृता एवेति।

अतिव्यापकं विस्तृतञ्चेति वैदिकवाङ्मयम्। इदञ्च सर्वाङ्गपूर्णम्, यतोऽत्र मानवजीवनोद्देश्यभूताः धर्मार्थकाममोक्षाख्याश्चत्वारोऽपि पुरुषार्थाः साधु विवेचिताः। अत एवोक्तं बह्वृक्प्रातिशाख्यभष्ये प्रमाणपारावारपारीणेन श्रीमत्सायणाचार्येण– "विद्यन्ते धर्मादयः पुरुषार्थाः यैस्ते वेदाः।" इति। अत एवोक्तमृग्वेदे– **"सुवीर्याय चर्षणयो मदन्ति"**[१०] इति अर्थात् पुरुषार्थप्राप्त्यर्थमेव मनुष्याः देवान् स्तुवन्ति। अत्र प्रश्नः समुदेति यत् किं नाम पुरुषार्थः? पुरुषस्यार्थः पुरुषार्थः। अर्थशब्दस्यानेकेष्वर्थेषु प्रयोगो भवति यथा– आशयः, प्रयोजनम्, लक्ष्यम्, उद्देश्यम्, अभिलाषा, इच्छेत्यादयः। पुरि शेतेति पुरुषः, तस्य पुरुषस्योद्देश्यम् किम्? इति प्रश्ने कृते सति धर्मार्थकाममोक्षाश्चेत्येते चत्वारः शब्दाः समक्षमागच्छन्ति। अर्थात् तस्य पुरुषस्य सर्वप्रथममुद्देश्यं धर्मप्राप्तिः, धर्मेण च अर्थस्यावगमनम्, अर्थेन कामावाप्तिः, कामेन च मोक्षः; इत्येषां चतुर्णामपि इष्टानां सिद्धिरेव मानवानां लोकाश्रयत्वस्योद्देश्यम्। लोके पुरुषार्थसिद्धिरेव मुख्यं प्रयोजनम्, तेनैव हि जगतः कल्याणमित्यनया दृष्ट्या ऋषिभिर्वेदमन्त्राणां दर्शनं कृतं उपदिष्टं च स्वशिष्येभ्यः।

पुरुषार्थचतुष्टयतत्साधनेत्यनेन प्रयोजनवदर्थावबोधनानुगमनमिति प्रदर्शितं भवति; पुरुषार्थपरत्वं वानुगतम्। धर्मादिषु हि पुरुषार्थत्वमनुगतम्; इष्टसाधनयोरुभयोरपि पुरुषार्थत्वात्। यद्यपि, अर्थकामतदुपायेषु केचिल्लोक-सिद्धास्तथापि, धनेशसुरेशादिविभूतिरूपातिशयितार्थकामतत्साधनानां, लोक-

---

१०. ऋ.– १/१८४/४

सिद्धपशुपुत्रान्नादेश्चित्रादिसाध्यत्वस्य च लौकिकप्रमाणागोचरत्वात् पुरुषार्थचतुष्टयस्य वेदवेद्योक्तिर्युक्ता।

**१. धर्मः–**

अत एवोक्तं भगवता जैमिनिना द्वादशलक्षण्यां मीमांसायाम्– **"वेदवोधितेष्टसाधनताको धर्मः"**[११] इति। अन्यत्रापि च **"यागादिरेव धर्मः"**[१२] **"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः"**[१३] **इति। ऋग्वेदेऽपि– "तानि धर्माणि प्रथमान्यासन्"**[१४], **"प्रप्रजाभिर्जायते धर्मणस्परि"**[१५], इत्यादीनि मन्त्रवचनानि धर्मपदबोधकानि सन्ति। ऋग्वैदिकाः कवयः स्वकीयेन विशिष्टतपोबलेन धर्मस्य साक्षाद्दर्शनं कृतवन्तः। किञ्चार्वाचीनाः ऋषयस्तद्धर्मस्य साक्षाद्दर्शनं कर्तुं नाशक्नुवन्। अपरकालिकानामृषीणामीदृशीं शक्तिहीनतां दृष्ट्वा दयावशेन तैः मन्त्राणामुपदेशः तेभ्यः ग्रन्थतो वाऽर्थत उभयप्रकारेण दत्तः। प्राचीना ऋषयस्तु श्रवणं विनैव धर्माणां साक्षाद्दर्शनं कृतवन्तः। अतः धर्मस्य साक्षाद्दर्शनकर्तृत्वेन तेषामृषित्वं स्वतः सिद्धम् एवासीत्। किञ्चार्वाचीनाः ऋषयस्तु ग्रन्थरूपेणार्थरूपेण च श्रवणं कृतवन्तस्तत्पश्चात्ते धर्मदर्शने कृतकार्या अभूवन्। अतः श्रवणानन्तरदर्शनयेग्यतासम्पादने-नैतेषामृषीणामुपयुक्ताभिधा "श्रुतर्षि" एवाऽभवत्। उक्तं हि यथा **दुर्गाचार्येण–**

"अवरेभ्योऽवरकालिकेभ्यः शक्तिहीनेभ्यः श्रुतर्षिभ्यः। तेषां हि श्रुत्वा तत्पश्चादृषित्वमुपजायते न यथा पूर्वेषां साक्षात्कृतधर्माणां श्रवणमन्तरेणैव।"[१६] एते श्रुतर्षय एव लोकहिताय वेदार्थावबोधनस्योपयोगिनः शिक्षानिरुक्तादि-वेदाङ्गानां रचनां कृतवन्तः।

---

११. मीमांसा परिभाषायाम्- २ पृष्ठे

१२. अर्थसंग्रहे- धर्मलक्षणे-

१३. अर्थसंग्रहे-४ तमे पृष्ठे

१४. ऋग्वेदे- १०/९०/१६

१५. ऋ.- ६/७०/३

१६. निरुक्ते-१/६/२०

**"अङ्ग्यन्ते ज्ञायन्ते अमीभिरित्यङ्गम्"**[१७] इत्यनया व्युत्पत्त्या अङ्गशब्दस्यार्थो भवत्युपकारकः। अर्थाद्येन कस्यापि वस्तुनः स्वरूपज्ञाने साहाय्यं भिवति तदङ्गमित्युच्यते। तत्र वेदस्य मुख्य-प्रयोजनं वैदिककर्म-काण्डस्य यज्ञयागस्य च यथार्थानुष्ठानमस्ति। अस्मिन्नर्थे प्रयुक्तमङ्गं 'कल्प' इति कथ्यते। कल्पस्य व्युत्पत्तिलभ्योऽर्थोऽस्ति– "कल्प्यते समर्थ्यते यागप्रयोगोऽत्र" इति।

ब्राह्मणकाले यागस्य तावान् प्रचारो जातो यत्तेषां यथावज्ज्ञानस्य पूर्णपरिचयप्रदायकग्रन्थानामावश्यकताऽनुभूयते स्म, तामेवावश्यकतां स्वल्पैः शब्दैः पूरयितुं कल्पसूत्राणि विरचितानि। वेदविहितानां कर्मणां व्यवस्थापनं क्रमपूर्वकं कल्पशास्त्रे कल्पितम्। उक्तञ्च– "कल्पो वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्" मुख्यतः कल्पसूत्राणि सन्ति चतुर्विधानि– १. श्रौतसूत्रम्; २. गृह्यसूत्रम्; ३. धर्मसूत्रम्, ४. शुल्बसूत्रञ्चेति।

**१. श्रौतसूत्रम्–** श्रौतसूत्रेषु ब्राह्मणग्रन्थवर्णितानां श्रौताग्निसाध्यानां यज्ञानां क्रमबद्धं वर्णनं वर्तते। यदुक्तं "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति तदनुसृत्य श्रुतिप्रतिपादिताः ये यज्ञास्ते श्रौतयज्ञा इत्युच्यन्ते।

**२. गृह्यसूत्रम्–** गृह्यसूत्रेषु तेषामनुष्ठानामाचारयागानां वर्णनं विद्यते, येषां सम्पादनं त्रैवर्णिकैरवश्यं कर्त्तव्यमिति। षोडशसंस्काराणां विशिष्टं वर्णनमपि गृह्यसूत्रेषु कृतं बोध्यम्। मुख्यतः गृह्यसूत्रे गृह्याग्निसम्बद्धयागानामुप-नयनविवाहश्राद्धादिसंस्काराणां विस्तृतं विवरणं विद्यते।

**३. धर्मसूत्रम्–** धर्मसूत्रेषु धार्मिकनियमाः, प्रजानां राज्ञाञ्च कर्त्तव्यचर्याः, चत्वारो वर्णाः, चत्वार आश्रमाः, तेषां धर्माः पूर्णतया निरूपिताः। एतानि धर्मसूत्राण्येव स्मृतीनां जन्मनेऽकल्पन्त। धर्मसूत्रे चतुर्णां वर्णानामाश्रमाणयाञ्च किञ्च राज्ञामपि कर्त्तव्यानि निर्दिष्टानि सन्ति। इमान्येव त्रीणि वस्तुतः प्रधानानि कल्पसूत्राणि मतानि।

**४. शुल्बसूत्रम्–** चतुर्थं शुल्बसूत्रन्तु वेदिनिर्माणप्रकारं विशेषतः प्रतिपादयति। सूत्रस्यास्य वैज्ञानिकं महत्त्वमस्ति। मुख्यतः शुल्बसूत्रमपि

---

१७. वैदिकवाङ्मयस्येतिहासे वेदाङ्ग परिचये।

कल्पसूत्रमेव, तत् श्रौतसूत्रान्तर्गतम्। शुल्वं मापक्रिया। इदं सूत्रमेव भारतीयज्यामितिशास्त्रस्य प्रवर्त्तकम्। पाश्चात्यैः 'पिथागोरस'– प्रभृतिभिरिदं ज्यामितिशास्त्रं प्रणीतमिति ये कल्पयन्ति, ते शुल्बसूत्रं दृष्ट्वा दृढीकुर्वन्तु यदिदं ज्यामितिशास्त्रं भारतीयैः पाश्चात्यज्यामितिशास्त्रोत्पत्तेर्बहुदिवसपूर्वमेव प्रकटीकृतमिति।

धर्मविदो धर्मं चतुर्षु भागेषु विभजन्ते–१. साधारणधर्मः, २. विशेषधर्मः; ३. असाधारणधर्मः; ४. आपद्धर्मश्च।

**१. साधारण धर्मः–** तत्र साधारणधर्मो दान–तपो–यज्ञभेदेन त्रिविधः स्मृतः, अर्थदान–ब्रह्मदान–अभयदानभेदेन दानमपि तत्र त्रिविधम्; तपोऽपि शरीरतपो, मानसतपो, वाक्तपो भेदेन त्रिविधमस्ति। यज्ञस्य सन्ति अष्टादशभेदाः। तत्र नित्यनैमित्तिककाम्याध्यात्माधिदैवाधिभूतभेदैः। कर्मयज्ञः षड्विधः प्रोक्तः। उपासनायज्ञश्च नवविध उक्तः– १. निर्गुणोपासना, २. सगुणोपासना, ३. अवतारोपासना, ४. ऋषिपितृदेवतोपासना, ५. भूतप्रेतासुराद्युपासना, ६. मन्त्रयोगः, ७. हठयोगः, ८. लययोगः, ९. राजयोगश्च।

श्रवण–मनन–निदिध्यासनभेदेन ज्ञानयज्ञस्त्रिप्रकारकः प्रतिपादितः। इत्थं हि अष्टादशविधा यज्ञा भवन्ति। दानतपोयज्ञानां संख्यायाः सङ्कलनेन चतुर्विंशतिभेदाः सञ्जायन्ते। एषा हि संख्या सात्त्विकत्वादिगुणत्रयत्वात् त्रिगुणीकरणेन द्विसप्ततित्वं याति। द्विसप्ततिभेदं धर्ममिमं पुरो निधाय यदा तत्र दृक्पातः क्रियते तदा जगति न कोऽपि एतादृग् धर्मः समवाप्तो जायते यो नास्मिन् सनातनधर्मेऽन्तर्भूतः स्यात्। सनातनधर्मस्येदं साधारणं स्वरूपं सर्वलोककल्याणकरं महत्त्वं निदधाति।

**२. विशेष धर्मः–** विशेषधर्मो भवति अधिकारिविशेषाणां कृते। तथाहि पुरुषस्य कृते पुरुषधर्मो नार्यः कृते नारी धर्मः। गार्हस्थ्यस्य कृते प्रवृत्तिधर्मः। सन्यासिनां कृते निवृत्तिधर्मः। एवमेव ब्राह्मण–क्षत्रिय–वैश्यादीनां कृते पृथक्–पृथक् धर्मो य उक्तः सो विशेषधर्म इत्युच्यते।

**३. आसाधारण धर्मः–** असाधारण–धर्मस्य विलक्षणताऽन्यैवास्ति। असाधारणधर्मार्थं विशेषयोगशक्तिरात्मबलञ्चापेक्ष्यते। न साधारणा मनुष्यास्तदधिकारिणो भवितुमर्हन्ति। विश्वामित्र–द्रौपदी–प्रभृतयो हि विरला

जनास्तदधिकारिणः पुरा अजनिषत।

**४. आपद्धर्मः**– आपद्धर्मस्यापि चमत्कारोऽन्य एव। स धर्मो भावप्रधानः। विपदि निपत्य जीवः स्वं मुख्यमुद्देश्यं लब्धुं चेत् पापमापद्धर्मत्वेन मत्वाऽऽचरति तदा न स पापभाक्। श्रूयते यत्पुरा बहुवर्षव्यापिनि दुर्भिक्षे सति विश्वामित्रः सारमेयपिशितं जग्राह तेन च बलिवैश्वदेवयज्ञं विधाय भोक्तुं तदुपचक्रमे। आत्मरक्षायै एष आपद्धर्मो धर्मविद्भिर्विहितः। धर्मस्य लक्षणं मनुरेवञ्चकार–

**"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥"**[१८]

यद्यपि "धर्मं जिज्ञास्यमानानां प्रमाणं परमं श्रुति"स्तथापि महाभारतमेवमप्याह–

**"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्॥"**[१९]

श्रुतिमूलो हि धर्मो न कश्चिद्द्वेष्टि। अत एव धर्माचार्याः प्राहुः–

**"श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्यताम्।**
**आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥"**[२०]

धर्मस्योपादेयत्वं महनीयत्वञ्चेत्थं गीतं धर्मज्ञैः–

**"धर्मो विश्वस्य जगतः प्रतिष्ठा**
**लोके धर्मिष्ठे प्रजा उपसर्पन्ति।**
**धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं**
**तस्माद्धर्म एव परमं वदन्ति॥"**[२१]

---

१८. मनुस्मृतौ–६/९२
१९. मनुस्मृतौ–२/१२
२०. व्यासवचनम् उल्लेखः–वै.वा. इति
२१. व्यासवचनम् उल्लेखः–वै.वा. इति–२६० तमे पृष्ठे

व्यासो धर्मस्याहेयत्वे प्राह–

**"न जातु कामान्न भयान्न लोभाद्**
**धर्मं त्यजेज्जीवितस्यापि हेतोः।**
**नित्यो धर्मः सुखदुःखे त्वनित्ये**
**जीवो नित्यो हेतुरस्य त्वनित्यः॥"**[२२]

धर्मस्य निषेवणीयत्वम्महदुपकारकृदित्यत्र व्यास एवमभिदधाति–

**"ऊर्ध्वबाहुर्विरौम्येष न कोऽपीह शृणोति माम्।**
**धर्मादर्थश्च कामश्च तं धर्मं किं न सेवसे॥"**[२३]

धर्मं संरक्ष्य न कोऽपि कदाऽप्यवसीदति, तस्मादेव कारणाद् वेदमनूच्य आचार्योऽन्तेवासिनमनुशास्ति–

**"धर्म चर, धर्मान्न प्रमदितव्यम्।"**[२४]

धर्मसूत्रकारा धर्मस्य यद्रूपमिदमनुसन्दधुस्तद् वस्तुतः श्रेयः प्रेयश्च विश्वम्प्रतिनिदधाति।

## २. अर्थः–

वेदार्थावबोधनं, गवेषणं, मर्मान्वेषणञ्चैका दुर्बोधप्रहेलिकैव। तथाप्यस्याः प्रहेलिकायाः अर्थावबोधनस्योचितोद्योगः वैदिककालादेव समायाति। वेदानां गम्भीरार्थावबोधने प्रथमोद्योगरूपेणास्माकं समक्षे निघण्टुग्रन्थोऽस्ति। तत्र वैदिकपदानां विस्तृतव्याख्याऽस्ति। निघण्टुशब्दस्यार्थो भवति 'शब्दानां सूची' इति। निघण्टुग्रन्थे संहितायाः कठिनाः संदिग्धार्थशब्दाश्चैकत्र समाहृतास्तथा तेषामर्थस्य तत्र सूचना प्राप्यते। समुपलब्धवेदार्थसम्बन्धिग्रन्थेषु निघण्टुरेव वेदार्थस्फुटीकरणस्य प्रथमः प्रयासः परिलक्षितो भवति। निघण्टुकालानन्तरं निरुक्तानां समयः प्रारभते।

श्रूयते यत्पुराऽनेके निरुक्तग्रन्थाः निर्मिता अभवन्। यास्कस्योपलब्ध-निरुक्ते द्वादशनिरुक्तकर्तॄणां नामानि मतानि च निर्दिष्टानि सन्ति। त्रयोदशस्तु

२२. व्यासवचनम्-तत्रैव
२३. व्यासवचनम्-तत्रैव
२४. तै. उप. १/११/१

स्वयं यास्क एवास्ति। यास्कस्य प्राचीनतायां नाऽत्र लेशतोऽपि सन्देहस्यावकाशः। पाणिनेरपि प्राचीनतरोऽयमस्ति। संस्कृतभाषाया यो विकासो यास्कस्य निरुक्ते मिलति स पाणिनेरष्टाध्याय्यां व्याख्यातरूपतः प्राचीनतरोऽस्ति। यास्कस्य निरुक्ते येषां द्वादशाचार्याणां नामान्युपलभ्यन्ते ते यास्कादपि प्राचीना आसन् स्फुटमेवैतद् प्रतिभाति। महाभारतस्य मोक्षपर्वानुसारेण निघण्टोः कर्ता यास्को नाऽऽसीत्। अस्य रचयिता कोऽपि प्रजापतिः काश्यप आसीत्। यथा–

> **"वृषो हिं भगवान् धर्मः ख्यातो लोकेषु भारत।**
> **निघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम्॥**
> **कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते।**
> **तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः॥"**[२५]

ग्रन्थस्यारम्भे यास्को निरुक्तस्य सिद्धान्तस्य वैज्ञानिकं प्रदर्शनमकरोत्। वेदार्थानुशीलनाय तदाऽनेकपक्षा आसन्। येषां नामानि अनेन प्रकारेण प्रदत्तानि सन्ति– १. अधिदैवतम् २. अध्यात्मम् ३. आख्यातसमयः ४. ऐतिहासिकाः ५. नैदानाः ६. नैरुक्ताः ७. परिव्राजकाः ८. याज्ञिकाश्च।

निरुक्तशब्दस्य व्याख्या सायणाचार्यानुसारेण– **"अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्"** इति प्रस्तुतम्। निरुक्ते वैदिक–शब्दानां निरुक्तिरस्ति। निरुक्तिशब्दस्यार्थो भवति व्युत्पत्तिः। निरुक्तस्य सर्वमान्यं मतमिदमस्ति यत्प्रत्येकं शब्दः केनापि धातुना सहावश्यमेव सम्बद्धो भवति। अतो निरुक्तकारः शब्दाना व्युत्पत्तिं प्रदर्शयन्, धातुना सह विभिन्नप्रत्ययानां निर्देशमपि दर्शयति। निरुक्तानुसारेण सर्वे शब्दाः व्युत्पन्नाः भवन्ति।

शब्दानां व्युत्पत्तिर्बहुविधाऽस्ति। दुहिताशब्दस्य व्युत्पत्तिविषये यास्को वदति– दुहिता दुर्हिता। दूरे हिता दोग्धेर्वा।" अर्थात् दूरे विवाहिता दुहिता एव हितकरा भवति अथवा यत्र प्रदत्ता तत्रैवाहितकरा भवति अथवा दोग्धेः– अथवा सा हि नित्यमेव पितुः सकाशाद् द्रव्यं दोग्धि।

निरुक्तं यस्मिन्नाधारे प्रवृत्तं भवति– अर्थात् प्रत्येकं संज्ञापदं

---

२५. महा.मो.पर्व–अ.–३४२, श्लो.–८६–८७.

धातुना व्युत्पन्नोऽभवत्, इत्याधारस्तु नितान्तं वैज्ञानिकमस्ति। वैदिका ऋषयः अस्य शास्त्रस्य सिद्धान्तानां वैज्ञानिकरीत्या निरूपणं कृतवन्तः। यथा–

**"वृत्रं हनति वृत्रहा शतक्रतुः।"[२६]**
**"वृत्रहत्येन वृत्रहा, मघैर्मघोनः"[२७]**
**"स नः शक्रश्चिदाशकत्।"[२८]**

इत्यादिभिर्मन्त्रैः व्युत्पत्तिशास्त्रस्य प्रवृत्तिरपि तैरेव प्रदर्शिता। निरुक्ताकृता यास्केनोक्तम्–

**"स्थाणुरयं भारहारः किलाभूत्**
**अधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत् सकलं भद्रमश्नुते**
**नाकमेति ज्ञानविधूतपाप्मा॥"[२९]**

अर्थात् यः पुरुषो वेदं पठित्वा तस्यार्थं न जानाति सः स्थाणुरिव भारहारी भवति। यो हि पुरुषो वेदार्थं विजानाति स एव समस्तं कल्याणमाप्नोति। ज्ञानेन पापं विनाश्य स्वर्गं प्राप्नोति। भगवता मनुनाऽपि प्रोक्तम्–

**"वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन्।**
**इहैव लोके तिष्ठन् स ब्रह्मभूयाय कल्पते॥"[३०]**

मनुष्याणां हितार्थं सर्वज्ञानप्रकाशनाय ऋगादिवेदरूपं शास्त्रं प्रवृत्तमित्युक्तम्, सोऽयं शास्त्ररूपो वेदः शब्दरूपः अर्थरूपश्चेति द्विधा प्रसिद्धः। तत्रार्थरूपं शास्त्रं ज्ञानात्मकं अनुभवादिरूपम्। शब्दरूपं तु विदित-अनुभूताद्यर्थानुवादकं वाग्रूपमिति विवेकः। तदिदं शब्दशास्त्रमेव स्वार्थावबोधे अनन्यनिरपेक्षं स्वतः सिद्धं प्रत्यक्षं प्रमाणं प्रदीपवदेव। तदेतदुभयविधमपि शास्त्रं विद्याशब्देन व्यवह्रियते, तत्रार्थरूपा विद्या तावत् (वेदश्च) विद्यतेऽनेन तत्त्वं जिज्ञासुभिरिति विद्या (वेदः) इति व्युत्पत्तिसिद्धः

२६. ऋ.– ८/८९/३
२७. ऋ.– ८/२४/२
२८. ऋ.– ८/३२/१२
२९. नि.–१/१६
३०. मनुस्मृतौ–१२/१०२

ज्ञानरूपः, शब्दरूपस्तु वेदयति एवं वाच्यर्थमिति सिद्धा वाग्रूपा। एवं शब्दः तदर्थज्ञानयोरुभयोरपि सदर्थप्रापकत्वेन वेदः विद्या इति संज्ञाद्वयं शास्त्रे लोके च प्रसिद्धम्। तदिदं संज्ञाद्वयमपि अर्थज्ञानरूपस्य शास्त्रस्य मुख्या वृत्त्या प्राप्तम्, शब्दरूपस्य तु गौणवृत्त्येति विशेषः। तत्र ज्ञानरूपविद्याप्रापकत्वात् शब्द-विद्यारूपस्य वेदस्य प्रधानं विद्यात्वमिति केचित्। शब्दविद्याफलरूपत्वात् ज्ञानस्यैव प्रधानं विद्यात्वमित्यन्ये। वाच्यवाचकयोः साध्यसाधनभूतयोः तादात्म्यात् शब्दः तदर्थज्ञानयोरूभयोरपि तुल्यं विद्यात्वमित्यपरे।

लौगाक्षिभास्करेणापि धर्मलक्षणं प्रतिपादयता उक्तम्- **"वेदप्रतिपाद्यः प्रयोजनवदर्थो धर्मः"**[३१] इति। अर्थात् वेदार्थ एव धर्मः, स जिज्ञास्य इति। वेदार्थश्च यागादिः। अत एव यो यागमनुतिष्ठति स धार्मिक इति लौकिकास्समाचक्षते। यथाहि-"श्येनेनाभिचरन् यजेत" इति वेदवाक्येन श्येननामको यागोऽभिचारफलको विहितः। अभिचारश्च शत्रुवधानुकूलव्यापारः। वधश्चानर्थः। तत्फलकत्वाच्छ्येनस्याप्यनर्थत्वम्। वेदप्रतिपाद्यत्वं प्रयोजनवत्त्वञ्चास्तीति श्येनयागोऽपि धर्मस्स्यात्। तद्वारणाय अर्थ इति। आदिपदेन वज्रेषुप्रभृतयो ग्राह्याः। श्येनादेरित्यत्र श्येनपदेन तत्फलत्वेन गम्यमानाभिचारात्मिका वैरिमरणानुकूलशस्त्रघातादिरूपा हिंसा लक्षणयोच्यते। सा च 'न हिंस्यात्' इति निषेधविषया प्रत्यवायसाधनीभूतेति तद्वारणायार्थपदमिति भावः। तस्मात् वेदप्रतिपाद्यत्वे प्रयोजनवत्वे च सत्यर्थत्त्वं धर्मत्वमिति धर्मलक्षणमुपपन्नम्।

यास्कमहोदयेन स्वनिरुक्ते कौत्सनामकाचार्यमतस्योल्लेखः कृतः। तस्य कौत्साचार्यस्य सम्मतिरियमस्ति यन्मन्त्राः निरर्थकाः भवन्ति-**"अनर्थकाः हि मन्त्राः। तदेतेन उपेक्षितव्यम्। यदि मन्त्रार्थप्रत्याय अनर्थं भवतीति कौत्सः।"**[३२]

अस्मिन् विषये यास्कस्य प्रमुखसिद्धान्तोऽस्ति-सर्वे शब्दाः अर्थवन्तः भवन्ति। लोकभाषायामपि सर्वत्रायं नियमोऽस्ति यद् वैदिकमन्त्राणामपि

३१. अर्थसंग्रहे-१/१/१

३२. नि.-१/५

शब्दाः लोकभाषाशब्दान्न भिन्नाः भवन्ति। सुतरां लौकिकशब्दवदेव वैदिकशब्दानामप्यर्थो भवेदित्युचितम्। **"अर्थवन्तः सामान्यात्"** इति।

मन्त्राणामर्थः यदि स्पष्टरूपेण ज्ञातो न भवति तदा तस्य ज्ञानार्थं यत्नः कर्त्तव्यः। निरुक्तग्रन्थेषु शब्दानां धातुभिः सह सम्बन्धं स्थापयित्वाऽर्थविधानस्य समुचिता व्यवस्था कृतेति। स्वदोषं परशिरस्याक्षेपणं कियतांशेन युक्तितरं भवति। **"नैष स्थाणोरपराधो यदेनमन्धो न पश्यति। पुरुषापराधः स भवति। यथा जानपदीषु विद्यातः पुरुषविशेषो भवति। पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति।"**[३३] अनेन रूपेणार्थविवेचकस्य ग्रन्थस्याभ्यासः कर्त्तव्यः। उपयोगिनां ग्रन्थानामभ्यासं विना मन्त्राणामुपरि अनर्थकस्य दोषारोपणं नोचितमिति।

**"अर्थिनो यन्ति चेदर्थम्"**[३४] इत्यनेन ऋङ्मन्त्रेण वेदार्थस्य महत्त्वमुपवर्ण्यते। वेदानामर्थज्ञानस्य षट्सु वेदाङ्गेषु शिक्षा-व्याकरण-निरुक्त-ग्रन्थानां महन्महत्त्वं वर्त्तते। तत्र निरुक्तस्यातिप्राचीनत्वात् पूर्वं तद्व्याख्यानं कृतम्। तानि षडङ्गानि यथा–

**"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः।**
**ज्योतिषामयनं चैव वेदाङ्गानि षडेव तु।।"**

वेदानां समुचितमर्थज्ञानाय षण्णामप्येतेषां वेदाङ्गानामध्ययनमवश्यमेव कर्त्तव्यमिति भगवता पतञ्जलिनाप्युक्तम्–

**"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदाऽध्येयो ज्ञेयश्च।।"**[३५]

तत्र शिक्षाशास्त्रेण वेदमन्त्राणामुच्चारणादिनियमाः ज्ञायन्ते। उदात्तानुदात्तस्वरितादयः स्वराः, तेषां लक्षणं, देवता, वर्णः, स्थानादिकं सम्यक्तया शिक्षाशास्त्रमाध्यमेनैव शक्यते ज्ञातुम्।

वेदानां रक्षकत्वाद्, वेदार्थावबोधने सहायकत्वाद्, प्रकृतिप्रत्ययोपदेशपुरस्सरपदस्वरूपप्रतिष्ठापकत्वादर्थनिर्णयनकृतसाधनेष्वन्यतमसाधनत्वेन

---

३३. नि.–१/५/१

३४. ऋ.– ८/७९/५

३५. महाभाष्ये परस्पशाह्निके

प्रयुक्तत्वाद् व्याकरणं नाम अङ्गं नितान्तमेव महनीयं श्रेष्ठञ्च तदङ्गेषु स्मृतम्।

आचार्यपतञ्जलिः स्वकीये महाभाष्ये लिलेख–

**"बृहस्पतिश्च वक्ता। इन्द्रश्चाध्येता। दिव्यं वर्षसहस्र-मध्ययनकालः। न चान्तं जगाम।"**[36] इति। इत्थमगाधोऽनन्तश्च शब्दार्णवोऽस्ति। व्याकरणानि बहुभिर्वैयाकरणैर्महर्षिभिः प्रणीतानि। तेषु व्याकरणकर्तृषु विद्वत्सत्तमेषु–इन्द्रः, चन्द्रः, काशकृत्स्नः, आपिशलिः, शाकटायनः, पाणिनिः, अमरः, जैनेन्द्रः इत्येतेऽष्टौ सन्ति सुप्रथिताः। अन्येषामपि आचार्याणां व्याकरणानि श्रूयन्ते। यथा– कौमारं, सारस्वतं शाकलञ्च व्याकरणम्।

नानाविधज्ञानविज्ञानप्रतिपादकत्वेनातिगम्भीरं सुविस्तृतं च खलु वैदिकं वाङ्मयमिति नाविदितं विदुषाम्। तस्यैव तद्भागक्रमेण विचारणीयान् विवेचनीयांश्च विषयानधिकृत्य प्रातिशाख्यसाहित्यं पूर्वाचार्यैरस्माकं विनिर्मितम्। प्रातिशाख्यं वेदस्य लक्षणग्रन्थोऽस्ति। शिक्षा–छन्दो–व्याकरणेषु यस्य नियमस्य विधानमस्ति तद्भिन्ननियमानां विधानमस्मिन् शास्त्रे भवति। चतुर्ण्णां वेदानां चत्वारि प्रातिशाख्यानि सन्ति। महर्षिः कात्यायन एषां प्रवर्त्तकः। संक्षेपतः वैदिकव्याकरणसम्बन्धि–पद–प्रयोगनियमानां ज्ञानाय अन्यव्याकरणजन्यज्ञान-सौलभ्याय च प्रातिशाख्यग्रन्थाः प्रणीताः सन्ति।

**३. कामः–**

**"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्।"**[37] अस्य विकारजातस्य सृष्टेः प्रागवस्थायां परमेश्वरस्य मनसि सर्वप्रथमं कामः समवर्तत। सिसृक्षा जातेत्यर्थः। ईश्वरस्य सिसृक्षा वा। कुत इत्याह– मनसोऽन्तःकरणसम्बन्धिवासनाशेषेण मायायां विलीने अन्तःकरणे समवेतम्। सर्वप्राण्यन्तःकरणेषु समवेतमित्यर्थः। एतेनात्मनो गुणाधारत्वं प्रत्याख्यातम्। तादृशं रेतो भाविनः प्रपञ्चस्य बीजभूतं प्रथममतीते कल्पे प्राणिभिः

---

३६. तत्रैव

३७. ऋ.- १०/१२९/४

पुण्यात्मकं कर्म यद्यतः कारणात्सृष्टिसमये आसीत्। भूष्णु वर्णिष्णवजायत परिपक्वं सत्फलोन्मुखमासीदित्यर्थः। तत्ततो हेतोः फलप्रदस्य सर्वसाक्षिणः कर्माध्यक्षस्य परमेश्वरस्य मनसि सिसृक्षाजायतेत्यर्थः। तस्यां च जातायां स्रष्टव्यं पर्यालोच्य ततः सर्वं जगत् सृजति। तथा चाम्नायते– **"सोऽकामयत बहुस्यां प्रजायेयेति स तपस्तप्त्वेदं सर्वमसृजत यदिदं किञ्च"**[३८] इति श्रुत्यात्मनेत्थमवगमितेऽर्थे विद्वदनुभवस्यानुग्राहकत्वेन प्रमाणयति सत इति। सत् शब्देनात्र जगत्कारणं ब्रह्म प्रतिपादितम्। तस्य ब्रह्मणः मनसि कामः समुत्पन्नोऽभूत्। मनसः हृदयेन साक्षात्सम्बन्धत्वाद् मनसि-इत्युक्त्या हृदये इत्युच्यते। हृदयेन हृदयशब्देन चित्तमाचष्टे। अनुज्ञानं च हृदयस्य प्रसादः। एषा हि स्थितिः अन्तर्हृदयवर्तीनि बुद्ध्यादितत्त्वानि। यद्यपि बाह्यहिंसाऽभक्ष्यभक्षणादिषु मूढाः धर्मबुद्ध्या प्रवर्तन्ते तथापि हृदयाक्रोशनं तेषां भवति। वैदिके त्वनुष्ठाने परितुष्यति मनः। श्रुतिषु कर्मणस्त्रैविध्यमुक्तम्- नित्य-नैमित्तिक-काम्यभेदेन। काम्यकर्माणि तानि यत्र किमपि प्राप्तुं वाञ्छा भवति। विषयेऽस्मिन् भगवता मनुनाऽपि प्रोक्तम्–

**"कामात्मता न प्रशस्ता न चैवेहास्त्यकामता।**
**काम्यो हि वेदाधिगमः कर्मयोगश्च वैदिकः॥"**[३९]

अर्थात् फलाभिलाषशीलत्वं पुरुषस्य कामात्मता। सा न प्रशस्ता बन्धहेतुत्वात्। स्वर्गादिफलाभिलाषया काम्यानि कर्माण्यनुष्ठीयमानानि पुनर्जन्मने कारणं भवन्ति। नित्य-नैमित्तिकानि त्वात्मज्ञानसहकारितया मोक्षाय कल्पन्ते। न पुनरिच्छामात्रमनेन निषिध्यते। तदाह– "न चैवेहास्त्यकामता" इति। यतो वेदस्वीकरणं वैदिकसकलधर्मसम्बन्धश्चेच्छाविषयकमेव। अत्रोपपत्तिमाह–

**"सङ्कल्पमूलः कामो वै यज्ञाः संकल्पसंभवाः।**
**व्रतानि यमधर्माश्च सर्वे संकल्पजाः स्मृताः॥"**[४०]

अर्थादनेन कर्मणेदमिष्टं फलं साध्यत इत्येवंविषया बुद्धिः संकल्पः, तदनन्तरमिष्टसाधनतयावगते तस्मिन्निच्छा जायते, तदर्थं प्रयत्नं कुरुते

---

३८. तै.आ.-८/६

३९. मनु.-२/२

४०. मनु.-२/३

चेत्येवं यज्ञाः संकल्पप्रभवाः, व्रतानि, यमरूपाश्च धर्माः। सर्व इत्यनेन पदेन अन्येऽपि शास्त्रार्थाः संकल्पादेव जायन्ते। इच्छामन्तरेण तान्यपि न संभवन्तीत्यर्थः। लोके या काचिद्भोजनगमनादिक्रिया साप्यनिच्छतो न कदाचिद् दृश्यते। ततश्च सर्वं लौकिकं वैदिकं च यद्यत्पुरुषः कुरुते तत्तदिच्छाकार्यम्।

नात्रेच्छा निषिध्यते किन्तु शास्त्रोक्तकर्मसु सम्यग् वृत्तिर्विधीयते। बन्धहेतुफलाभिलाषं विना शास्त्रीयकर्मणामनुष्ठानं तेषु सम्यग्वृत्तिः सम्यग्-वर्त्तमानोऽमरलोकताममरधर्मकं ब्रह्मभावं गच्छति- मोक्षं (स्वर्गम्) प्राप्नोतीत्यर्थः। तथाभूतश्च सर्वेश्वरत्वादिहापि लोके सर्वानभिलषितान्प्राप्नोति। तथा च छान्दोग्ये–

**"स यदि पितृलोककामो भवति**
**संकल्पादेवास्य, पितरः समुत्तिष्ठन्ति।"**[४१]

लौगाक्षिभास्करेणाप्यर्थसंग्रहे आर्थीभावनाया अंशत्रयमुक्तम्-साध्यम्-साधनम्-इतिकर्त्तव्यताञ्च। किं भावयेत्? केन भावयेत्? कथं भावयेत्? इति। तत्र साध्याकाङ्क्षायाम् स्वर्गादिफलं साध्यत्वेनान्वेति। साधनाकाङ्क्षायां यागादि; करणत्वेनान्वेति। इतिकर्त्तव्यताकाङ्क्षायां प्रधानाद्यङ्गजातमिति-कर्त्तव्यतात्वेनान्वेति।

काम्ययज्ञानां बहूनां लौकिक-पारलौकिकसुखसम्प्राप्त्यर्थं श्रुतिषु विधानान्युपलभ्यन्ते। यथा– **"दर्शपूर्णमासाभ्यां यजेत् स्वर्गकामः"**[४२] **स्वर्गकामो ज्योतिष्टोमेन यजेत"**[४३], **"अग्निहोत्रं जुहुयात् स्वर्गकामः"**[४४], **"वैश्वदेवीं सांग्रहणीं निर्वपेद् ग्रामकामः"**[४५] **"दध्नेन्द्रियकामस्य"**[४६] **"सौर्य चरुं निर्वपेद् ब्रह्मवर्चसकामः"**[४७], **"उद्भिदा यजेत्**

---

४१. छा.उ.-८/२/१
४२. अर्थसंग्रहे-११८ तमे पृष्ठे
४३. अर्थसंग्रहे- पृ. ४२
४४. अर्थसंग्रहे- पृ. ३६
४५. तै.सं.-२/३/९/२
४६. तै.ब्रा.-२/१/५/६
४७. अर्थसंग्रहे-पृ.-४६

**पशुकामः"**[४८], **"वायव्यं श्वेतमालभेत भूतिकामः"**[४९] इत्यादयोऽनेके काम्यप्रयोगाः प्राप्यन्ते।

**४. मोक्षः–**

**"वेदाभ्यासस्तपोज्ञानमिन्द्रियाणां च संयमः।**
**अहिंसा गुरुसेवा च निःश्रेयसकरं परम्॥"**[५०]

अर्थादुपनिषदादेर्वेदस्य ग्रन्थतोऽर्थतश्चावर्तनं वेदाभ्यासः, तपः कृच्छ्रादि, ज्ञानं ब्रह्मविषयं, इन्द्रियजयः, अविहितहिंसावर्जनं, गुरुशुश्रूषेत्येतत्प्रकृष्टं मोक्षसाधनम्। निःश्रेयसं मोक्षस्तदर्थं कर्म नैःश्रेयसिकं संसार-निवृत्तिहेतुत्वान्नि-वृत्ताख्यमित्येवं वैदिकं कर्म द्विप्रकारकं वेदितव्यम्। दृष्टादृष्टफलकामनारहितं पुनर्ब्रह्मज्ञानाभ्यासपूर्वकं संसारनिवृत्तिहेतुत्वान्निवृत्तमित्युच्यते। निवृत्तकर्माभ्यासेन पुनः शरीरारम्भकानि पञ्चभूतान्यतिक्रामति। मोक्षं प्राप्नोतीत्यर्थः।

सर्वभूतेषु स्थावरजङ्गमात्मकेष्वहमेवात्मरूपेणास्मि **"सर्वं खल्विदं ब्रह्म"**[५१] इति उपासीत, तथा च सर्वाणि भूतानि परमात्मपरिणामसिद्धानि मय्येव परमात्मन्यासत इति सामान्येन जानन्नात्मयाजी ब्रह्मार्पणन्यायेन[५२] ज्योष्टोमादि कुर्वन् स्वेन राजते प्रकाशत इति स्वराट् ब्रह्म तस्य भावः स्वाराज्यं ब्रह्मत्वं लभते। मोक्षमाप्नोतीत्यर्थः। तथा च श्रुतिः–**"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजिगुप्सते"**[५३] इति।

**"अविद्यानिवृत्तिरेव मोक्षः"** इत्युक्तं भगवच्छंकराचार्यपादैः ब्रह्मसूत्रभाष्ये। सा चाविद्या ब्रह्मविज्ञानादेव भवतीति तदभ्युपगम्यते। ब्रह्मविषये तु ऋगभिवदति–

---

४८. ता.ब्रा.–१९/७/२
४९. अर्थसंग्रहे–पृ.–२७
५०. मनु.–१२/३१
५१. छा.–३/१४/१
५२. गीता–४/२४
५३. यजु.–४०/६

**"एकं वा इदं विबभूम सर्वम्"**[५४] तद् ब्रह्म एकलं सत् एवैतत् सर्वमभवत्। अत एवोक्तं हिरण्यगर्भ सूक्ते–**"भूतस्य जातः पतिरेक आसीत्"**[५५] अर्थात् स परमात्मा उत्पद्य सर्वप्राणिनः एकमात्रमेवेश्वरः आसीत्। स एव ब्रह्म पुरुषसूक्ते–**"सहस्त्रशीर्षा सहस्त्राक्षः सहस्त्र-पाच्चोक्तः।"**[५६]

यः खलु परमात्मा स्वयं नित्यसिद्धः, अस्माकं सर्वेषामपि पितृस्थानीयः सर्वसाक्षी स्वयं यज्ञरूपः सन्, सर्वं यज्ञं यजमानः निर्विशेषः प्रत्यग्दृशा आत्मन्येवान्तर्विलीनः "मौनीव" सर्वथा अनेकव्यपदेशास्पदीभूतः, इमानि परिदृश्यमानानि सर्वाण्यपि भूतानि तदानीं तु केवलं ब्रह्मात्मना बीजरूपेणावशिष्टानि, उत्तरत्र बहिर्विसृज्यमानानि स्वीये यज्ञीये केवले प्रज्ञानरूपे तपेऽग्नौ आजुहाव, तथा अन्ततः आत्मानमपि तस्मिन्नेव तपेऽग्नौ जुह्वांचकार। यज्ञमुखेनैव विश्वं विसृज्यय स्वयं यजमान इव प्रज्ञानेन स्वरूपेण प्रज्वलन्नेव आसीत्, तस्मिन् स्वीये केवले प्रज्ञाने एव विश्वं भावयामास।

स परमः पुरुषः स्वयं न जातः, तथा कदाचिदपि न जायमानः, न च पुनर्जनिष्यमाणोऽपि, विश्वविभूतियोगेन सर्वज्ञानक्रियाशक्तियोगाच्च एक एव बहुधा नामभिः रूपैश्च युक्तः सन् प्रकाशते।

वेदशास्त्रं नित्यं सर्वभूतानि धारयति। तथा च 'हविरग्नौ हूयते सोऽग्निरादित्यमुपसर्पति तत्सूर्यो रश्मिभिर्वर्षति तेनान्नं भवति अथेह भूतानामुत्पत्तिस्थितिश्चेति हविर्जायते।' तस्माद्वेदशास्त्रमस्य जन्तोर्वैदिक-कर्माधिकारिपुरुषस्य प्रकृष्टं पुरुषार्थसाधनं जानन्ति। पुरुषार्थं विना जीवनं निरर्थकमिति प्राह–

**"धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।**
**अजागलस्तनस्येव तस्य जन्म निरर्थकम्।।"**[५७]

---

५४. ऋ.–८/५८/२

५५. ऋ.–१०/१२१/१

५६. ऋ.–१०/९०/१

५७. हितोपदेश प्रस्ताविकायाम्–श्लोक–२६

एषां चतुर्णामपि पुरुषार्थानां लौकिक-वैदिकभेदेनेह द्विविधं स्वरूपमुच्यते। तत्र वैदिकं स्वरूपं तु पूर्वं बहूक्तं लौकिकं किञ्चिद् प्रकाशते। 'धृञ्' धारणाद्धातोः धर्मशब्दो जीवैर्यद्यद्धार्यते तत्तस्य धर्मः यथा कश्चिद्यज्ञं धारयति यज्ञ एव तस्य धर्मः, कश्चिदध्ययनं धारयति अध्ययनमेव तस्य धर्मः, कश्चिद्दानं धारयति दानम् एव तस्य धर्मः, कश्चित्तपः धारयति तप एव तस्य धर्मः, कश्चित्सत्यं धारयति सत्य एव तस्य धर्मः, कश्चिद् धृतिं धारयति धृतिरेव तस्य धर्मः, कश्चित् क्षमां धारयति क्षमा एव तस्य धर्मः, कश्चिदलोभं धारयति अलोभ एव तस्य धर्मः।

एवंविधं धर्मस्याष्टौ मार्गाण्युक्तानि। यथा-

**"इज्याऽध्ययनदानानि तपः सत्यं धृतिः क्षमा।**
**अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः॥"**[५८]

एषु धर्मस्याष्टवर्गेषु पूर्वश्चत्वारः कदाचिद्दम्भार्थमपि सेव्यते, परमुत्तरश्चतुर्वर्गः केवलं महात्मन्येव तिष्ठतीत्यपि तत्रैवोक्तम्। एवमुक्तप्रकारेण धर्मो व्याख्यातो लोके।

अर्थशब्दोऽत्र (लोके) धनशब्देनावबुध्यते। यथा-

**"धनवान् बलवाँल्लोके सर्वः सर्वत्र सर्वदा।**
**प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते॥"**[५९]

संसारे सर्वत्रेवमेवावलोक्यते यद्धनेनैव मनुष्यो बलवान् भवति। यदि कश्चिदत्र नृपो भवति तत्रापि धनमेव तस्य नृपत्वस्य मूलं भवति। यस्य पार्श्वे धनानि सन्ति स एव महान् उक्तः। यथा-

**"धनेन बलवाँल्लोके धनाद्भवति पण्डितः।"**[६०]

अर्थात् धनेनैव मनुष्यो बलवान् अपि भवति पण्डितोऽपि भवति। धनवान् सदा धनहीनेषु प्रभुत्वात् पूजितो भवति। एवमेव तत्र लौकिके शास्त्रे धनस्य महत्त्वं स्थापितमस्ति। धनहीनजीवनस्य निन्दा तथा वर्णिताऽस्ति

---

५८. हितोपदेशे मित्रलाभे- श्लोक-८

५९. तत्रैव-श्लोक- १२३

६०. तत्रैव-श्लोक-१२४

यद्दृष्ट्वा एवं प्रतीयते यद् धनवान् एव भगवान्, धनहीनानां तु क्वापि गतिरेव नास्ति। अत एवोक्तं–**"धनाद्धर्मं ततः सुखम्"**[६१] धनेनैव सुखमपि प्राप्तुं शक्यते। धनं विना तु जीवनं व्यर्थमेव। कामशब्दोऽत्र शारीरिक-सुखेनोपवर्णितः। नाऽत्र स्वर्गकामः, नाऽत्र राष्ट्रकामः। लौकिके तु केवलं इन्द्रियजन्यं सुखमेव कामशब्दपरिचायकम्। यद्यप्यस्य सर्वत्र निषेध एव कृतोऽस्ति।

मोक्षस्तु मरणादेवोपलभ्यते, मरणानन्तरं मोक्षप्राप्तिर्भवति न वा भवति इति को जानीते? तथापि मोक्षप्राप्तिरत्यन्तदुष्करेति मत्वा जनाः तद्विषये तथा चिन्तापराः न भवन्ति।

वैदिके काले मोक्षस्तु ज्ञानमाध्यमेनाविद्यायाः निवृत्ति-द्वारा लभ्यते स्म। इदानीमविद्यारहितत्वमतीव कठिनम्। सर्वेऽपि मनुष्याः अविद्यायां तथोपलिप्ताः सन्ति यत्ततो निवृत्तिस्तु मरणानन्तरमेव संभवति। अत एवेदानीं मरणात् अविद्याया निवृत्तिरेव मोक्ष इत्युक्तम्।

यदुक्तं पुरुषार्थचतुष्टयं तत्र धर्मार्थौ श्रेयोरूपेणाभिधीयेते कामहेतुत्वा-दिति केचिदाचार्या मन्यन्ते। अन्ये त्वर्थकामौ सुखहेतुत्वाच्छ्रेयोऽभिगीयते। धर्म एवेत्यपरे, अर्थकामयोरप्युपायत्वात्। अर्थ एवेह लोके श्रेय इत्यन्ये, धर्मकामयोरपि साधनत्वात्। सम्प्रति स्वमतमाह– धर्मार्थकामात्मकः परस्पराविरुद्धस्त्रिवर्ग एव पुरुषार्थतया श्रेय इति विनिश्चयः। एवञ्च बुभुक्षूणां प्रत्युपदेशो न मुमुक्षूणाम्। मुमुक्षूणां तु मोक्ष एव श्रेय इति। यथोक्तं भगवता मनुना–

> **"धर्मार्थावुच्यते श्रेयः कामार्थौ धर्म एव च।**
> **अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः॥"**[६२] २/२२४

तत्रात्मपरिश्रमं विना देवानां मैत्रीं प्राप्तुं न शक्यतेति ऋगभिवदति–**"न ऋते श्रान्तस्य सख्याय देवाः"**[६३] इति। अस्य भावस्यावबोधनं तदनुकूला-चरणञ्च सांसारिकेभ्यो हिताय कल्याणसाधनाय च भवति। वेदे विश्वबन्धुत्वस्य

---

६१. हि. प्रस्ताविकायां-श्लोक-६

६२. मनु.-२/२२४

६३. ऋ.-४/३३/११

परिकल्पना एकं विलक्षणं वस्त्वस्ति। वेदो मानवमात्रेभ्यः कल्याणकरीं भावनामग्रेसारयति। वैदिकप्रार्थनासु न केवलं व्यष्ट्यै अपितु समष्ट्यै माङ्गलिकभावनायाः स्पष्टं विशदञ्च निदर्शनमस्ति। वैदिकऋषिर्लोक-कल्याणाय मंगलाय च प्रार्थनां करोति। मन्त्राणां प्रामाण्यमेवास्मिन् विषये अक्षुण्णमस्ति–

> "विश्वानि देवसतिवर्दुरितानि परासुव।
> यद्भद्रं तन्न आसुव॥"[६४]

> "समानी व आकूतिः समाना हृदयानि वः।
> समानमस्तु वो मनो यथा वः सुसहासति॥"[६५]

इति दिक्।

६४. ऋ.–५/८२/५
६५. ऋ.–१०/१९१/४

## नवमोऽध्यायः

# परवर्तिसंस्कृतसाहित्ये वैदिकऋषीणां जीवनप्रभावः

असारे खल्वस्मिन् संसारे विविधाः सागराः विद्यन्ते। तेषु सागरेषु विविधरसधारामात्मसात्कुर्वन् दृश्यतेऽयं साहित्यसागरः। यदा कदापि साहित्यशब्दस्य चर्चा क्रियते तदा सर्वप्रथमं वैदिक-साहित्यस्य नाम गौरवतया गृह्यते जनैः।

'विद् ज्ञाने' इति ज्ञानार्थकाद् विद्धातोर्घञि प्रत्यये कृते वेदशब्दो निष्पद्यते। एवं वेदशब्दो ज्ञानार्थकः। ज्ञानराशिर्वेद इति वक्तुं शक्यते। वेदा ज्ञानराशित्वात् शाश्वतस्थायिनः, संस्कृतेराधारभूताः, विश्वहितसम्पादकाः, ज्ञानालोकप्रसारकाश्च सन्ति। सेयं वेदवाणी ईश्वरवाणीति प्राञ्चः सर्वे एव विद्वांसः स्वीकुर्वन्ति।

**"वेदोऽखिलो धर्ममूलम्"**[१] इत्युद्घोषयता मनुना समग्रस्यापि वेदनिधेर्धर्माधाररूपेण प्रतिष्ठा विहिता। अत एव वेदा आचारसंहितारूपेण प्रमाणीक्रियन्ते। **"सर्वज्ञानमयो हि सः"**[२] इति वदता मनुना वेदानां सर्वविधज्ञाननिधानत्वमुररीकृतम्।

सोऽयं वेदः वेदत्वेन सन्नपि एकः, विषयभेदात् चत्वारः सञ्जाताः ऋग्यजुस्सामाथर्वाख्याः। वैदिके साहित्ये वेदाः, ब्राह्मणानि, वेदाङ्गानि, उपनिषदः, आरण्यकाणि, दर्शनानि, निगमतन्त्रादीनि च सङ्गृह्यन्ते। लौकिके साहित्ये पुनः रामायणादारभ्य अद्यावधिप्रणीतानि महाकाव्यखण्ड-काव्यनाटकगद्यपद्यचम्पूपन्यासादीनि परिगण्यन्ते। समग्रस्यापि लौकिकसंस्कृत-साहित्यस्यादिस्रोतसि भगवति वेद एव सर्वतः प्राक् कवि-काव्यशब्दयोश्च

१. मनु. २/६

२. मनु. २/७

समुल्लेखः समुपलभ्यते। तद्यथा– **"कविर्मनीषी परिभूः स्वयम्भूः"**[३] इति। कविशब्दोऽत्र आदिकविं परमेश्वरमेव परामृशति। परमेश्वरीयज्ञानलक्षणं वेदञ्चापि काव्यत्वेनैवानुगृह्णाति श्रुतिः–

**"पश्य देवस्य काव्यं न ममार न जीर्यति" इति।**[४]

देवस्य काव्यमित्यत्र काव्यपदं वेदमेवाभिधत्ते। इत्यनेनैतदभ्युपपन्नं भवति यत्कविभिः काव्यकलाप्रेरणा किल वेदेभ्य एव समासादिता। वेदेभ्य एव छन्दसां परिज्ञानं, अलङ्काराणाञ्च परिचयः समाकलितः।

वेदे यत्र गायत्री–त्रिष्टुब्–जगतीप्रभृतिछन्दसां प्रयोगः तत्र लौकिक–साहित्ये तद्भिन्नतत्सदृशानां उपजाति–वंशस्थ–अनुष्टुबादिच्छन्दसां प्रसरः समुल्लसति। वस्तुतः स एष वैदिकच्छन्दसां प्रपञ्च एव लौकिकच्छन्दसामपि प्रसवभूरित्यशङ्कम्। किं बहुना कविकुलगुरुकालिदासप्रणीते अभिज्ञानशाकुन्तले स्नानोत्तीर्णः कण्वः ऋक्च्छन्दसाऽऽशास्ते–

**"अमीं वेदिं परितः क्लृप्तधिष्ण्याः**
**समिद्वन्तः प्रान्तसंसतीर्णदर्भाः।**
**अपघ्नन्तो दुरितं हव्यगन्धैर्वै–**
**तानास्त्वां वह्नयः पावयन्तु॥"**[५]

काव्यशास्त्रीयदृष्ट्याऽपि वेदानां महत्त्वं प्रशस्यम्। तत्रानुप्रास–यमकरूपकोपमातिशयोक्तिदृष्टान्तार्थान्तरन्यासव्यतिरेकोत्प्रेक्षाप्रभृतीनां प्रायशः सर्वेषामेव प्रमुखानामलङ्काराणां प्रयोगोऽनेकत्रातिरमणीयतया समाविष्टोऽवगम्यते। उषःसूक्ते उषसो वर्णने कवित्वस्य स्फुटं दर्शनं जायते। तत्र सुन्दरी युवतिः स्ववस्त्राणीव उषा स्वीयं सौन्दर्यं विस्तारयति। निखिलेऽपि भुवने तस्याः सौन्दर्यम् आह्लादकारि व्याप्नोति। वेदे समाविष्टा ईदृशा एवालङ्काराः परवर्तिसंस्कृतकाव्येष्वपि रमणीयतया निबद्धाः दृश्यन्ते। इत्थं लौकिक–कविभिः काव्यकलाप्रेरणा किल वेदेभ्य एव समासादिता। वेदेषु या शाश्वती विचारधारा प्रवाहिता वर्त्तते सा एव किल परवर्तिसंस्कृतकाव्येष्वपि

---

३. शु.य.सं. ४०/८

४. अथर्व. सं. १०/८/३२

५. अभिज्ञानशाकुन्तले–४/८

प्रवहमाणा दृश्यते, इत्यत्र नास्ति सन्देहलवोऽपि।

किं नाम पुनः काव्यमिति जिज्ञासायामुच्यते **"कवेः कर्म काव्यम्।"** कविशब्दात् कर्मणि ष्यञि कृते काव्यशब्दो निष्पद्यते। काव्यलक्षणमुद्दिश्य यद्यपि आचार्या बहुशो भिद्यन्ते। तैश्च काव्यलक्ष्मविधायिभिराचार्यैर्विविधानि लक्षणानि प्रतिपादितानि। तथापि समेषामेषां विभिन्नलक्षणत्वेन प्रतिभासमानानामपि तात्पर्यविषयीभूतोऽर्थः समान एव तच्च काव्यं हि तद् यददोषौ सगुणौ सालङ्कारौ शब्दार्थौ, नाम। तच्चेदं काव्यं श्रव्य-दृश्यभेदाद् द्विविधम्। तत्र श्रव्यकाव्यम्महाकाव्यखण्डकाव्यगीतिकाव्यभेदात्त्रिविधम्। दृश्यकाव्यन्तु पुनः नाटकप्रकरणादिभेदभिन्नमभिनेयरूपं दशविधम्। एतच्च किल काव्यं पुनर्गद्यपद्यमिश्रभेदात् त्रिविधम्। विविधभेदविभक्तेषु प्रायशः सर्वेष्वपि संस्कृतकाव्येषु वैदिककवीनां जीवनस्य भूयान् प्रभावोऽस्ति, इत्यत्र नास्ति संदेहस्यावसरः। तस्य प्रभावस्यान्वेषणं कर्त्तव्यमिति विचार्य एव परवर्ति- संस्कृतसाहित्यस्य कवीनां लेखकानां च कतिपयेषु काव्येषु वैदिककवीनां कर्तृत्वस्य कीदृशः प्रभावो जातस्तत् पश्यामः। यद्यपि संस्कृतसाहित्यस्य क्षेत्रमतिविस्तृतमपारमगाधञ्चास्ति। अत एव सर्वेषां लेखाकानां-कवीनामत्रोल्लेखो न सम्भाव्यते, तथापि कतिपयप्रसिद्धानां-व्यास-वाल्मीकि-भारवि- कालिदासादीनां साहित्ये वैदिकचिन्तनस्य प्रभावः प्रस्तूयते। तद्यथा-

**कृष्णद्वैपायनवेदव्यासकृतपौराणिकाख्यानोपाख्यानेषु ऋग्वैदिककवीनां जीवनप्रभावः-**

भारतीयपरम्परानुसारं चतुर्दशविद्याः सुविख्याताः सन्ति। यथा-

**"अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः।**
**धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश।।"**

आसु विद्यासु पुराणसाहित्यस्य स्थानं महत्त्वपूर्णं वर्तते। विष्णुपुराणे पुराणसंहितायां समाविष्टविषयाणां विषये उक्तमस्ति यद्-

**"आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः।**
**पुराणसंहिता चक्रे पुराणार्थविशारदः।।"[६]**

६. विष्णुपुराणे-३/६/१५

कथनस्याभिप्रायोऽयमस्ति यत् पुराणलक्षणान्तर्गतं सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितातिरिक्तम् आख्यानोपाख्यानगाथाकल्पशुद्धिश्चापि पुराणेषु समाविष्टम्। एषां समेषामपि पौराणिकविषयाणामवतारवादिसिद्धान्तप्रतिपादने उपयोगो विहितोऽस्ति। सम्पुष्ट्यर्थमत्र कतिचनोदाहरणानि प्रस्तूयन्ते। यथा–

### मत्स्यावतारः

मत्स्यावतारस्य या कथा पुराणेष्वाख्याता तथैवाख्यानं शतपथब्राह्मणेऽप्युपलभ्यते। यथा– **"मनुः ह वै प्रातः मत्स्यं पाणौ आपेदे। स हास्मै वाचमुवाच विभृहि मां पारयिष्यामि त्वेति। कस्मान्मां पारयिष्यसीति? औघ इमाः सर्वाः प्रजाः निर्वोढा ततस्त्वां पारयिष्यामीति।"**[७] अमुमेवाख्यानमाश्रित्य मत्स्यपुराणे श्रीमद्भागवते[८] च महर्षिव्यासेन कथा प्रणीतेति वक्तुं शक्यते।

### कूर्मावतारः

कूर्मपुराणे, ब्रह्माण्डपुराणे, मत्स्यपुराणे, वायुपुराणे, वामनपुराणे, श्रीमद्भागवते च कूर्मस्य पर्याप्ता चर्चा दृश्यते। इदमेव भारतवर्षं कूर्मपुरुषः इदमेव कूर्मसंस्थानम्। अस्यैव कूर्मपुरुषस्य **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"**[९] इत्यनेन मन्त्रवाक्येन वर्णनम् ऋग्वेदे दृश्यते। इदमेव जगद्धारकम्। इदमेव समस्तं जगद्धारयति। भारतस्याद्यतनीनापि आकृतिः कच्छपाकारा एव। शतपथब्राह्मणोऽपि तथ्यमेतत्समर्थयति–

> **"स तत् कूर्मो नाम एतद् वै रूपं**
> **कृत्वा प्रजापतिः प्रजा असृजत्।।"**[१०]

तैत्तिरीयारण्यके प्रसङ्गोऽयं विस्तृतेन विवेचितः। यथा– **"अन्तरतः कूर्म्मभूतपर्यन्तं तमब्रवीत्– मम वैत्वङ्मांसात्समभूत्। नेत्यब्रवीत्। पूर्वमेवाहमासमिति। तत्पुरुषस्य पुरुषत्वम्। स सहस्रशीर्षा पुरुषः**

---

७. श.प.ब्रा.–१/८/१/१

८. श्रीमद्भागवते–८/२४

९. ऋ.–१०/९०/१

१०. श.प.ब्रा.–७/५/१/५

**सहस्राक्षः सहस्रपात् भूत्वोदतिष्ठत्।।"**[११]

वैदिकमतानुसारेण प्रजापतेर्ब्रह्मणः शरीरात् समुद्भूतो रसो यदा कम्पमानो भूत्वा कूर्म्माकारं धृत्वा उदतिष्ठत्तदा ब्रह्मणा पृष्टः स कूर्म्मोऽवदत्-यदहं पूर्वमेवासमिति। अहमेव पुरुषोऽस्मि पुरातिष्ठतीति पुरुषः। स एव पुरुषः सहस्रशीर्षा सहस्राक्षः सहस्रपादिति विशेषणैः ऋषिभिः संस्तुतः।

## वामनावतारः

अस्यावतारवादस्य प्रसङ्गः ऋग्वेदस्थविष्णुसूक्तस्यानेकेषु मन्त्रेषु व्याख्यातोऽस्ति। यथा–

**"इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।"**[१२]

**"त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः।**
**अतो धर्माणि धारयन्।"**[१३]

शतपथब्राह्मणेऽप्यस्यावतारस्य विशेषोल्लेखः प्राप्यते।[१४]–श्रीमद्भागवतस्याष्टमे स्कन्धे वामनावतारस्य वर्णनं राजा बलिप्रसङ्गे लभ्यते। यदा नृपो बलिः देवान् विजित्य तान् स्वर्गलोकात् बहिः अकरोत् तदा भगवान् विष्णुः मातुरदितेः गर्भादुत्पद्य वामनरूपं धृत्वा भिक्षार्थं बलेः पार्श्वं गतवान्।

## रामावतारः

'इक्ष्वाकु' शब्दस्य चर्चा ऋग्वेदस्य दशमण्डलस्य षष्टितमे सूक्ते आगताऽस्ति।[१५] दशरथशब्दोऽपि दानस्तुतौ **"चत्वारिंशद् दशरथस्य शोणाः सहस्रस्याग्रे नमन्ति"**[१६] प्राप्यते। सीताशब्दोऽपि ऋग्वेदे उल्लिखितोऽस्ति। यथा–

---

११. तैत्तिरीयारण्यके-१/२३/३

१२. ऋ.-१/२२/१७

१३. ऋ.-१/२२/१८

१४. श.प.ब्रा.-१/२/५-७

१५. ऋ.-१०/६०/४

१६. ऋ.-१/१२६/४

**"अर्वाची सुभगे भव सीते वन्दामहे त्वा।"[१७]**

**तथा "इन्द्रः सीतां निगृह्णातु"[१८]** इति।

**"उर्वशीपुरूरवसोराख्यानम्"**

ऋग्वेदे उर्वशीपुरूरवसोराख्यानमत्यन्तं महत्त्वपूर्णमस्ति। अस्य आख्यानस्य विष्णुपुराणे,[१९] हरिवंशपुराणे,[२०] श्रीमद्‌भागवते[२१] च विस्तृतं वर्णनमुपलभ्यते।

इत्थमनेकविधदृष्ट्याऽवलोकनेन ज्ञायते यत् पुराणेषु वर्णितानि आख्यानोपाख्यानानि वैदिककवीनां मन्त्रवचनैः संगृहीतानि सन्ति।

**अतः परं वाल्मीकीय-रामकथायां ऋग्वेदस्य प्रभावः दृश्यताम्–**

चतुःशतवर्षपूर्वजातेन नीलकण्ठेन पण्डितप्रवरेण मन्त्ररामायणमिति नामधेयो ग्रन्थो व्यरचि। ग्रन्थेऽस्मिन् ऋग्वेदस्य १५५ मन्त्रानुद्धृत्य तेषां भाष्यरूपेण सकला रामायणी कथा प्रतिपादिता। यथा च–

**"भद्रो भद्रया सचमान आगात् स्वसारं जारो अभ्येति पश्चाद्।**
**सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन् रुशद्भिर्वर्णैरभिराममस्थात्।।"[२२]**

भद्रः=रामभद्रः सीतया सह, सचमानः सज्जमानः, आगात्= दण्डकारण्यमित्यर्थः। स्वसारम्=अङ्गुलयः स्वसारः तद्वन्तं सीतायाः पाणिगृहीतुं, जारो=रावणः, पश्चाद्=रामस्य परोक्षे, अभ्येति=आगतः। ततो रावणे हते सति 'जाया गार्हपत्य' इति श्रुतेः। जायासहचरोऽग्निः द्युभिः=द्युलोकसाधनतया द्युशब्दवाच्यः, रामदारैः सह रामं=रामस्याभिमुखम्, अस्थात्=स्थितवान्..... इत्यादि। तथा च–

---

१७. ऋ.–४/५७/६
१८. ऋ.–४/५७/७
१९. विष्णु पु.–४/६
२०. हरि. पु.–१/२६
२१. श्रीमद्भा.–९/१४
२२. ऋ.–१०/३/३

**"ते ऽवदन् प्रथमा ब्रह्मकिल्बिषेऽकूपारः सलिलो मातरिश्वा।**
**वीडहुरास्तप उग्रो मयोभूरापो देवीः प्रथमजा ऋतेन॥"**[२३]

ते प्रसिद्धा ऋषयो अग्निना आनीतायाः सीतायाः ब्रह्मकिल्बिषे=ब्रह्मचर्यक्षरणाख्ये दोषे विषये ऋतेन सत्यशपथेन अवदन्। के? अकूपारः=समुद्रः वीडहुराः=कालचक्रचालकाः.........इत्यादि।

इत्थं च सर्वैव रामायणीकथा सूक्ष्मदृष्ट्या ऋग्वेदेऽन्वेष्टुं शक्यत इति नीलकण्ठचतुर्धरसम्मतम्। अर्थात् यदपि रामायणे निगदितं तस्य बीजानि वेदेषु सन्ति। अतो रामकथाया वेदमूलकता सिद्धैव। तस्मात् रामकथामाश्रित्य यान्यपि काव्यानि नाटकानि वा सन्ति संस्कृते तानि सर्वाणि वेदैरेवानुप्राणितानि सन्तीति निश्चप्रचम्।

## भारवि-साहित्ये वैदिककवीनां जीवनप्रभावः

महाकविभारविसङ्ग्रथितं किरातार्जुनीयं नामाष्टादशसर्गात्मकं महाकाव्यं विश्वविदितमस्ति। तत्रायं महाकविर्वेदप्रामाण्याभ्युपगमरूपामीश्वरास्तित्व-स्वरूपां परलोकाङ्गीकारविग्रहाञ्चास्तिक्यबुद्धिं बिभ्राणो यदा महाकाव्यमिदं रचयामास तदा सुस्पष्टमेवैतत् यदस्य काव्ये वैदिकेन प्रभावेण भाव्यमेव, यतो हि पूर्वमुक्ता द्वितीया, तृतीया चास्तिक्यबुद्धिरन्ततः प्रथमाया वेदप्रामाण्यरूपाया आस्तिक्यबुद्धेरेव साक्षात्परम्परया वा विवर्तभूते। अतश्चास्मिन् महाकाव्ये किरातार्जुनीये वैदिकः प्रभावस्तत्र तत्रस्थले अलङ्कारादिमुखेन लक्ष्यत एव। तथा हि अपौरुषेयोऽयं वेदस्तैस्तै ऋषिभिर्दृष्ट इति सिद्धान्तोऽथर्ववेदस्य वशिष्ठदृष्टत्वमभिदधता महाकविना द्रढीकृतोऽस्मिन् पद्ये–

**"यम नियमकृशीकृतस्थिराङ्गः**
**परिददृशे विधृतां युधः स ताभिः।**
**अनुपमशमदीप्तता गरीयान्**
**कृतपदपङ्क्तिरथर्वणैव वेदः॥"**[२४]

अत्र 'कृतपदपङ्क्ति'रित्यस्य तात्पर्यं द्रष्टृत्व एव न रचितत्वे यतो हि येऽपि वेदस्य पौरुषेयत्वमास्थिषत तेऽपि तस्येश्वररचितत्वमेवाभिप्रयन्ति

२३. ऋ.-१०/१०९/१
२४. किरातार्जुनीये-१०/१०

न वसिष्ठादिरचितत्वम्। अतश्च मन्यतां वेदस्यापौरुषेयत्वमङ्गीक्रियतां तस्य पौरुषेयत्वमुभयथाऽप्यथर्ववेदस्याथर्वणवसिष्ठद्रष्टृत्वं तत्प्रवक्तृकत्वं वाऽव्याहतमेव। एतेन 'आख्या प्रवचनात्' इति जैमिनिवचनमप्यनुगतं भवति भारवेस्तु परमपुरुषकर्तृकत्वमेव वेदस्याभिमतं वर्त्तते, तथा च वर्णितमप्यनेन–

**"तरसा भुवनानि यो बिभर्ति**
**ध्वनति ब्रह्म यतः परं पवित्रम्।**
**परितो दुरितानि यः पुनीते**
**शिव तस्मै पवनात्मने नमस्ते।।"**[२५]

अत्र यद्यपि पवनात्मकत्ववर्णनप्रसङ्गाद् ब्रह्मशब्दो वर्णार्थक इति व्याख्यातं मल्लिनाथादिभिस्तथापि 'परं पवित्र'मिति विशेषण-साम्यात् समासोक्तिमुखेन 'ब्रह्म'शब्दस्य–

**"तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे।"**[२६]

**"अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः....।"**[२७]

इत्यादिश्रुत्यनुगतं वेदार्थकत्वमपि न विरुध्यते।

**"प्रसूतिमेनः प्रणुदां श्रुतीनाम्।"**[२८] इत्यत्राप्ययमेवार्थः प्रकटीकृतः।

एवमेव परमतत्त्वं, सजातीयविजातीयस्वगतभेदशून्यमिति, "एकमेवाद्वितीयम्", "द्वितीयाद्वै भयं भवति", "नेह नानाऽस्ति किञ्चन", "सर्वं खल्विदं ब्रह्म", "एकं सद्विप्रा बहुधा वदन्ति" इत्यादि श्रुतिसहस्रतात्पर्यविषयीभूतमद्वयं तत्त्वं किराते समाम्नातम्–

**"अविग्रहस्याप्यतुलेन हेतुना समेनभिन्नद्वयमूर्त्तितिष्ठतः।"**[२९]

एवमन्येऽपि वैदिकाः पक्षास्तत्रोपनिबद्धाः सन्ति, सर्वेषां समावेशोऽत्र दुःशकः। एतेनात्र महाकविभारविप्रणीतकिरातार्जुनीये महाकाव्ये ऋग्वैदिक–

---

२५. तत्रैव–८/३७
२६. ऋ.–१०/९०/९
२७. बृहदा.उप.–४/४/११
२८. किरातार्जुनीये–३/४
२९. तत्रैव–१८/३३

कवीनां जीवनप्रभावः कियानिति सुस्पष्टमावेदितम्भवति।

## कालिदासकृतिषु वैदिककवीनां जीवनप्रभावः

कालिदासप्रणीतेषु चतुर्षु रघुवंशकुमारसम्भवमेघदूतर्तुसंहारसञ्ज्ञकेषु काव्येषु, त्रिषु च शाकुन्तलविक्रमोर्वशीयमालविकाग्निमित्रनामधेयेषु नाटकेषु, सार्वत्रिकं वैदिककवीनां जीवनप्रभावमनुभवितुं प्रभवन्ति प्रतिभावन्तो भावकाः। कालिदासः श्रुतिस्मृत्यर्थतत्त्वज्ञः क्वचिदपि तद्हार्दं न प्रजहाति। रघुवंशस्य द्वितीये सर्गे द्वितीये च पद्ये, पत्युर्दिलीपस्य मार्गमनुसरन्तीं सुदक्षिणामुपमा-लङ्कृतीकुर्वता महाकविना–

**"मार्गं मनुष्येश्वरधर्मपत्नी श्रुतेरिवार्थं स्मृतिरन्वगच्छत्॥"**[30]

इत्युक्तम्। इयमुक्तिस्तस्य श्रुत्यर्थस्मृतितत्त्वज्ञत्वे स्फुटप्रमाणं द्योतयति। अपि च तत्रादौ, 'वागर्थाविवेति' मङ्गलपद्यादुपक्रम्य, शैशवेऽभ्यस्त-विद्यानामित्यादितो 'रघूणामन्वयं वक्ष्य' इत्यन्तं यावत् वागर्थवत्-सम्पृक्तजगन्मातापितृलक्षणं पार्वतीपारमेश्वरस्वरूपं स्वकाव्यपूर्णत्वोद्देश्यक-प्रयोजनप्रतिपिपादयिषया वागर्थप्रतिपत्तये प्रदर्श्य "यस्य निःश्वसितं वेदाः" इत्युक्त्या वेदप्रामाण्याभ्युपगन्तृत्वं परमेश्वरस्य वास्तविकत्वञ्च दृढीकृत्य शैशवाभ्यस्तविद्यात्वं यौवनविषयैषित्वं वार्द्धकमुनिवृत्तित्वं योगेनान्ते तनुत्यक्त्वञ्चेत्यादिवैदिकाचारनिदर्शनेन महाकविर्न केवलं वैदिकचिन्तनप्रभावं गृह्णाति प्रत्युत तद्ग्रहणार्थं संवेदिनो लोकाननुगृह्णाति। एवञ्च, निखिलेष्वपि प्रतिसर्गं तत्तद्विशिष्टवर्ण्यस्थलेषु वर्णाश्रमाचारतपोऽनुष्ठानविद्योपादान-प्रकृतिप्रधानगुरुशिष्यसन्निधानर्षिमुनिध्यानयज्ञादिविधिसंविधानवर्णनप्राचुर्येण कालिदासो वैदिकचिन्तनप्रभावभास्वरं स्वरं स्वरसं सरसञ्च स्वकीयकाव्येषु सुतरां समुन्मेषयतीत्यत्र नास्ति मनागपि संशीतिलेशः।

महाकवेः सर्वाः नायिकास्तपःप्रकृतिप्रधानाः, सर्वे नायकाश्च तादृशास्तपोव्रतिने विशुद्धान्तःकरणत्वात् स्वतःप्रमाणवादिनश्च प्रतितिष्ठन्ति। शृंगाररसे विप्रलम्भौपयिकदीर्घतरव्रतक्षीयमाणकाया उपचीयमानपारस्परा-निर्वचनीयप्रेमरसात्मयोगनिर्वृतिसुखानुभूतिकृतार्थजीवना नायका नायिकाश्च महाकविना परिकल्पिताः सन्तः सन्ति। पार्वतीशकुन्तलासुदक्षिणेन्दु-

---

३०. रघु.-२/२

मतीसीतोर्वशीमालविका यक्षिणी प्रभृतयो नायिकाः, परमेश्वरदुष्यन्त-दिलीपाजरामविक्रमाग्निमित्रयक्षाद्या नायकाश्च वैप्रलम्भिकतपोव्रतपूतान्तःकरणाः परस्परं प्रेमपरिपाकपराकाष्ठामासादयन्तीति प्रत्यक्षं तत्काव्यविदः सहृदयसुधियः संवेत्तुमर्हन्ति। उक्ततरूपरिपुष्टये पुष्कलान्युदाहरणानि कालिदासीयकाव्यसन्दर्भात्प्रस्तोतुं शक्यन्ते सचेतसश्च तन्मर्मवेदिनः स्वयमभ्यूहितुं शक्नुवते।

कालिदासः कालीप्रसादप्राप्तकवित्ववैदुष्यप्रकर्ष इति लोकविदितो-दन्तस्तेन तत्र तत्र शाक्तोपासना शैवाध्वसाधना च शैवागमप्रमाणपरिनिष्ठिता स्फुटीभवतीत्यप्यवधेयमवधानवद्भिः। तदीयं मेघदूताख्यं विश्वप्रसिद्धं खण्डकाव्यं तन्निदर्शनभूतमुद्भावितुं सुशकं निर्विशङ्कमिति किञ्चिदुदीर्यते–

**"कश्चित्कान्ता विरहगुरुणा स्वाधिकारात् प्रमत्तः**
**शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः।".........।"**[31]

इत्यस्मिन् मेघदूतस्य प्रथमे पद्ये 'कश्चिदिति' 'कान्तेति' 'गुरुणेति' 'स्वाधिकारेति' 'प्रमत्तेति' 'भर्तुरिति' 'यक्ष इति' 'आश्रमेष्विति' नानाविधानि शैवागमसाधनार्थद्योतकानि पदानि तद्रहस्यगर्भाणि तदीयान्तः शैवागमसिद्धान्तसारं सूचयन्ति। तत्रार्थोन्मीलनपराः श्लोकाः यथा–

**"कश्चित्साधको यक्षः पशुर्जीवः प्रियाप्तये।**
**तद्वियोगेन गुरुणा स्वाधिकारात्प्रमादतः।।**
**शापेन जीवभावेनाल्पज्ञत्वाद् भर्तृरूपताम्।**
**शिवतां शक्तिसंश्लिष्टामधिगन्तुं तपश्चरन्।।**
**अस्तङ्गतमहिम्नाऽसावाश्रमान्तर्वसँश्चिरम्।**
**साधनासिद्धये चक्रे रामाद्रिवसतिं निजाम्।।"**[32]

पद्येष्वेषु कश्चित्साधको यक्षः पशुर्जीवलक्षणः कान्तायाः=स्वात्मशक्तिस्वरूपायाः प्रियाया विरहेण=विशिष्टरहो ज्ञानिना गुरुणा स्वाधिकारात्=परमेश्वरप्राप्तेर्हेतोः प्रमत्तः=साधनाविष्ट आवेशितसाधनसम्पत्ति-प्रकृष्टसम्मदः सन् शापेन=क्लेशप्रदसङ्कीर्णजीवभावेनाल्पज्ञत्वाद् वर्षभोग्येण=

---

३१. मेघदूते-१/१

३२. स्फुट निबन्धः-डॉ. शिवजी उपाध्यायः

परिमितकालसाध्येन प्रयोगेण शक्तिसंश्लिष्टां विमर्शाख्यशक्तिसम्भृतां शिवतामधिगन्तुमाश्रमान्तर्वसन् चिरं तपश्चरँश्च स्वीयसाधनासिद्धये निजां वसतिं=साधनव्रतोपवासवासं रामाद्रेः साधनानुकूलरमणीयरामाख्यगिरेः सकाशं चक्रे=इत्येवमाद्यन्तं मेघदूतस्य शैवागमसिद्धान्तसाधनानुगतं तात्पर्यार्थं व्यङ्ग्यत्वेन तत्तत् प्रतीकोपन्यासमाध्यमेन महाकवेः साधनानिष्ठः प्रत्यय-स्तत्काव्यान्तर्निगूढो बोद्धव्यो विद्वद्विशेषज्ञैरिति। किञ्च, रघुवंशे पार्वती-परमेश्वरौ, कुमारसम्भवे गिरिदेवतात्मा (गिरीशः), ऋतुसंहारे अभ्युपशान्त-मन्मथो निदाघकालः (महाकालः), मेघदूते कश्चित् परम-शिवतादात्म्यसाधकः प्रभूभूष्णुः शाकुन्तले अष्टमूर्त्तिरीशः, विक्रमोर्वशीये स्थाणुर्मालविकाग्निमित्रे ईशश्चेति स्वकीयोपास्यपरमेश्वरस्य शिवस्य नानारूपाणि निरूपयन् महाकविः स्वस्य शैवागमसाधनानिष्ठत्वमवद्योतयति। 'आगमा निगमाद्भिन्ना' इत्युक्तेरागम- दर्शनं प्रायोगिकतन्त्रसाधनोपस्कृतं वैदिकचिन्तनप्रभावानुगुणं त्रैगुण्यविषयान् वेदान् अतीत्य निस्त्रैगुण्यस्वरूपाधिगमाय योगिभिः साधकैः स्थितप्रज्ञैर- ध्यवसीयते। यथोक्तं भगवता श्रीकृष्णेन–

**"त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन।।"**[३३]

शाकुन्तले नान्दीमङ्गलपद्ये **'या सृष्टिः स्त्रष्टुराद्येति'** निर्वर्ण्याष्ट-मूर्त्तेरीशस्य विश्वमूर्त्तिकरणं यादृशं महाकविना परिकल्पितं तादृशमिदं सम्पूर्णं ज्ञानकर्मोभयात्मकं वैदिकचिन्तनप्रभावचित्रणं गर्भीकृतमेवेति स्पष्टमवभासते। यथा हि सर्वत्र पारमेशविशेषवर्णनानुसन्धानं महाकविरातनोति तथैव तस्याद्या परमाशक्तिरपि तत्र तत्र नायिकात्वेनाध्यवसायिनिर्वर्णिता। महाकवेः श्रव्यदृश्यकाव्यगता प्रधाननायिका धातुराद्या सृष्टिरस्ति ततः पूर्वं धात्रा काप्यन्या स्त्री-सृष्टिर्न तथा कृतेति प्रायो निर्वर्णनान्महाकविना आद्यापराशक्तिरेव तत्र तत्र स्वकाव्यान्तर्नायिकान्तर्निविष्टा निर्दिष्टेति सुतरामवबोद्धुं पार्यते तद्विद्भिः।

**"अमीं वेदिं परितः क्लृप्तधिष्ण्याः**
**समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।**

---

३३. गीता–२/४५

**अपघ्नन्तो दुरितं हव्यगन्धै-**
**वैतानास्त्वां वह्नयः पावयन्तु।।"**[३४]

इत्यत्र महर्षिः कण्वः "ऋक्छन्दसाऽऽशास्ते" इत्युपक्रान्तत्वात् ऋक्छन्दः प्रतीकप्रतीकाशोक्त्या कालिदासस्यैव प्रतिनिधिः। अथवा महाकविरेवात्र कण्वात्मना स्वात्मनो मन्त्रद्रष्टृत्वलक्षणमृषित्वमुपपादयति। अत्र हि ऋक्छन्दः स स्वयमेवार्षदृष्ट्या साक्षात्कृत्य रचयाञ्चकारेति निर्विचिकित्समभिज्ञायते। अनेनैकेनेवच्छन्दसा ऋग्वैदिककवीनां जीवनप्रभाव-वैशिष्ट्यमस्य महाकवेः काव्येषु चतुरस्रमजस्रं प्रतिभातीति सप्रमाणं परिचीयते निश्चीयते चेति।

**अपरञ्च–**

**"इदं किलाव्याजमनोहरं वपुः**
**तपक्षमं साधयितुं य इच्छति।**
**ध्रुवं स नीलोत्पलपत्रधारया**
**शमीलतां छेत्तुमृषिर्व्यवस्यति।।"**[३५]

इत्यस्मिन् पद्ये शकुन्तलाया अव्याजमनोहरं यत्तपःक्षमं वपुः ऋषिः साधयितुमिच्छति तन्नीलोत्पलपत्रधारया शमीलताच्छेदनवदाश्चर्यकारीति सन्दर्श्य महाकविर्निसर्ग–सौन्दर्यस्य तद्गतलावण्यमसृणत्वाकर्षणस्य परावधिं निरूप्य लोकप्रसिद्धासिधाराव्रतापेक्षया तद्वपुषा नीलोत्पलपत्रधारयोत्प्रेक्षितेन शमीलताच्छेदनवैलक्षण्यं नितरामद्भुतमश्रुतपूर्ववर्णयदित्यनुमिन्वन्तु सुमनो-मनीषिणो मर्मज्ञाः।

इत्थञ्च वैदिककर्मकाण्डज्ञानकाण्डोभयविधचिन्तनस्य प्रभावो भूयस्तरां महाकविकालिदासकाव्येषु परिव्याप्तो विवेचनाग्रचञ्चुप्रवेशमात्रेणापि सन्दृश्यते सहृदयसुधीभिरित्यलं वाग्वितानेन।

**आधुनिकसंस्कृतसाहित्ये वैदिककवीनां जीवनप्रभावः**

---

३४. अभिज्ञानशाकुन्तले–४/८

३५. तत्रैव–१/१७

समकालिके संस्कृतसाहित्ये वैदिकं वाङ्मयं विषयीकृत्य विरचिताः सन्ति पण्डितैर्बहवः प्रबन्धाः। ललितसाहित्ये दृश्य-श्रव्यादिविविधविधात्मकेऽपि प्रतिफलिता दृश्यते वैदिकीप्रज्ञा, वैदिकीसंस्कृतिर्वेदानां प्रभावस्य च काव्यमयी कापि परिणतिः। रामकरणशर्म-रेवाप्रसादद्विवेदप्रभृतीनामाधुनिक-महाकवीनां खण्डकाव्येषु महाकाव्येषु वा या मङ्गलभावना ललितवचनविन्यास-मनोहरविग्रहा विलसति, सा वैदिकभावबोधस्यैवानुगुञ्जनं विधत्ते। स्थालीपुलाकन्यायेनैव काश्चनरचना अनया दृष्ट्याऽत्र विचार्यन्ते। एतासु वैदिकभावबोधोन्मीलनं याभिर्दिग्भिः समजनि, ता इत्थं सन्ति–

## १. वैदिकमन्त्राणां रचना

यथा कालिदासेन "अमीं वेदिं परितः क्लृप्तधिष्ण्या" इत्यादिमन्त्रस्य रचना विहिता, तथैव केचनाधुनिकसंस्कृतमनीषिणो वैदिकभाषया मन्त्ररचनां सम्प्रत्यपि कुर्वाणा लक्ष्यन्ते। नवीनवैदिकमन्त्राणां दृष्ट्त्वेन महाराष्ट्रियः श्रुतिपारदृश्वा महर्षिर्देवरातः सुविश्रुत एव। महामहोपाध्यायो रामावतारशर्माऽपि सद्यो वैदिकभाषया मन्त्रान् विरचयामासेति श्रूयते। राजस्थानीयेन धीमता श्रीमता नवलकिशोरकाङ्करेण राष्ट्रवेदो व्यरचि। तत्र एकादशसूक्तेषु वैदिकसंस्कृतेन गान्धि-नेहरू-इन्दिरा-कृषक-दिष्टादिष्टादिदेवानां स्तुतिर्विहिता। नववेदरचनसंरम्भोऽयं समीक्षित एव प्रागस्माभिः स्वकीये "संस्कृत-साहित्य-बीसवीं-शताब्दी" इति ग्रन्थे।

## २. उपनिषद्दर्शनस्य साक्षात् प्रतिपादनम्

मङ्गलदेवशास्त्रिणा स्वोपज्ञेऽमृतमन्थने वेदवारिधिमन्थनोत्थममृतं काव्यकलशे निधापितम्।

## ३. वर्तमानविसङ्गतीनां वैदिककालेन तुलनयोद्घाटनम्–

क्वचित्तु वैदिककालं वर्तमानकालञ्च तारतम्यदृशा समीक्षते कविः। तथाहि तत्र दिनेशचन्द्रो भारतगाथायां वैदिकीमुदात्तमामाधुनिकानां चाधः पतनं युगपन्निरूपयन्नाह–

**"पश्यन्नेतान् द्रुहिणमुखजान् वेदचर्चाविहीनान्**
**भिक्षाजीवान् श्रुतिविरहितान् ब्रह्मचर्यानभिज्ञान्।**
**वामासेवापहृतमनसः शोकमग्नो न कः स्यात्**
**तीर्थे काकानिव विचरतो नाममात्रेण विप्रान्॥"[३६]**

एतादृशाः प्रसङ्गा महादेवशास्त्रिणां भारतशतकेऽन्येष्वपि चाधुनिक-काव्येषु च समुन्मिषन्ति।

**४. प्रतीकात्मकसंविधानेन वैदिकभावबोधस्याभिव्यक्तिः—**

महामहोपाध्यायानां गङ्गाधरशास्त्रिणाम् 'अलिविलासिसंलापः' विगत शताब्द्याः श्रेष्ठरचनासु पदमर्हति। अत्र नवसर्गेषु कविना अलि-विलासि-हंसानां संवादैः समग्रस्य भारतीयतत्त्वचिन्तनस्य आश्च्योतनं निष्पीड्य काव्यगङ्गया प्रवाहितम्। "परोक्षप्रिया वै देवाः प्रत्यक्षद्विष" इति वेदोक्तिमनुसरता कविना गङ्गाधरशास्त्रिणा अत्राद्यन्तं नानाशास्त्रपुराणनिगमागमसम्मतं वस्तुतत्त्वप्रतिपादनमाद्यन्तं श्लेषनिर्वाहपुरस्सरं प्रसन्नगम्भीरयाप्यतितरां गूढार्थसमन्वितया शैल्या निर्व्यूढम्। अत्र अलिः वेदामृतपाननिरतः कश्चिन्मुनिरेव। विलासिनो विलासभावनां जुगुप्समानः तं प्रबोधयति—

**"अये विलासिन् न हि विद्यते मे रसालसालेऽभिनिवेशलेशः।**
**असक्तचेता जनकाननोद्यत्सर्वागमोत्थं रसमाद्रियेऽहम्॥**
**निरन्तरं माधवरम्यशोभानवावतास्तुतिक्लृप्तगीतिः।**
**स्ववर्ष्मणाविष्णुपदावलम्बी यायावरोऽरण्यचरो द्विजोऽहम्॥**
**सुहृद्यगन्धात् सुमनस्समूहात् समस्तदोषज्ञचिरप्रशस्तम्।**
**रसं रसायां मधुरञ्जनाय दातुं न दूष्यो मम पक्षपातः॥**
**अन्याविरोधेन सुमेषु सारं श्रमेण सम्पाद्य विमुक्तभोगः।**
**गिरावहन्निर्वृतये प्रकाश्य भूतोपकृत्यै भुवि पर्यटामि॥"[३७]**

अत्र जनानां काननेषु उद्यन्तो येऽगमाः वृक्षास्तेषां रसम्, जनकस्य विदेहस्य आननान्मुखान्निस्सरन्तो ये सर्वे आगमाः वेदास्तेषां रसमाद्रिये, विष्णुपदावलम्बीत्यत्र विष्णुपदं व्योम, नारायणचरणञ्च, सुहृद्यगन्धात्

---

३६. भारतगाथायाम्–५५ तमं पद्यम्
३७. अलिविलासिसंलापः–१/२५–२७

(रम्यगन्धयुतात्, मित्रे गर्वरहितात्) दोषज्ञो वैद्यः विद्वांश्च, गिरौ वाण्यां पर्वते चेति सर्वत्र द्व्यर्थैः पदैः रहस्यवस्तु प्रकटीकृतम्।

केशवचन्द्रः 'ऋतम्', 'ओम् शान्तिः' इत्यादि-स्वोपज्ञेषूपन्यासेषु प्रतीकात्मकैः संविधानैरभिव्यनक्ति वैदिकजीवनदर्शनम्। विशेषत उपनिषदां तत्त्वदर्शनम् निरूपितं तेन। पात्राण्यस्य कथासाहित्ये प्रायशोऽद्यतनानि। परन्तु दार्शनिकस्य कथाकारस्य अनुभूतिरङ्कुरयति परिणतौ औपनिषदं प्रज्ञापारिजातम्। तथैव सत्यप्रकाशसिंहस्य 'गुहावासीति' उपन्यासः कथाकारेण स्वसुहृदः ओमानन्दस्य अन्वेषणमिति वृत्तान्तं प्रस्तौति। कथाकार उत्तरभारते भ्रमन् हिमालयं प्राप्नोति, यत्र कस्याञ्चिद् गुहायां तदीयः सहपाठी ओमानन्दो वर्तते। अत्र गुहा उपनिषत्सु प्रतिपादिता मनोगुहा, ओमानन्दश्च प्रणवरूपः परमात्मेति प्रतीकात्मकोऽर्थः उपन्यासद्वारेण रमणीयतया उपन्यस्तोऽयमर्थः। अस्माभिरपि 'गीतधीवरनाम्नि' रागकाव्ये 'तण्डुलप्रस्थनाम्नि' दशाङ्के प्रकरणे चैवमेव प्रतीकसंविधानैः प्रत्यपादि आर्षं दर्शनम्।

**५. वैदिकपदावलीनां संस्कृतकाव्येषु सङ्क्रान्तिः**

अन्यच्छायायोनिषु समकालिकसंस्कृतकाव्येषु अनेकत्र वैदिक-मन्त्राणामुपनिषदां वा वचनानि वाक्यानि पदानि वा आम्रेडितानि। तद्यथा नर्मदा लहर्याम्–

> **"नो सद् बभूव किल नैव बभूव चासत्**
> **सृष्टिर्यदा न च समुल्लसिता पुराऽऽसीत्।**
> **निर्वात एव च समुच्छ्वसिति स्म चैकः**
> **शून्यस्य गह्वरगतस्तव वारिराशिः॥"**

पद्यमिदं ऋग्वेदस्य नासदीयसूक्तस्य पदावलीमाहृत्य नर्मदाया आनन्त्यमनादित्वञ्च प्रतिपादयितुं कल्पितम्। 'धरित्रीदर्शनलहरीकाव्ये' विमानाद् धरां विलोकयन् कविः अथर्ववेदस्य पृथिवीसूक्तं ऋग्वेदस्योषस्सूक्तं वा स्खलन्मनोहरैर्जल्पितैरनुवदति। तथाहि विमानावतरणं निरूपयन्नाह–

> **"भास्वद्भानोः प्रविततनभोमण्डलैस्तैः कराग्रै-**
> **रामृष्टेव प्रतिदिनमसौ बुध्यते त्यक्तनिद्रा।**

अद्याप्येषा भ्रमति भुवने भूर्भवन्ती सुभव्या
नूत्नैवास्ते पुनरपि पुनर्जायमाना पुराणी॥
एषा शुभ्रां तनुमिह शुभां संविदाना विभाता
स्नाता चोर्ध्वं सरसि रमणी दृष्टये ज्योतिषाऽगात्।
मुञ्चन्त्यस्या अलकनिचयश्चूर्णिता बिन्दुधारां
शष्पश्यामाच्छिखरनिकरात् स्यन्दमानैः प्रपातैः॥
यस्यां पूर्वे प्रथितयशसश्चक्रिरे विक्रमांस्ता-
नर्वाचीना निदधति कलाकौशलं ज्ञानसत्रम्।
सा नः क्षेमं वितरतु धराऽऽराधिता रत्नगर्भा
मातृभूमिर्विनततनयः सोऽस्मि चास्या धरित्र्याः॥"

**६. वैदिकसाहित्यस्य लौकिकसंस्कृतेऽनुवादाः तदुपजीविता वा रचनाः**

यद्यपि पाणिनिना या भाषेति कथिता, तस्याश्च वैदिक-संस्कृतस्य च न मूलतः कश्चन विशेषः, एकैव वाणी तत्र शैलीभेदेन द्विधा विभक्ता; तथापि वैदिकं संस्कृतं न तथा सहजतया सरलतयाऽवगम्यते सम्प्रति यथा लौकिकी भाषेति कृत्वा कैश्चन कविभिः वैदिकसूक्तानामप्यनुवादाः लौकिकसंस्कृते शार्दूलविक्रीडितादिभिश्छन्दोभिर्विहिताः। सागरीयः प्रेमनारायणो द्विवेदी अथर्ववेदस्य पृथिवीसूक्तं ऋग्वेदस्य उषःसूक्तमेवमेवान्यानि च बहूनि सूक्तानि सरसैरनुवादसन्दर्भैः प्रस्तुतवान्।

अन्यैः पुनः पण्डितैर्वैदिकसूक्तधारामवगाह्य तस्या एवानुवचनं नवीनरचनाभिः प्रस्तुतम्। तद्यथा-पञ्चाम्बुप्रदेशवास्तव्येन सन्तरामशास्त्रिणा "ऋग्वेदमन्त्रात्मकं काव्यम्", "यजुर्वेदमन्त्रात्मकं काव्यम्"-इति काव्यद्वयं प्रणीतम्।

एका कविता 'वेदवाणीं नुम' इति। अस्यां वैदिककवीनां जीवनप्रभावस्य केचिद् आयामाः संकेतिताः सन्ति। यथा-

ऋग्वेदस्य दशममण्डलस्य चतुस्त्रिंशत्तमे सूक्ते अक्षक्रीडां परित्यज्य कृषिं कर्तुं मानवः प्रबोध्यते-

**"अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः।**
**तत्र गावः कितवः तत्र जाया तन्मे विचष्टे सवितायमर्यः॥"[३८]**

---

३८. ऋ.-१०/३४/१३

इदं जीवनमूल्यमद्यत्वे स्वीयां प्रासङ्गिकतां सविशेषं प्रतिपादयति यदा सहस्रशो हि जना 'लाटरी' प्रभृतिषु द्यूतभेदेषु स्वधनं नाशयन्ति परिवारं च दुःखाकुर्वन्ति। 'अक्षैर्मा दीव्यः' इत्यस्य चिन्तनस्यानुपालनं साम्प्रतिकसमाजाय शिक्षयति पद्यमिदम्–

**"मा जलानां तरूणां च हिंसां कुरु**
**द्यूतखेलां परित्यज्य कर्षं कुरु।**
**मानवं या दिशन्ती, श्रुतिं तां मुदा**
**वेदवाणीं नुमो वेदवाणीं नुमः॥"[३९]**

अपरस्मिन् पद्ये कविः सहयोगस्य संवादस्य मनसः शिवसङ्कल्पस्य च कामनां करोति–

**"स्याम एकत्रिताः संवदध्वं समे**
**मानसं शैवसङ्कल्पपूतं भवेत्।**
**प्रेरणेयं यदीयास्ति तां पावनीं**
**वेदवाणीं नुमो वेदवाणीं नुमः॥"[४०]**

पद्येऽस्मिन् ऋग्वेदस्य–

**"सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे सं जानाना उपासते॥"[४१]**

**"यज्जाग्रतो.............शिवसङ्कल्पमस्तु।"[४२]**

मन्त्राः सङ्केतिताः सन्ति।

इत्थं परवर्तिसंस्कृतसाहित्ये विविधाभिर्दिग्भिः विविधैर्वा वातायनैः प्रविशति प्रवहति च प्राणवायुरिव वेदवायुरिति दिक्।

---

३९. वेदवाणी नुमः
४०. तत्रैव
४१. ऋ.सं.-१०/१७१/२-३
४२. यजु.सं.-३४/१-६

# उपसंहारः

वेदाः स्वकीयज्ञानविज्ञानमयस्वरूपप्रवर्त्तकत्वात् सर्वेषु शास्त्रेषु वरीवर्तन्ते। परमेशावतारभूतानामृषीणामन्तःकरणे परमात्मनो निःश्वासभूता इमे वेदमन्त्राः काले-काले स्वयमेवाविर्भूताः भवन्ति। ऋषयस्तान्मन्त्रान् कर्णाभ्यां श्रुत्वा तेषामर्थरूपान् स्वरूपान् स्वप्रातिभचक्षुषा याथातथ्येनाव-लोकितवन्तस्तस्माद्वेदानामर्थस्वरूपदर्शनादिमे ऋषय इत्युच्यन्ते। मन्त्रद्रष्टृत्वमेव ऋषित्वे प्रधानं लक्षणमिति ऋग्वैदिकमन्त्रवर्णादवगम्यते। यथा- **"ऋषिर्विप्रः काव्येन"**[1] इति। लोके चैतद् वचनं प्रसिद्धं यत्- **'यस्य काव्यं स कविः'** इति। तेनेदं स्फुटमेव यदृषय एव कवयः। विषयेऽस्मिन् श्रौतवचनमपि प्रमाणरूपेणोपस्थाप्यते- **"एते वै कवयो (विप्राः) यदृषयः"**[2] इति। तच्च दर्शनं मानसिकम्भवतीति सर्वैरङ्गीक्रियते। ऋषिभिर्यद्दृष्टं तस्य दृष्टस्य तत्त्वस्य प्रकाशनं येन शब्देन कृतं तच्छब्दसमूहो वेद इत्यपरपर्यायेण वक्तुं शक्यते।

**'ऋषयो मन्त्रद्रष्टारः'** इत्यादिना यास्कवचनेन चापि विप्रविशेषाणामेव मन्त्रकृतामृषित्वेन प्रतिपादनं भवति। ते च ऋषयो द्विधा प्रतिपाद्यन्ते। केचिदतिप्राचीनाः साक्षात्कृतधर्माणः, परे त्वनतिप्राचीनाः असाक्षात्कृतधर्मेभ्यो विधेयेभ्यः काले-काले उपदिष्टाः परम्परया पारायणादिप्रचारेणावस्थिता आसन्। तेषामतिप्राचीनानामवरकालिकानामृषीणाञ्च विषये स्वयमृग्वेदो वदति-

**''अग्निः पूर्वभिर्ऋषिभिरीड्यो नूतनैरुत। स देवाँ एह वक्षति॥''**[3]

---

1. ऋ.सं. - 8.79.1
2. श.प.ब्रा. - 1.4.2.7,8
3. ऋ. सं. - 1.1.2

अर्थादग्निः पुरातनैर्ऋषिभिस्स्तुत्यः नूतनैश्च ऋषिभिस्स्तुत्योऽस्ति। तेनेदं स्फुटं यद्ये ऋषयः साक्षारत्कृतधर्माणस्तेऽतिप्राचीनाः, तैः साक्षात्कृतधर्मभ्य ऋषिभ्यो ये समुपदिष्टास्ते अवरकालिका इति ख्याताः। अतिप्राचीनै-र्ऋषिभिर्यदुपदिष्टं तद्ब्रह्मतत्त्वोपदेशभूताः मन्त्राः वेदा इत्येव कथ्यन्तो। ते च वेदाः स्वरूपभेदात्त्रिविधाः, किञ्च संहिताभेदाच्चत्वारः सन्ति। आदौ वेद एक एवासीत्, परमनन्तरेषु कालेषु बहुशाखात्वमापन्नः। महर्षिणा पतञ्जलिना वेदशाखानामुल्लेखः कृतस्ते यथा–

''एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः,एकविंशतिधा बाह्वृच्यं, नवधाऽथर्वणो वेदः।।''[4]

सम्भवति यत्पतञ्जलिसमये एतावत्यः शाखाः समुपलब्धाः स्युः। परमद्यत्वे त्वल्पा एव वेदशाखाः समुपलभ्यन्ते। अनेन प्रतीयते यत् तैत्तिरीब्राह्मणे यदुक्तं– **"अनन्ता वै वेदा"**[5] इति तदनुसारमनेकाः शाखाः वेदानां प्रचलिता आसन्। गच्छता कालने तासां शाखानां लोपः सञ्जातस्तस्मात्पतञ्जलिकाले एकत्रिंशदुत्तरैकसहस्रशाखा एवोपलब्धाः, साम्प्रतं ततोऽप्यल्पा एव शाखाः समुपलब्धाः भवन्तीति।

उपलब्धासु शाखासु, समुपलब्धब्राह्मणारण्यकोपनिषत्सु च ये विषयाः प्रतिपादिताः सन्ति तेऽस्माकं समक्षमुपस्थिता भवन्ति। उपलब्धानां समस्तशाखानां ब्राह्मणारण्यकोपनिषदाञ्चाध्ययनं सर्वाङ्गतया न केनापि मानवेनास्मिञ्जन्मनि कर्तुं शक्यते। अत एवाद्यतनीयविद्यालयीय-महाविद्यालयीयविश्वविद्यालयीयपाठ्यक्रमेषु एकैकस्याः शाखायाः पृथक्-पृथक्पाठ्यक्रमं निर्मायाध्यापनव्यवस्था कल्पिताऽस्ति। न तेन वेदानां सर्वाङ्गीणमध्ययनं कथमपि सम्भवति। अतो गुरुकुलपरम्परया कस्याश्चि-देकस्याः शाखायाः सम्यगध्ययनानन्तरमुच्चशिक्षामवाप्य स्वाध्यायविधिनैव यदि कदाचित्कासाञ्चिदन्यशाखानामवलोकनं भवति तदेवालम्भवति।

4. महाभाष्ये - 1.5
5. तैत्तिरीयब्राह्मणे 3/10/11/3-4

कस्यचिदेकस्य विषयस्यानुसन्धानाय कदाचिदेव काश्चिच्छाखाः ब्राह्मणारण्यकोपनिषद्ग्रन्थाश्चावलोक्यन्तेऽस्माभिस्तेनेदं ज्ञायते यदस्माकमृषयो जगज्जातानाम्मानवानां हितसाधनाय, न केवलं मानवानामेवापितु समस्त-चराचरप्राणिनां कल्याणाय कीदृशं चिन्तनं कृतवन्त इति।

विषयस्य गाम्भीर्यं विलोक्य क्षुद्रबुद्धयस्तु दूरादेव पलायनं कुर्वन्ति, परं ये जिज्ञासवः सन्ति त एवाध्ययनाध्यापनादिना विषयगततथ्यानामालोडनं कृत्वा यथायथं तत्त्वञ्चावगाह्य किञ्चिन्नूतनदृष्ट्या तेषां परिपाकं विधाय क्वचित्किञ्चिदुपदिशन्ति। तैरेवोपदेशवाक्यैरस्माकं ज्ञानबर्द्धनं जायत इति सिद्ध्यत्येव। अस्माकं ये आचार्याः अभूवन् तैर्यदनुभूतं, यच्चाधीत्य किमपि नवनीतात्मकमनुसन्धानं कृत्वा कस्मिंश्चिद् ग्रन्थे यत्किमप्युल्लिखितं तेनैव वयं शास्त्रज्ञानं प्राप्नुमः। अतस्तेषामाचार्याणां कार्तज्ञ्यं ज्ञापयन् महामोदो जायते मनसि।

यद्यपि ग्रन्थोऽयं वैदिकऋषिदृष्टिसमीक्षेति विविधविदुषामाचार्याणां शोधदृष्टेः सङ्कलनरूप एवास्ति। विद्वद्भिरस्मिन्विषये यत्र-यत्र यद्यदुक्तं ततस्ततो विषयाः सङ्कलीकृत्यात्रानुबन्धिताः सन्ति। अतो नैके विद्वांसो ग्रन्थस्यास्य कर्त्तारो वर्तन्ते। न च केवलं मदीयैव मतिरत्र सन्निहिताऽस्ति। अत एव तेषां कृतभूरिपरिश्रमाणां विदुषां समीक्षाचक्रवर्ति म.म.पं. मधुसूदनशर्मणां, वेदवास्पातिः पं. श्रीमोलीलालशास्त्रिवर्याणां, पं. श्री गिरिधरशर्माचतुर्वेदिनाञ्च पादपद्मयोः भूयो भूयः प्रणामाञ्जलिं समर्पयामि। यतस्तेषामेव विचारा अत्राधिक्येन सङ्कलितास्सन्ति।

प्रथमेऽध्याये "परमात्मनोऽवतारभूताः कवयः" इति शीर्षके विशेषरूपेण पं. मधुसूदनशर्मणां विचाराः "महर्षिकुलवैभवतम्" नाम्नि ग्रन्थे यथोपलब्धास्तथैवात्रोपस्थापिताः सन्ति। तत्र विशेषेण ऋषिशब्दस्य चतुष्टयी प्रवृत्तिस्तैः प्रदर्शिता असल्लक्षणा, रोचनालक्षणा, द्रष्टृलक्षणा, वक्तृलक्षणा चेति। आसां प्रवृत्तीनामाधारेण ते कवयः परमात्मनोऽवतार-भूतास्सन्ति इति मया प्रतिपादितम्।

द्वितीयेऽध्याये "वैदिकऋषीणां त्रिगुणात्मिका दृष्टिः" शीर्षके कामस्य, तपसः, श्रमस्य च निरूपणं यथा समीक्षाचक्रवर्तिना कृतं तदत्रोपस्थाप्य वैदिकऋषीणां त्रिगुणात्मिका दृष्टिर्मया यथाज्ञानं प्रतिपादिता।

तृतीयेऽध्याये "वैदिकऋषीणां तात्त्विकी दृष्टिः" शीर्षके महर्षिकुलवैभवम् ग्रन्थस्य प्रस्तावनायां गिरिधरशर्मचतुर्वेदिना यदुक्तं तेदवोपस्थापितमस्ति। तेनेदं साधितं यत्कवीनां वैदिकतत्त्वज्ञानात्मिका दृष्टिः कथमुन्नता आसीद्यदद्य ह्रासतां गता? इत्येव मनसि विचार्य किञ्चिद्विवृतम्।

चतुर्थेऽध्याये "वैदिकऋषीणां वैज्ञानिकी दृष्टिः" शीर्षके ये वैज्ञानिकाः सिद्धान्ताः वेदेषु ऋषिभिः प्रतिपादितास्तेषामीषत् प्रदर्शनं कृत्वा तदानीन्तनस्योन्नतवैज्ञानिकचिन्तनस्यैकं दृश्यं समुपस्थापितमस्ति।

पञ्चमेऽध्याये "वैदिकऋषिभिर्जगतो मूलकारणस्यान्वेषणम्" शीर्षके समीक्षाचक्रवर्तिनां मधुसूदनशर्मणां विचाराः, पं. मोतीलालशास्त्रिणाञ्च विचाराः समाहृत्य विविधप्रपञ्चात्मकविषयाणामत्र सन्निवेशनं कृत्वा प्रतिपादनं विहितमस्ति।

षष्ठेऽध्याये "वैदिकऋषीणां सांस्कृतिकं प्राकृतिकं दार्शनिकञ्च जीवनम्" शीर्षके विविधविदुषां सम्मतिरत्रोपस्थापिताः। तेनेदं साधितं यत्तेषां कवीनां जीवनं कीदृशं महत्त्वपूर्णमासीदिति।

सप्तमेऽध्याये "वैदिकऋषीणां काव्यात्मकं जीवनम्" शीर्षकेऽपि तथैवालंकारशैली-रस-सौन्दर्यादिविषयाणां तथा सङ्कलनमस्ति यथा साहित्यिक-दृष्ट्या भवितव्यमिति।

अष्टमेऽध्याये "वैदिकऋषीणां लोककल्याणात्मिका दृष्टिः" शीर्षके धर्मार्थकाममोक्षाणां पुरुषार्थानां निरूपणं कृत्वा साधारण-विशेष-आसाधारण-आपद्धर्माणाञ्च संक्षिप्तं विवरणं प्रस्तुतम्।

नवमेऽध्याये "परवर्तिसंस्कृतसाहित्ये वैदिकऋषीणां जीवनप्रभावः" शीर्षके प्रकीर्णविषयाः प्रतिपादिताः सन्ति। तत्राप्यनेकेषां विदुषां विचाराणामनुशीलनानाञ्च सङ्कलनं कृतमस्ति।

अनेन संकलनात्मकग्रन्थेन पृथक् पृथक् ग्रन्थेषु, पत्रिकासु, निबन्धेषु च प्रतिपादितानां विषयाणामेकत्र समावेशो जातो येनास्य वैदिककवि-दृष्टिविषयस्य परिपूर्णता सेत्स्यतीति मन्येऽहम्।

इत्थमेषो ग्रन्थो गवेषकेभ्यः संस्कृतच्छात्रेभ्यो विद्वद्भ्योऽनुशीलन-कर्मनिरतेभ्यो जिज्ञासुभ्यश्च कृते महदुपकारको भविष्यतीति चिन्तयित्वैव सङ्कलनं मया विहितम्। यद्येषा कृतिर्विदुषां सन्तोषायालं भवेच्चेन्मदीयः परिश्रमः सार्थक इत्यलमतिविस्तरेण।

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।**
**हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥**
**कृतिर्ममैषा शुभतामुपेयादित्यर्थ्यते दाशरथिर्विभूत्यै।**
**यथा धरैषा नवकौमुदीव सौभाग्यदात्री शुभदा भवेन्नः॥**

# सन्दर्भग्रन्थानां सूची


| क्रम | ग्रन्थनाम | लेखकः/भा. | प्रकाशनम् | वर्षम् |
|---|---|---|---|---|
| 1. | ऋग्वेदसंहिता | मूलमात्रम् | नागप्रकाशकः दिल्ली | 2000ई. |
| 2. | ऋग्वेदसंहिता | शिवनाथ आहिताग्निः | नाग-प्रकाशकः दिल्ली | 1991ई. |
| 3. | ऋग्वेदसंहिता | सायणाचार्यः | वैदिकसंशोधनमण्डल पूना | 1979ई. |
| 4. | ऋग्वेदसंहिता | सातवलेकरः | स्वाध्याय मण्डल,पारडी | 1971ई. |
| 5. | ऋग्वेदभाष्यभूमिका | सायणाचार्यः | चौखम्बा विद्याभवन, वाराणसी | 1968ई. |
| 6. | अथर्ववेदसंहिता | सायणाचार्यः | वि.वै.शो. संस्थानम् होशियारपुरम् | 1961ई. |
| 7. | अथर्ववेदसंहिता | दामादोर सातवलेकर | स्वाध्यायमण्डल पारडी | 1971ई. |
| 8. | अथर्ववेदसंहिता | मूलमात्रम् | नागप्रकाशकः दिल्ली | 2003ई. |
| 9. | शु.य.संहिता | उव्वट-महीधरः | मोतीलालबनारसीदास | 1971ई. |
| 10. | शु.य.संहिता | सातवलेकरः | स्वाध्यायमण्डल, पारडी | 1985ई. |
| 11. | शु.य.संहिता | मूलमात्रम् | नागप्रकाशक दिल्ली | 1997ई. |
| 12. | सामवेदसंहिता | सायणाचार्यः | मुन्शीराम मनोहरलालपब्लिशर्स | 1983ई. |
| 13. | ऐतरेयब्राह्मणम् | सायणाचार्यः | नागप्रकाशकः दिल्ली | 1991ई. |
| 14. | मा.शतपथब्राह्मणम् | सायण एवं हरिस्वामी | नाग प्रकाशक दिल्ली | 1990ई. |
| 15. | मा.शतपथब्राह्मणम् | ब्रजविहारीचौवे | भारतीय विद्या प्रकाशनम् | 1994ई. |
| 16. | मा.श.प.ब्राह्मणम् | मोतीलालशास्त्री | राजस्थान पत्रिका प्रकाशनम् | अज्ञात |
| 17. | तै.ब्राह्मणम् | सायणाचार्यः | चौखम्बा संस्कृत सीरीज वाराणसी | 1991ई. |

| | | | |
|---|---|---|---|
| 18. कण्वशतपथब्राह्मणम् | सी.आर. स्वामिनाथन् | इन्दिरागाँधीनेशनलसेन्टर फॉर द आर्ट्स | 1997ई. |
| 19. गोपथब्राह्मणम् | क्षेमकरणदास त्रिवेदी | विष्णुप्रेस कतुआपुरा वाराणसी | 1977ई. |
| 20. कात्यायानश्रौतसूत्रम् | विद्याधर शर्मा | चौखम्बा संस्कृत प्रतिष्ठानम् | 1990ई. |
| 21. कात्यायनज्ञपद्धति-विमर्शः | डॉ. मनोहर लाल द्विवेदी | राष्ट्रिसंस्कृतसंस्थानम् | 1998ई. |
| 22. ताण्ड्यब्राह्मणम् | सायणाचार्यः | चौखम्बा संस्कृतसीरीज वाराणसी | 1991ई. |
| 23. निरुक्तम् | यास्कः मुकुन्दझाबख्शी | मेहरचन्द लक्ष्मणदास दिल्ली | 1982ई. |
| 24. ब्रह्मसिद्धान्तः | श्री मधुसूदन ओझा | राजस्थान पत्रिका प्रकाशनम् | 1990ई. |
| 25. ब्रह्माविज्ञानम् | श्री मधुसूदन ओझा | राजस्थान पत्रिका प्रकाशनम् | 2044 संवत् |
| 26. महर्षिकुलवैभवम् | श्री मधुसूदन ओझा | राजस्थान पत्रिका अन्वेषण मन्दिर | 2013 संवत् |
| 27. वैदिकविज्ञानम् | श्री मधुसूदन ओझा | राजस्थान पत्रिका अन्वेषण मन्दिर | अज्ञात |
| 28. विज्ञानविद्युत् | श्री मधुसूदन ओझा | राजस्थान पत्रिका प्रकाशनम् | 1990 |
| 29. वैदिकवाङ्मय-स्येतिहासः | आ.जगदीश चन्द्रमिश्रः | चौखम्बा सुरभारती प्रकाशनम् | 1989 |
| 30. मीमांसान्यायप्रकाशः | सारविवेचनी व्याख्या | काशी संस्कृत सीरिज | 1925 |
| 31. मनुस्मृतिः | कुल्लूकभट्ट | चौखम्बा संस्कृत संस्थानम् | 2039 संवत् |
| 32. वेदार्थपारिजातम् | करपात्रस्वामी | ताराप्रिंटिंग वर्क्स वाराणसी | 1979ई. |
| 33. वेदधर्मव्याख्यानम् | श्रीमोतीलाल शास्त्री | अज्ञात | 1990 संवत् |
| 34. वेदान्तसिद्धान्त-मुक्तावली | प्रो. लक्ष्मीश्वर झा | नागप्रकाशक दिल्ली | 1996ई |